॥ श्रीगणेशायनमः ॥ ॥ ॐनमश्चंडिकायै ॥ ॥ ब्रह्मायस्यैहरिर्यस्यैरुद्रोयस्यैव्यधान्नमः ॥ नमस्तस्यैनमस्तस्यै नमस्तस्यै नमोनमः ॥ १ ॥ अव्युत्पन्नमुखांधकूपपतितागावो मुनेः खिद्यन्ते ताः प्रोद्धर्तुमहो यतध्वमभितः स्वन्वार्थवत्सोत्सुकाः ॥ सूत्रैः पाणिनिसंभृतैरगतितरामाकृष्यमाणाः पुनस्ता वः कामदुघाभवंत्यपितमस्तोमद्विषः सत्विषः ॥ २ ॥ ऐश्वर्यीहीपदभावितंजगदद‌ः स्रष्टुंस्वयंरक्षितुंसंहर्तुंसमयेक्षमाभयमयींब्राह्मीश्रियंचंडिकाम् ॥ आराध्यादिमशक्तिमार्तिदमनींश्रीतोमरः शंतनुर्मार्कंडेयपुराणसिद्धमहिमाव्याख्यां विचिख्यासते ॥ ३ ॥ मार्कंडेयपुराणोक्तंदेवीमाहात्म्यमद्भुतम् ॥ अल्पाक्षरमनल्पार्थमपपाठपराङ्मुखम् ॥ ४ ॥ शुभंयुः शंतनुःशंयुः सत्कीर्तिस्तोमरान्वयः ॥ व्याकरोतिपराकृत्यकुव्याख्यानपरंपराम् ॥ ५ ॥ ॐनमश्चंडिकायै ॥ अवतीत्युपासकम् अवतिब्रह्मवेति विगृह्य । अवरक्षणादौ । अवतेष्टिलोपश्चेतिमन्प्रत्ययः । तस्यप्रत्ययस्यैवटिलोपः नप्रकृतेः । अन्यथाह्मिमडिन्त्येवविदध्यात ॥ ज्वरत्वरेत्यादिनावकारस्योपधायाश्चऊठौद्वयोरूठोः सवर्णदीर्घत्वेसार्वधातुकार्धधातुकयोरितिगुणः ॥ कृन्मेजंतइत्यव्ययत्वमोम् । ओमित्यनुमतौप्रोक्तंप्रथमेवाप्युपक्रमे ।ओमित्येकाक्षरंब्रह्मसर्वमंत्राधिदैवतम् । गुर्वादिभजनेदानेनमःस्यात्काप्यनादरे॥ चतुर्थीस्यान्नमोयोगान्नमःस्वस्त्यादिसूत्रतः॥ चंडिकायै चंड तेकुप्यतेचंडाचंडीच ॥ चंडैवचंडिकाकोपना।बह्वादिभ्यश्चेतिवाङीष्।केणइतिह्रस्वः।कुत्सिताशत्रुभिर्निंदितेतिसंज्ञायांकन्॥अथवाह्रस्वादीर्घविलक्षणाकारासूक्ष्म

## ॐ नमश्चंडिकायै ॥ मार्कण्डेयउवाच ॥ सावर्णिःसूर्यतनयोयोमनुःकथ्यतेऽष्टमः ॥ निशामयतदुत्पत्तिंविस्तरगद्गदतोमम ॥ १ ॥

रूपतयादुरधिगमत्वात्संज्ञायांकन् ॥ अथवाचंडउग्रःतस्यस्त्रीचंडीपूर्ववत्संज्ञायांकन् ॥ अथवा चंडतेचंडिका।ण्वुल्।युवोरनाकौ।प्रत्ययस्थात्कात्पूर्वस्यातइदाप्यसुपइतिइत्वम्॥ मार्कंडेयउवाच॥कडिमदे॥मृगवत्कंडतेयोगान्मायतिमृकंडुः।मृकंड्वादयश्चेत्युः॥ मृगान्कंडयतिमदयतिवामृकंडुःमृगस्येवास्यकंडुरितिवा।पृषोदरादित्वात्साधुः ।वर्णागमोवर्णविपर्ययश्चद्वौचापरौवर्णविकारनाशौ।धातोस्तदर्थातिशयेनयोगस्तदुच्यतेपंचविधंनिरुक्तम् ॥मृकंडोरपत्यंपुमान्मार्कंडेयः । शुभ्रादिभ्यश्चेत्यपत्येढक्प्रत्ययः।किति चेत्यादिवृद्धिः । ढ्लोपोऽकद्र्वाः इत्युकारलोपः।ढस्यएयादेशः ॥ उवाचऊचिवानस्वशिष्यायाष्टममनूत्पत्तिहेतुमुक्तवानितियावत॥इहखलुब्रह्मकल्पेचतुर्दशमनवःक्रमशःक्रमंते ।तद्यथा।स्वायंभुवोमनुःपूर्वततःस्वारोचिषोमनुः । औत्तमस्तामसश्चैवरैवतश्चाक्षुषस्तथा।षडेतेमनवोतीताअथवैवस्वतोमनुः।सावर्णिःपंचरौच्यश्चभौत्यश्चागामिनस्त्वमी ॥ तत्रसवर्णायाःसंबंधिनःसुताःपंचापिसावर्णाःसावर्णयोमनवःकथ्यंते ॥ ततश्चस्वायंभुवाद्याःषट्सप्तमोवैवस्वतःअष्टमःसावर्णिः नवमोदशमएकादशोद्वादशश्चसावर्णयएव । त्रयोदशोमनुःरौच्यःचतुर्दशस्तुमनुर्भौत्यः॥इतिचतुर्दशमनवः॥ तत्रअष्टमस्यमनोःसावर्णेरुत्पत्तिंस्वशिष्यायवेदयितुंप्रस्तौतिमार्कंडेयोभगवान॥वृणोतिव्रियतेवर्ण्यतेचवर्णनंवर्णः ।वर्णोद्विजादौशुक्लादौस्तुतौवर्णंतुचाक्षरे ॥ वर्णेनस्तुत्यासहवर्तमानासवर्णा।अथवा आत्मभर्त्रासवित्रा समानोवर्णोयस्याःसासवर्णा।सवर्णायाःअपत्यंपुमान्सावर्णिः । स्त्रीभ्योढक्बाधित्वाबाह्वादिभ्यश्चेति

इञ्प्रत्ययः ॥ सावर्णाः पंचेतितुप्रयोगः संबधविवक्षया दाशरथोरामइतिवद्दंतोज्ञेयः ॥ सूर्यस्यतनयः ॥ सकतमोमनुरित्यपेक्षायामाह । योमनुःकथ्यतेष्टमइति ॥ यच्छब्दे
नोच्यतेयोर्थस्तच्छब्दस्तस्यवाचकः । यःपुराणज्ञैर्वैवस्वतमनोःसप्तमादनन्तरं सूर्यतनयःसावर्णिर्नाममनुःकथ्यतेसोष्टमोमनुर्भविष्यतीत्यर्थः । अष्टमत्वंविधेयम् ॥ सावर्णिरष्टमोमनु
रित्येवोक्तेसवर्णायाः प्रागुक्तसामान्यव्युत्पत्त्यातादृश्याः अन्यजोपिकश्चिन्मनुःस्यात् । अतउक्तंसूर्यतनय इति । सूर्यतनयोष्टमोमनुरित्येवोक्तेछायासुतोपिसूर्यतनयःशनैश्चरोमनुः
स्यात् ॥ अतउभयमुक्तंसावर्णिः सूर्यतनयइति ॥ तस्यसावर्णेरष्टममनोरुत्पत्तिंविस्तराच्छब्दप्रपंचनातगदतोममसुखंवासंमुखंनिशामयहेशिष्यदत्तावधानःसन् श्रृण्वेत्यर्थः ॥ निशामय
श्रृणिवतितुकुल्याख्यानम् । तथाहि । शमउपशमे दिवादिः । शमलक्षआलोचनेचुरादिः । आद्यांयथायोगंणिचिअतउपधायावृद्धौ । शमोऽदर्शने । शमोणौदर्शनादन्यत्रार्थेमि
त्संज्ञोभवति । अमंतत्वादेवमित्त्वमिद्धौनियमार्थोयंयोगः । मितांह्रस्वः । शमयतिव्याधिंनिवर्तयति । निशामयेतिश्लोकाञ्छृणोति ॥ दर्शनेतुमित्वाभावाद्ध्रस्वत्वाभावादत
उपधायावृद्धिरेव ॥ निशामयतिरूपंचक्षुषारूपंपश्यतीत्यर्थः ॥ निःशर्करमिदंतीर्थंभारद्वाजंनिशामय । चक्षुषापश्येत्यर्थः ॥ तथाचदुर्घटः । निशामयतदुत्पत्तिमित्यत्रनिश
मनंचक्षुःसाधनंज्ञानमितियावत् ॥ १ ॥ सप्रसिद्धःसावर्णिःरवेस्तनयः महाभागः महामायानुभावेनयथामन्वंराधिपोबभूवतथाविस्तरतोवदिष्यामीत्यन्वयः ॥ मात्यस्यांविश्वं

महामायानुभावेनयथामन्वन्तराधिपः ॥ सबभूवमहाभागःसावर्णिस्तनयोरवेः ॥ २ ॥

माया । माकाभ्यामयच् । अथवा मानपूजायांचुरादिः । मानयितुमर्हामाया । पृषोदरादित्वान्नलोपः । अथवा । मालक्ष्मीःमाइतिअयः शुभावहोविधिर्यस्याःसामाया महती
चासौमायाचमहामाया तस्याः परमशक्तेःअनुभावःप्रभावःसामर्थ्यंमहामायानुभावः तेन । अथवामहतीचायामायायस्याः सामहामायातस्यामनुभावः मतिनिश्चयः आबा
ध्याध्यवसायःमहामायानुभावःतेन ॥ अथवाअःविष्णुःतस्यमायामहतीचासौअमायाचमहामायातस्याःअनुभावः तेन ॥ अनुभावः प्रभावेचसतांचमतिनिश्चये ॥ अथवा
अयगतौअययतिअर्पयतीतिणिजंतात्पचाद्यचिस्त्रियांटापिआया । आसमंतादभिव्याप्तांमांलक्ष्मीमुपासकायअययति अर्पयतिशक्तिर्भवतिसामहामायातस्याः अनुपश्चादाबा
ध्याध्यवसायादनंतरंभावः । परमतयाअनुमादनम्अनुभावः तंभावंभावयेद्योगीतिस्मरणात् । भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु । तेन । पश्चात्सादृश्ययोरनुमन्वन्तरा
धिपःइहप्रकरणतः सप्तममनुजीवितकालात्परभूतोनवममनूदयात्पूर्वोयः कालः समन्वंतरशब्देनविवक्षितः ततश्चांतरशब्दोमध्येवर्तते ॥ मन्वोः सप्तमनवमयोरंतरेमध्यकाले ब्रह्म
णाअधिकृतःरक्षकः प्रजानांपतिरधिपो मन्वन्तराधिपः ॥ अंतरमवकाशावधिपरिधानांतर्द्धिभेदतादर्थ्ये । छिद्रात्मीयविनाबहिरवसरमध्येन्तरात्मनिच ॥ महाभागः ।
भजसेवायाम् ॥ भावेघञ् । चजोः कुघिण्ण्यतोः ॥ महानभागोभक्तिर्यस्यसः । अथवाभामृदीप्तौभाकर्तरिक्विप् भामतेभाः भामंधर्मवागच्छतिप्राप्नोतिभागः ॥ गमेर्डोन्यत्रापि

दृश्यतइतिकर्नारिडः । महांश्चासौभागश्चेतिमहाभागः । अथवाभासंपरदेवतांगायतिइतिभागो मंत्रः । आतोनुपसर्गेकः । महान्भागोमंत्रोयस्यसमहाभागः अथवाभगस्यै श्वर्यादेरिदंभागं भवितव्यतालक्षणं हेतुवस्तु महद्भाग्यंयस्यसमहाभागः ॥ ऐश्वर्यस्यसमग्रस्यधर्मस्ययशमःश्रियः । वैराग्यस्याथमोक्षस्यषण्णांभगइतिस्मृतिः ॥ भगःश्रीकाम माहात्म्यवीर्ययन्नार्ककीर्तिषु ॥ तनोतिकुलंतनयः ॥ रूयतेस्तूयतेरविःतस्य ॥ २ ॥ अष्टमोमनुः कथ्यतइतिप्राग्यः प्रस्तुतस्तस्य सावर्णेःप्राग्जननिदानतामहिम चरित्राणिवर्णयतिमार्कण्डेयोऽनेनश्लोकेन ॥ पूर्वंप्रथमस्वायंभुवमन्वंतरकालमपेक्ष्यद्वितीयमन्वन्तरलक्षणस्वारोचिषेऽन्तरेस्वारोचिषमन्वन्तरकालेपुराकल्पे चैत्रवंशसमुद्भवः सुरथोनामप्रसिद्धः समस्तेक्षितिमंडले राजाऽभूत् अजनिष्ट ( अवर्तत ) अवृतेत्यन्वयः ॥ स्वस्यैवआत्मनइवब्रह्मणइवरोचिःप्रभायस्यसःस्वरोचिः मनुः । अथवा । अःविष्णुः सुष्ठुअस्यैवविष्णोरिवरोचिर्यस्यसःस्वरोचिःमनुः ॥ स्वरोचिषइदंस्वारोचिषंतस्मिन्स्वारोचिषे । आगमशासनाऽनित्यत्वादेजभावः ॥ रोचिःशोचिरुभे क्लीबेप्र काशोद्द्योतआतपः ॥ अंतमवसानं गतिगृह्णात्यंतरम् । तस्मिन्कालविशेषपूर्वकाले अपेक्षणक्रियापेक्षाद्वितीया ॥ चितीसंज्ञाने । सर्वधातुभ्यष्ट्रन् । चेततिजानातिधर्माधर्मप्र वृत्त्यप्रवृत्तीः कर्तुमितिचित्रः कश्चिद्राजा तस्यापत्यंपुमानचैत्रः । शिवादिभ्योण् । तस्यवंशः संतानः । तस्मात्तस्यगुद्भवतिइतिचैत्रवंशसमुद्भवः ॥ अथवाचित्र्चयने । अमि

स्वारोचिषेंतरेपूर्वंचैत्रवंशसमुद्भवः ॥ सुरथोनामराजाभूत्समस्तेक्षितिमंडले ॥ ३ ॥
तस्यपालयतःसम्यक्प्रजाःपुत्रानिवौरसान् ॥ बभूवुःशत्रवोभूपाःकोलाविध्वंसिनस्तदा ॥ ४ ॥

चिमिदिशमिभ्यः क्त्रः ॥ चीयतेचित्रमद्भुतंकर्मतस्यायंचैत्रः तस्यराज्ञोवंशःतस्मात्समुद्भवः ॥ विद्ययाजन्मनावाप्राणिनामेकलक्षणः संतानोवंशइत्युच्यते ॥ रमंतेयस्मि न्रथः । शोभनोरथोयस्यसुरथः ॥ नामप्राकाश्यसंभाव्यक्रोधोपगमकुत्सने ॥ राजतइतिराजा ॥ अभूतभूसत्तायांलुङ् ॥ क्षितेर्भूमेर्मंडलंचक्रवालंतस्मिन् ॥ ३ ॥ तदातस्मि न्स्वारोचिषमन्वंतरेकाले । औरसान उरसोत्पादितान । उरसानिर्मितान । उरसोयञ् । पुत्रानिवसम्यक्अनवद्यंयथास्यात्तथा ॥ प्रजाःलोकान्पालयतःदुःखेभ्योरक्षतस्तस्यरा ज्ञःकोलाविध्वंसिनोभूपाःशत्रवःशातयितारः बभूवुरित्यन्वयः ॥ कोब्रह्मा अःविष्णुः उःमहेश्वरः तान्ब्रह्मविष्णुमहेश्वरान्काःलांतिअर्चयितुंगृह्णंतीतिकोलाब्राह्मणादयः तानास मंताद्विध्वंसयंतीतिकोलाविध्वंसिनःरक्षोयोनयः । अथवाकोलाःशूकराःतान्विध्वंसयन्तीतिकोलाविध्वंसिनोयवनाः । अथवा । कोलान्शूकरान् विध्यंतिताडयंतिकोला विधः ॥ नहिवृतिवृषिव्यधिइतिदीर्घः । कोलाविधः क्षत्रियादयःतान्ध्वंसयन्तीतिकोलाविद्धंसिनोयवनाः ॥ ननुचकोलान्शूकरानअवंतिरक्षंतीतिकोलाविनोयवनाःतान्ध्वं सयतीतिकोलाविध्वंसी तस्यकोलाविध्वंसिनः । इतिसुरथस्यापिविशेषणमेतत्स्यात ॥ अस्तु यदीत्थंव्युत्पाद्येत उत्तरश्लोकेतुकोलाविध्वंसिभिरित्येतद्यवनविशेषणतयाव्यु

त्र.दयिष्यामः ॥उरसानिर्मितः ॥ उरसोयच ॥औरसोधर्मपत्नीजः इतिस्मृतिः ॥ पुतअव्ययंनरकवाचिपितरंपुत्‌नरकात्रायतेपुत्रः ॥ अथवा ॥ पूञ्पवने॥पुनातीतिपुत्रः।
पुवोह्रस्वश्चेतिक्त्रः । पुत्रःस्यादात्मसंभवः ॥ पुन्नाम्नोनरकायस्मात्पितरंत्रायतेसुतः । ततःपुत्रइतिप्रोक्तःस्वयमेवस्वयंभुवेतिस्मृतिः ॥ ४ ॥ तस्यअतितरांप्रकृष्टंबलंहस्त्य
श्वरथपादातसमृद्धंबलंमन्यंयेषांशत्रूणांतेअतिप्रबलाः तान्दंडयतीत्यतिप्रबलदंडी तस्यसुरथस्य तैःकोलाविध्वंसिभिर्यवनैर्भूपैःसहयुद्धमभवत् । तस्मिन्युद्धेसुरथोराजान्यू
नैरल्पबलैरपिनैः कोलाविध्वंसिभिर्यवनभूपैर्जितःअभिभूतइत्यन्वयः ॥ इहजितइतिनायंजिजयेइत्यस्यप्रयोगः । कस्यतर्हिजिअभिभवइत्यस्य । तदुक्तम् । जयिर्जयाभिभ
वयोरायथेंमावकर्मकः । उत्कर्षप्राप्तिगयोर्थे।द्वितीयेर्थेसकर्मकइति । कोलानामनगरीतांराजधानींविध्वंसयंतीतिकोलाविध्वंसिनः । सुरथोनामराजाभूत्समस्तेक्षितिमं
डले । इतिसुरथस्ययत्सार्वभौमत्वमुक्तंप्राक्तदिनान्तिन् ॥ दैवघटनाच्छत्रुभिरल्पैरथाक्रांतःसागरांताखिलावनिवलयत्वात्तस्येतिभावः ॥ ५ ॥ ततएवाह स्वकीयपुरजनपद
मात्राधिपएवआसीत्नतुसार्वभौमइत्यन्वयः ॥ मयद्यपिशत्रुभिराक्रांतस्तथापितदाक्रांतिजनितोद्वेगोपगतवनवासिमुनिवरोपदिष्टमहामायैकसमाराधनलब्धवरावाप्तव्यसाम्राज्य

तस्यतैरभवद्युद्धमतिप्रबलदंडिनः ॥ न्यूनैरपिसतैर्युद्धेकोलाविध्वंसिभिर्जितः ॥ ५ ॥ततःस्वपुरमायातोनिजदेशाधिपोभवत् ॥ आक्रांतःसमहाभा
गस्तैस्तदाप्रबलारिभिः ॥ ६ ॥ अमात्यैर्बलिभिर्दुष्टैर्दुर्बलस्यदुरात्मभिः ॥ कोशोबलंचापहृतंतत्रापिस्वपुरेततः ॥ ७ ॥ ततोमृगयाव्याजेनहृत
स्वाम्यः सभूपतिः ॥ एकाकीहयमारुह्यजगामगहनंवनम ॥ ८ ॥

संप्रात्यव्याप्टममनुत्वपदलक्षणभवितव्यतावानिपात्रतयामहाभागइतिविशेषणमर्थवदेव । तदुक्तं । संभवव्यभिचाराभ्यांस्याद्विशेषणमर्थवदिति ॥ दिश्यतेदेशःस्थानमात्रम् ॥ननुच
नीवृज्जनपदःदेशस्तुविषयःस्थानमात्रंतत्कथंदेशग्रहणेनेहजनपदोलभ्यते । तदाचयथादमरः ॥ नीवृज्जनपदोदेशविषयौतूपवर्तनम्।इति।त्वंताथादिनपूर्वभागिति चयत्पर्यभाषिष्ट ।
नैषदोषः ॥ नीवृदादीनपंचैकार्थानाहृरपरंत्वित्याश्रयणात ॥ आत्मात्मीयज्ञातिधनवाचीस्वशब्दः ॥६॥ तत्रापितन्मात्रेसपत्नापहृतभूचक्रेगर्हितेस्वपुरेसतोनिवसतोदुर्बलस्य
शत्रुभिर्गृहीतभूचक्रस्यप्रभुमंत्रोत्साहशक्तिशून्यस्यसुरथस्यकोशोबलंचबलिभिर्बलवद्भिर्दुष्टैरुल्लंघितमर्यादैर्दुरात्मभिर्दुष्टाशयैः राज्यंग्रहीतुंकृतनिश्चयैरमात्यैर्मंत्रिभिरपहृतमआत्म
सात्कृतमित्यन्वयः ॥ अमासहसमीपेभवाअमात्याः ॥ स्थौल्यसामर्थ्यसैन्येपुबलंनाकाकसीरिणोः । कोशःस्वर्णादिलोहाष्टकसंग्रहः । सुवर्णरजतंताम्रंरीतिःकांस्यंततथात्रपु ।
सीसंकालायसंचैवह्यष्टलोहानिचक्षते ॥ अपहृतःकोशःअपहृतंचबलमितिविगृह्यनपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्यामितिनपुंसकशेषः एकवद्भावश्च । अपिशब्दोगर्हायाम् ।
दुरीषदर्थकुत्सनवैवर्ण्यासंभवलाभेषु ॥ दुष्टैरिति । दुषवैकृत्ये । क्तःकर्तरि ॥ वैकृत्यंरूपभंगः ॥ ७ ॥ ततःअमात्यैरपहृतकोशबलत्वाद्धृतस्वाम्यःअपहृतस्वामित्वःसमुरथो

भूपतिः ॥ एकाकीअसहायः ॥ केवलःमृगयाव्याजेनहयमारुह्यगहनंनिरंतरव्याप्तलतादिपिहितोदरंवनंकाननंजगामगतवानित्यन्वयः । मृग्यंतेन्वेष्यंतेप्राणिनोमृगादयोऽस्यांमृगयापापर्द्धिःतस्याःव्याजेनास्वेटकवृत्तिमिषेणमुनिवनोपगमनमेवात्रमुख्यंकार्यनतुमृगयाचरणम्॥मुख्यकार्यस्वरूपाच्छादनंव्याजः ॥ स्वामिनईश्वरस्यभावः हृतंस्वाम्यंयस्यसहृतस्वाम्यः । एकएवएकाकी ॥ एकादाकिनिच्चासहाये ॥ एकस्त्वेतुएककः । कलिलंगहनंसमे ॥ ८ ॥ द्विजेतिसंबुद्ध्यंतंवर्यइतितुराजविशेषणम् ॥ मार्कंडेयःस्वशिष्यंसंबोधयति ॥ हेद्विजइतःसुरथचरित्रकथायाःश्रवणप्रवणोभवेति ॥ सवर्यःवरार्हःसुरथस्तत्रतस्मिन्वने ॥ सुमेधसोनाममुनेःशिष्योपशोभितंप्रशांतश्वापदाकीर्णमाश्रममद्राक्षीतददर्शेत्यन्वयः ॥ मुनेरितिसुमेधसोविशेषणम् ॥ विश्रम्यन्तेनआश्रम्यंतितपस्यंतिअत्रेत्याश्रमः ॥ द्वाभ्यांमातृमौंजीभ्यांजायतेद्विजः ॥ हेद्विजसुष्ठुशोभनामेधायस्यससुमेधाः । नित्यमसिच्प्रजामेधयोरितिअसिच्समासांतः ॥ तस्यमुनेःपरमसामर्थ्यात्प्रशांताःसंत्यक्तहिंस्रताःयेश्वापदाःव्याघ्रादयस्तैराकीर्णव्याप्तम् ॥ शुनइवपदानियेषांतेश्वापदाः । शुनोदंतदंष्ट्राकर्णककुदवराहपदपुच्छेष्वितिदीर्घत्वम् ॥ वरंपुनागज्यावाप्यश्रमसनुत्वानिलक्षणमर्हतीतिवर्यःसुरथः । दंडादिभ्योयः ॥ अथवाछंदसिचेतियत ॥

सतत्राश्रममद्राक्षीद्द्विजवर्यःसुमेधसः ॥ प्रशांतश्वापदाकीर्णमुनिशिष्योपशोभितम ॥ ९ ॥ तस्थौकंचित्सकालंचमुनिनातेनसत्कृतः॥ इतश्चेतश्चविचरंस्तस्मिन्मुनिवराश्रमे॥ १०॥सोचिंतयत्तदातत्रममत्वाकृष्टमानसः॥ मत्पूर्वैःपालितंपूर्वंमयाहीनंपुरंहितत॥मद्भृत्यैस्तैरसद्वृत्तैर्धर्मतःपाल्यतेनवा ११

छंदोवत्सूत्राणिभवंति ॥ तपोभिरिष्यतेयस्तुदेवेभ्यःसवरोनमः ॥ देवाद्दतेवरःश्रेष्ठत्रिपुक्लीबमनाक्प्रिये ॥ शिष्यैर्वेदानधीयद्भिरुपशोभितंशोभान्वितंसंजातशोभम ॥ ९. ॥ तेनसुमेधसामुनिनासत्कृतः आदृतःपूजितःससुरथःतस्मिन्मुनिवराश्रमेइतश्चेतश्चइतस्ततश्चविचरन्परिभ्रमन्कंचित्कालंतस्थौस्थितश्चेत्यन्वयः ॥ कालमितिकालाध्वनोरत्यंतसंयोगेद्वितीया ॥ मुनिपुंगवरःश्रेष्ठःसुमेधाःमुनिस्तस्याश्रमे ॥ अथवा ॥ ससुरथस्त्वस्मिन्मुनिवराश्रमेतेनमुनिनाइतःप्राप्तःअभ्यागतःसत्कृतश्चसन्कंचित्कालंचेतश्चस्वांतंचविचरन् तपःश्रमस्यात्रवेतिचिंतयंस्तस्थावित्यपरोन्वयः ॥ १०॥ तदामुनिसंदर्शनकालेतत्राश्रमेममत्वाकृष्टमानसःससुरथःस्वचेतसाचिंतयत्कुटुंबंसंस्मृतवानित्यन्वयः ॥ ममेतिविभक्तिप्रतिरूपकमव्ययम ॥ ममेतिभावोममत्वंममताममत्वमितिमदीयताबुद्धिःतयाआकृष्टंवशीकृतंमानसंस्वांतंचेतोयस्यसतथोक्तः ॥ किमाचिंतयदित्यपेक्षायामाह ॥ पूर्वंमत्पूर्वैर्मत्पित्रादिभिःधर्मतःपालितंमत्कुलागतंपुरंसंप्रतिविधिवशेनमयाहीनंत्यक्तंतद्धिनिश्चयेनअसद्वृत्तैरसच्चारितैस्तैर्मद्भृत्यैर्मदमात्यप्रभृतिभिःपुंभिर्धर्मतःधर्ममाश्रित्यनःखेभ्यःपाल्यतेकिंनवेतिसोचिंतयत्सुरथइत्यन्वयः ॥ स्वान्ववायागतंवस्तुधर्मायर्थोपसाधनम् । स्वान्ववायोद्भवैःसम्यक्पालनीयंहिधर्मतइतियमगीतातोयुक्तैषाराज्ञःस्वपुर

नुस्मृतिः ॥ मत्पूर्वैःमम मे वा पूर्वा मत्पूर्वास्तैः ॥ पूर्वकालम् ॥ भरणीयाभृत्याः ॥ भृञोसंज्ञायांक्यप् ॥ हिर्हैतावधारणे ॥ वृत्तंपद्येचरित्रेत्रिष्वतीतेदृढनिस्तले ॥ धर्माः पुण्ययमन्यायस्वभावाचारसोमपाः ॥ उपमायांविकल्पेवा ॥ ११ ॥ किंनुभविष्यतीति तन्नजानेइतिसोचिंतयदित्यन्वयः ॥ सुखेनअकृच्छ्रेणप्रकर्षेणधीयतेधार्यतेपोष्यते चप्रधानः ॥ आतोयुगितिडप्रत्ययः सुपुकृच्छ्राकृच्छ्रार्थेषुउपपदेषुदधातेर्युक् ॥ युवोरनाकौ ॥ सप्रधानइत्यपपाठः ॥ सइतिच्छेदेपिप्रधानइतिनस्यात् ॥ प्रदधातिप्रधानमितिन नपुंसकत्वात् ॥ यदाप्यधुःपरमात्मधीप्रकृतिमहामात्रमुख्येषुप्रधानमजहल्लिंगमद्वयोरितिप्रधानेनामात्येनसहवर्ततेसप्रधानमितिचेन्न. ममवैरिवशंयातइत्यनेनपौनरुक्त्यप्रसंगा त ॥ प्रमह्याक्रांतराज्यत्वादमात्याएववहिर्वैरिणइत्यलंविस्तरेण ॥ सदामर्वदामदोयस्येति सदामदः । यद्वा । सइतिपदात्सप्रसिद्धोमहस्तीतिसंबंधनीयम् ॥ दामानियतिखंडय तिदामदः ॥ आतोनुपसर्गेकः ॥ नपुंसिदामसंदानम् ॥ भुज्यतेभोगः ॥पालनेप्यवहारेचनिर्वेशेचपणस्त्रियाम् ॥ भोगः सुखभुजंगानांशरीरफणयोरपि ॥ जानइति ॥ ज्ञाजनोर्जाशिति अनुपसर्गाज्ज्ञाइत्यात्मनेपदम् ॥ १२ ॥ येनित्यंसंततमनवरतंशश्वत्प्रसादधनभोजनैः प्रसादैःकृचितदानैर्वेतनरूपैर्भोजनैः ममअनुगता अनुजीविनः तेअद्यइदानींमद्वि

नजानेसुप्रधानोमेशूरोहस्तीसदामदः ॥ ममवैरिवशंयातःकान्भोगानुपलप्स्यते ॥ १२ ॥ येममानुगतानित्यंप्रसादधनभोजनैः ॥ अनुवृत्तिंध्रुवंते ऽद्यकुर्वंत्यन्यमहीभृताम् ॥ १३ ॥ असम्यग्व्ययशीलैस्तैःकुर्वद्भिःसततंव्ययम् ॥ संचितःसोतिदुःखेनक्षयंकोशोगमिष्यति ॥ १४ ॥ एतच्चान्यच्चसततं चिंतयामासपार्थिवः ॥ तत्रविप्राश्रमाभ्याशेवैश्यमेकंददर्शसः ॥ १५ ॥

हीनाअनाथाः संतःअन्यमहीभृतामन्यमहीभृतांराज्ञाम् अनुवृत्तिंसेवांध्रुवंनिश्चितंकुर्वन्तीतिनिश्चितामनुवृत्तिंविदधतीतिसोचिंतयदित्यन्वयः ॥ ध्रुवोभभेदेक्लीबंतुनिश्चितेशाश्वतेत्रिषु ॥ ॥ १३ ॥ अतिदुःखेनमत्पूर्वैर्मयात्रसंचितः उपार्जितःसमुवर्णादिद्रव्याणांकोशःराशिः असम्यग्व्ययशीलैरसम्यक्कुविफलः व्ययः द्रव्योत्सर्गःशीलंस्वभावोयेषांतैस्तथोक्तास्तैः सततंव्ययंवित्तोत्सर्गं कुर्वद्भिः तैरमात्यप्रभृतिभिःकरणैःक्षयंनाशंगमिष्यतिप्राप्स्यतीतिसोचिंतयदित्यन्वयः ॥ आहुश्च ॥ आगमंचव्ययाभावेव्ययेचानागमेक्रमात् ॥ कोशस्यवृ द्धिनाशौस्तस्तत्मात्स्येपूर्वरूपतेति ॥ सततंसंततम् ॥ लुंपेदवश्यमः कृत्ये तुंकाममनसोरपि ॥ समोवाहिततत्योर्मांसस्यपचियुड्घञोः ॥ अत्यर्थं दुःखंयस्मिंस्ततअतिदुःखं तेनकर्म णा ॥ शीलंस्वभावेसद्वृत्ते ॥ व्ययवित्तसमुत्सर्गेचुरादावदन्तः । व्ययनंव्ययः ॥ यदाप्यधुः ॥ वित्तत्यागेव्ययतिर्व्ययनेगतौइति ॥ १४ ॥ सपार्थिवः सुरथःएतच्चपूर्वो क्तम् अतोन्यच्चसततंविस्तारेणेतिम् अंतःपुरगतंपुरांतरगतं देशांतरगतंचस्वकीयंवस्तुसर्वंचिंतयामासेत्यन्वयः ॥ सततमित्यत्रसइतिच्छेदः ततंविस्तारेणेतिमित्यर्थः ॥ एकपदत्वे तुसततंसंततमितिहिव्याख्यानंस्यात् ॥ ततश्चसुरथश्चिंतासंततिकाक्रांतस्वांतनयावक्ष्यमाणप्रागव्याप्टममनुत्वपदावाप्स्यैचिंतानुकूलतयासमाधानविधानविधुरःप्रसज्येत ॥

ननुत्वमोर्चिंतयदितिक्रियापदेकृतेपुनश्चिंतयामामेतिवाचोयुक्तिर्नयुक्तिमतीतिचेत् । तन्न । उक्तं चानुक्तंचममत्वाकृष्टमानसतयापुनःपुनश्चिंतितमेवाचिंतितमिव आचिं तयद्राजेतियुक्तिमत्त्वेवतद्वाचोयुक्तिरिति ॥ पृथिव्याःईश्वरःपृथिव्यांविदितः ज्ञातश्चपार्थिवः ॥ तस्येश्वरस्तत्रविदितइतिचेत्यत्र ॥ ससुरथःतत्रतपोवनेतथातथातत्रस्वकी यंवस्तुविचिंतयन्मनविप्राश्रमाभ्याशेविप्रस्यसुमेधसोमुनेःआश्रमस्याभ्याशेनिकटेदेशेएकं कंचिद्वैश्यंतृतीयंद्वितीयंददर्शदृष्टवानित्यन्वयः । तृतीयमआत्ममन्यपेक्षयाद्वितीयमा त्मापेक्षयेत्यर्थः ॥ विशांपत्यंजातिर्वैश्यः । गर्गादित्वाद्यत्र ॥ ददर्शेहेतिक्वचितपाठः । सइतितुप्रकरणतोलभ्यते ॥ तुहिचस्मह्रस्वपादपूरणे ॥ अभ्याशो ॥ तालव्यांतः कर्मणिघञ् अभ्यश्यतेव्याप्यतेअभ्याशः ॥ एकं केवलमेकाकिनम् ॥ १५ ॥ तेनसुरथेनसवैश्यःपृष्टः किंपृष्टइत्याह ॥ भोअहोत्वंकःकोसिजातितः किंच अत्रमुन्याश्रमे तवागमनेचकोहेतुःकिंकारणमित्यन्वयः ॥ अव्ययमरणपभोशब्दइतिभाष्यम् ॥ अथैनतद्ववच्छब्दस्यमंबुद्धौरूपं कृत्वात्वयत्वलोपेण । सामान्यात्श्रुतोज्ञानमपिवस्तुविशेषतः जिज्ञासमानोजिज्ञास्यंपृच्छन्नेवान्यदीप्सितम्॥राजावैश्यंपुनःपृच्छति ॥ भोअहोत्वंकस्माद्धेतोःसशोकइवलक्ष्यसे सखेदइवप्रतीयसेकस्माच्चहेतोःत्वंदुर्मनाइवलक्ष्यसेविमनस्कइ

सपृष्टस्तेनकस्त्वंभोहेतुश्चागमनेत्रकः ॥ सशोकइवकस्मात्त्वंदुर्मनाइवलक्ष्यसे ॥ १६ ॥ इत्याकर्ण्यवचस्तस्यभूपतेःप्रणयोदितम् ॥ प्रत्युवाचसतं वैश्यः प्रश्रयावनतोनृपम् ॥१७॥ ॥ वैश्यउवाच ॥ ॥ समाधिर्नामवैश्योहमुत्पन्नोधनिनांकुले ॥ पुत्रदारैर्निरस्तश्चधनलोभादसाधुभिः ॥१८॥ विहीनःस्वजनैर्दारैःपुत्रैरादायिमेधनम् ॥ वनमभ्यागतोदुःखीनिरस्तश्चाप्तबंधुभिः ॥ १९ ॥

ववीक्ष्यसेइत्यन्वयः ॥ मन्युशोकौतुशुक् स्त्रियाम् ॥ मन्युर्दैन्येक्रतौकुधि ॥ शोकेनसहितःसशोकः ॥ दुर्मनाविमनाः स्यात् ॥ दुःस्थंमनो यस्यसदुर्मनाइवसाम्येशारदाभ्रमिवचं लवमायुरितिवत् ॥ १६ ॥ इतीत्थं प्रणयोदितंप्रणयेनप्रेम्णाउदितंकथितम् ॥ तस्यभूपतेः सुरथस्यवचःआकर्ण्यश्रुत्वासवैश्यस्तंनृपंसुरथमुद्दिश्यप्रश्रयावनतः प्रश्रयेणविनयेना वनतोनम्रःसन्प्रत्युवाचेत्यन्वयः ॥ सुरथकृतप्रश्नानांप्रत्युत्तरंवक्तुंवाक्यमग्रहीदितिभावः॥विश्रंभयाच्ञाप्रेमाणःप्रणयेनसमार्थकाः ॥१७॥ धनिनांकुलेउत्पन्नोहंसमाधिर्नामवि ख्यातजात्यावैश्योस्मीत्यन्वयः ॥ अनेनकस्त्वंभोइतिप्रश्नस्योत्तरमुक्तम् ॥ इभ्यआढ्योधनी ॥ कुलंगृहेपिवंशेपि ॥ धनेषुलोभात्गाढ्यात्असाधुभिरसज्जनैःपुत्रैश्च दारैश्च पु त्राणांच दारैःनिरस्तश्चनिराकृतोस्मीत्यन्वयः ॥ एतेनसशोकइवकस्मात्त्वम्॥इतिप्रश्नस्योत्तरमुक्तम्॥ १८ ॥ विहीनःस्वजनैःबांधवैश्चरहितोस्मि॥इतोपिसशोकोस्मीत्यन्वयः॥ दारैःपुत्रैरादायिमेधनंमदीयैर्दारैःपुत्रैश्च मेधनमादायिगृहीतमित्यन्वयः ॥ अनेन दुर्मनाइवलक्ष्यसेकस्मादितिप्रश्नस्योत्तरमुक्तम् ॥ मदीयैराप्तैर्बंधुभिः पुत्रमित्रकलत्रादिभि

हृतधनोनिरस्तश्चाहंदुःखीउद्विग्नमनाःसन्नवनमभ्यागतोस्मीत्यन्वयः ॥ अनेनहेतुश्चागमनेत्रकइतिप्रश्नस्योत्तरमुक्तम् ॥ १९ ॥ तथाविधःसोहमत्रवनेसंस्थितःसन्पुत्राणांच स्वजनानांचकुशलाकुशलात्मिकांकुशलस्वरूपामकुशलस्वरूपांचद्विविधरूपांप्रवृत्तिंवार्तांनवेद्मिनजानामीत्यन्वयः ॥ संगतोत्रत्यैःस्थितःसंस्थितः ॥ संस्थाधारेस्थितौमृतौ इतिवा ॥ दारशब्दःपुंस्येवभूम्न्येवकलत्रवाची ॥ कुशलंचाकुशलंचात्मास्वभावोयस्याःसातथोक्ता ॥ शेषाद्विभाषेतिकप्समासांतःइत्वंच ॥ २० ॥ किन्नुइतिच्छेदःकि स्पृच्छायांजुगुप्सने नुपृच्छायांविकल्पेच ॥ तत्रकिमित्यनव्ययंच ॥ संप्रत्येवसांप्रतंप्रज्ञादित्वात्स्वार्थेण् इहक्षेमत्वाक्षेमयोर्विकल्पःतुशब्देनसूच्यते ॥ सांप्रतमिदानीं तेषांपुत्रादी नांगृहेकिमपिक्षेमंनुवर्तते ॥ अथवासांप्रतमिदानींतेषांपुत्रादीनां गृहेकिमपिअक्षेमंतुवर्ततेइतितद्द्वुभयंनवेद्मीत्यन्वयः ॥ क्षेमंवाक्षेमंवानवेद्मीत्यर्थः ॥ कुशलंक्षेममस्त्रियाम् ॥ क्षिणोतिहिनस्तिक्लेशान्क्षेमम् ॥ तेसुताःसांप्रतंकिंसद्वृत्तानुअथवातेसुताःसांप्रतंकिंदुर्वृत्तानुइतितद्द्वुभयंकथं सज्ञेयंस्यादित्यन्वयः ॥ तेसुताःसांप्रतंसद्वृत्तावाकथंमयाज्ञेयाइति भावः ॥ सत्साधुवृत्तंचारित्रं येषां तेसद्वृत्ताः ॥ अथवासतामिववृत्तंचारित्रंयेषां तेसद्वृत्ताः ॥ दुष्टमसाधुवृत्तंचारित्रं येषां तेदुर्वृत्ताः ॥ अथवादुष्टानामसज्जनाना

मोहंनवेद्मिपुत्राणांकुशलाकुशलात्मिकाम् ॥ प्रवृत्तिंस्वजनानांचदाराणांचात्रसंस्थितः ॥ २० ॥ किंनुतेषांगृहेक्षेममक्षेमंकिंनुसांप्रतम् ॥ कथंते किंनुसद्वृत्ता दुर्वृत्ताःकिंनुमेसुताः ॥ २१ ॥ ॥ राजोवाच ॥ ॥ यैर्निरस्तोभवाँल्लुब्धैःपुत्रदारादिभिर्धनैः ॥ तेषुकिंभवतःस्नेहमनुबध्नातिमानसम् ॥२२॥ ॥ वैश्यउवाच ॥ ॥ एवमेतद्यथाप्राहभवानस्मद्गतंवचः ॥ किंकरोमिनबध्नातिममनिष्ठुरतांमनः ॥ २३ ॥

मिववृत्तंचारित्रं येषां तेदुर्वृत्ताः ॥ २१ ॥ इतिदुर्दैववतोवैश्याद्धुत्वापुत्रादिबंधुतः ॥ दुःखितःकथितंवाक्यमाकर्ण्योचेपुनर्नृपः ॥ हेसमाधेहेवैश्यभवान्धनैःकारणैः लुब्धैःगृध्नुभिर्यैःपुत्रदारादिभिर्दुर्वृत्तैर्बंधुभिःनिरस्तोभूत तेषुभवतःमानसंकर्तृस्नेहंकिमनुबध्नातिकिमर्थंकरोतीत्यन्वयः ॥ तादृशेषुस्नेहनिबंधनंजुगुप्सितंगर्हितंत्यजनीयं भवतइतिभावः ॥ यदाहुः ॥ सततंस्निह्यतिस्निह्येद्धुत्येस्वद्रुह्यतेपुनः ॥ सौजन्यंसुजनेकुर्याद्दौर्जन्यमपिदुर्जनइति ॥ भवाल्लुब्धैरित्यत्रतोर्लिइतिनकारस्यपरसवर्णो नुनासिकोलकारः ॥ २२ ॥ यन्मद्गतमित्यपिक्वचित्पाठः साध्यः ॥ ममेत्येकवचनपाठोचिंत्यादस्मद्गतमितिपाठेराजायेवैश्यस्यप्रश्नयावनतस्यमतः प्रागल्भ्यानौ चित्यप्रसंगाच्च ॥ हेनृपभवान्यन्मद्गतंवचः यथाप्राहब्रवीतिएतद्वचःएवमिदमित्थमेव अथाप्यहंकिंकरोमिममनःकर्तृनिष्ठुरतांपरुषतांनबध्नातिनाचरतिनाश्रयतिइत्यन्वयः ॥ इवेत्थमर्थयोरेवम् अस्मद्गतम् अस्मद्गतम् । अस्मत्पृथक् ॥ मद्गतंमद्गतं मत्पृथक् ॥ अथवा अस्माभिर्गतंज्ञातम् अस्मद्गतम् ॥ मयागतंज्ञातंमद्गतम् ॥ गत्यर्था धातवो

ज्ञानार्था अपि भवंति ॥ २३ ॥ हे राजन् पितृस्नेहं संत्यज्य धनलुब्धैः यैर्मत्पुत्रैर्निराकृतोस्मि तेष्वेव पुनर्मेमनः हार्दिवर्तते ॥ किंच पतिस्वजनहार्दं भर्तृलक्षणबंधुस्नेहं संत्यज्य धनलुब्धैर्यैर्मद्दारैर्निराकृतोस्मि तेष्वेव पुनर्मेमनः हार्दिवर्तते करोमि किमित्यन्वयः ॥ हृदयस्य स्वांतस्य कर्म हार्दं प्रेमस्नेह इति यावत् युवादित्वादण् ॥ हृदयस्य हल्लेखयदण्लासेष्विति हृद्भावः ॥ हार्दमस्त्यस्य तद्धार्दि मे मनः हृदयनिविष्टस्नेहोपेतं स्नेहनिबद्धमिति यावत् ॥ पतिर्गेवस्वभर्तैव स्वजनो बंधुस्तस्मिन्हार्दं स्नेहः पतिस्वजनहार्दं तत् ॥ लुब्धोभिलाषुकस्तृष्णक् ॥ २४ ॥ हे महामते राजन्विगुणेष्वपि बंधुषु प्रेमप्रवणं मे चित्तमिति जानन्नपि नाभिजानामि किमेतदित्यन्वयः ॥ अथवा हे महामते राजन् यद्यस्मात्कारणात्बंधुषु अमत्स्वप्यस्ति मे चित्तं प्रेमप्रवणमिति जानन्नप्येतद्वारयितुं नाभिजानामि करोमि किमित्यन्वयः ॥ अथवा हे राजन्बंधुषु विगुणेषु सत्स्वपि यच्चित्तं प्रेमप्रवणं स्यात् ॥ तत्किंनामकुत्सितं गर्हितमिति जानन्नपि नाभिजानामीत्यन्वयः ॥ महती मतिर्यस्य मः महामतिः ॥ हे महामते प्रवणं प्रह्वं नम्रमनुकूलम् । प्रवणं क्रमनिम्नोर्व्यां प्रह्वे नातु चतुष्पथे ॥ अगुणेषु असत्हेतुषु विगुणेषु विस्नेहेषु ॥ २५ ॥ कारणं कृतिः कृतं नपुंसके भावे क्तः ॥ अथवा करणं कृतिः कृतस्यै संपदादित्वाद्भावे स्त्रियां क्विप् ॥ निर्गलति श्वासो यस्मात्स निःश्वासः शोकः ॥ दुःस्थमनो

येः संत्यज्य पितृस्नेहं धनलुब्धैर्निराकृतः ॥ पतिस्वजनहार्दं च हार्दि तेष्वेव मे मनः ॥ २४ ॥ किमेतन्नाभिजानामि जानन्नपि महामते ॥ यत्प्रेमप्रवणं चित्तं विगुणेष्वपि बंधुषु ॥ २५ ॥ तेषां कृते मे निःश्वासो दौर्मनस्यं च जायते ॥ करोमि किं यन्न मनस्तेष्वप्रीतिषु निष्ठुरम् ॥ २६ ॥ मार्कण्डेय उवाच ॥ ततस्तौ सहितौ विप्र तं मुनिं समुपस्थितौ ॥ समाधिर्नाम वैश्योसौ स च पार्थिवसत्तमः ॥ २७ ॥ कृत्वा तु तौ यथान्यायं यथार्हं तेन संविदम् ॥ उपविष्टौ कथाः काश्चिच्चक्रतुर्वैश्यपार्थिवौ ॥ २८ ॥

यस्य दुर्मनास्तद्भावो दौर्मनस्यं प्रतिपक्षिणि नास्ति प्रीतिर्येषां ते अप्रीतयः निष्ठुरं कठोरं तेषां पुत्रादीनां कृते मलाभाया मां सिद्धविषये मां सिद्धिप्रयुक्तस्यैव मे निःश्वासः शोका दैन्यं दौर्मनस्यं दुःस्थितमनस्कत्वं जायते ॥ यद्यस्मात्कारणात् मयि अप्रीतिष्वपि तेषु पुत्रादिषु मे मनः निष्ठुरं न जायते अतः करोमि किमित्यन्वयः । तदित्थं संप्रति सांसारिकचिंतातः कांदिशीकोस्मीति भावः ॥ कांदिशीको भयद्रुतः कांदिशं व्रजमीति व्याकुलोस्मीति भावः ॥ २६ ॥ हे विप्र हे शिष्य समाधिर्नाम असौ वैश्यश्च पार्थिवसत्तमः ससुरथश्च तौ द्वौ सहितौ मिलितौ हित संयुक्तौ वा मंतौ तं प्रसिद्धं सुमेधसं नाम मुनिं समुपस्थितौ अभ्यागमतुः इत्यन्वयः ॥ तिष्ठतिरुपपूर्वो गत्यर्थोपि ॥ पार्थिवेषु सन् अतिशयेन पार्थिवसत्तमः ॥ २७ ॥ अल्पाच्तरत्वाद्वैश्यस्य पूर्वनिपातः ॥ अभ्यर्हितस्तु पार्थिवः क्षत्रियत्वात् ॥ यथान्यायं तु शश्वत् वर्णोक्तविधिमनतिक्रम्यैव यथार्हं अर्हं पूज्यं वृद्धमनतिक्रम्यैव यथाश्रमं तस्मै सुमेधसे मुनये संविदं संभाषणाद्याचारं कृत्वा तेनापि पूजितौ तदनुमत्या उपविष्टौ संतौ वैश्यपार्थिवौ काश्चित्स्वार्थपराः उचिताः कथाः उक्तीः चक्रतुः विदधतुरित्यर्थः ॥ तुः स्याद्भे

देवधारणे ॥ स्त्रीसंविज्ज्ञानसंभाषाक्रियाकाराजिनामसु ॥ प्रतिज्ञातोषणाचारेष्वपिसंवित्प्रयुज्यते ॥ २८ ॥ हेभगवन्हेसमवैश्वर्यसंपन्नहेमुनेत्वामहमेकंरहस्यंप्रष्टुमिच्छा
मितद्वदस्व रहस्युपदिश ॥ भाषनोपसंभाषासूत्रेणरहस्युपच्छंदनेपआत्मनेदम् ॥ यद्यस्मात्कारणात्स्वचित्तायत्ततांविनाऽवस्थानंमेमनसः दुःखायभवतीत्यन्वयः ॥ यदहमे
करहस्यंत्वांप्रष्टुमिच्छामिततममावश्यमाकर्णनीयम् ॥ अन्यथातदाकर्णनाभावेस्वचित्तायत्तत्वंनस्यात॥ तद्भावस्तुमेमनसः दुःखायस्यात्संशयापन्नत्वात्तस्मात्तद्रहस्यंमयाश्रोत
व्यमेवेतिभावः ॥ ऐश्वर्यस्यसमग्रस्यधर्मस्ययशसःश्रियः ॥ वैराग्यस्याथमोक्षस्यषण्णांभगइतिस्मृतिः ॥ २९ ॥ मुनिष्वतिशयेनमान्विपश्चिन्मुनिसत्तमः हेमुनिसत्तम ॥
जानतोपिउत्पन्नज्ञानस्यापिगतराज्यस्यशत्रुहस्तंगतसाम्राज्यस्यमेअखिलेष्वपिराज्यांगेषुयथाअज्ञस्येवममत्वंममतावर्ततेकिमेतदित्यन्वयः ॥ विनष्टराज्यस्यपुंसःराज्यां
गेषुकिंममत्वेनकृतंस्यादितिभावः ॥ स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानिचेतिसप्तराज्यांगानि ॥ ववायथातथैवेवम ॥ ३० ॥ अयंवैश्यश्चयद्यपिपुत्रैर्निकृतः

॥ राजोवाच ॥ ॥ भगवंस्त्वामहंप्रष्टुमिच्छाम्येकंवदस्वतत् ॥ दुःखाययन्मेमनसः स्वचित्तायत्ततांविना ॥ २९ ॥ ममत्वंगतराज्यस्यराज्यांगेष्व
खिलेष्वपि ॥ जानतोपियथाज्ञस्यकिमेतन्मुनिसत्तम ॥ ३० ॥ अयंचनिकृतःपुत्रैर्दारैर्भृत्यैस्तथोज्झितः ॥ स्वजनेनचसंत्यक्तस्तेषुहार्दीतथाप्य
ति ॥ ३१ ॥ एवमेपतथाहंचद्वावप्यत्यंतदुःखितौ ॥ दृष्टदोषेपिविषयेममत्वाकृष्टमानसौ ॥ ३२ ॥ तत्किमेतन्महाभागयन्मोहोज्ञानिनोरपि ॥
ममास्यचभवत्येपाविवेकांधस्यमूढता ॥ ३३ ॥

विप्रकृतःखिलीकृतःतथादारैः कलत्रैर्भृत्यैश्चउज्झितःउत्सृष्टः ॥ स्वजनैर्भ्रात्रादिबंधुभिरपिसंत्यक्तस्तथापितेषुपुत्रादिषुममत्वेनअतिस्नेहवानितिभावः ॥ निकृतःस्याद्वि
प्रकृतःनिक्रियतेखिलीक्रियतेस्मनिकृतः ॥ अथवा ॥ निकृतस्त्वनृजुःशठःनिकृणोतिहिनस्तिनिकृतःहिंसकोयमनृजुःशठइत्युज्झितइत्यर्थः । कुसृतिर्निकृतिःशाठ्यम ॥
निष्कृतइत्यप्रस्तुतत्वादपपाठः ॥ तथाहिनिष्कृतिःप्रायश्चित्तिः यदाहुः कामगोत्राह्मणवधेजीवतोनास्तिनिष्कृतिरितिप्रायश्चित्तिर्नास्तीत्यर्थःप्रायश्चित्तिस्तुनिष्कृतिः ॥
अथवानिरर्थकःकृतोनिःकृतःअथवानिःक्रांतःकृतात्कारणात ॥ राज्याद्वानिःकृतः ॥ ३१ ॥ द्वावपिअत्यंतदुःखितौवर्त्तावहेइत्यन्वयः ॥ इवेत्थमर्थयोरेवम् ॥ पिञ्बं
धने ॥ विसिनोतिबध्नातिविषयःशब्दस्पर्शरूपरसगंधलक्षणःग्रामसमूहादिलक्षणश्च विषयश्चदृष्टदोषत्वमध्रुवत्वम अंततोदुःखहेतुत्वंच ॥ ममेतिभावोममत्वंतेनआकृष्टमानसंययो
स्तौतथोक्तौ ॥ ३२ ॥ हेमहाभागहेसुमेधोमुने ॥ ज्ञानिनोरपिआवयोर्नृपवैश्ययोर्मोहोभवतीतियत्तदेतत्किमित्यन्वयः ॥ भगस्यैश्वर्यादेरिदंभागंमहद्भागंयस्यसमहाभागः ॥

तयोर्ज्ञानिनोःकोनुमोहइत्यतआह ॥ हेब्रह्मन्गूढस्यविवेकांधस्यइदंसुखायइदंदुःखायेतिहिताहितपार्थक्येविषयेअंधस्यममचसुरथसमाधिमंज्ञयोर्नृपवैश्ययोरेषामूढताविवेकवि हीननामोहापन्नताभवतीतिकिमेतदित्यन्वयः ॥ अचक्षुषितमस्यंधंजलेतिमिरकृत्यपि ॥ ३३ ॥ हेराजन्ममस्तस्यसर्वस्यजंतोश्चेतनस्यप्राणिनः विषयगोचरेज्ञानंबुद्धिमा त्रमस्तीत्यन्वयः । नहिमोक्षेधीर्ज्ञानंविवक्षितम् । किंतु । विषयगोचरे ॥ इंद्रियार्थस्यतत्तदिंद्रियजंज्ञानंविद्यतएवतावन्मात्रमितिभावः ॥ विमिनोतिबध्नातीतिविषयःशब्दा दिः॥गावःइंद्रियाणिचरंत्यस्मिन्गोचरः ॥ गोचरसंचरंतिसाधुत्वम् ॥ यद्यपि रूपंशब्दोगंधरसस्पर्शाश्चविषयाअमी । गोचराइंद्रियार्थाश्चेत्यभिधानात् यएवविषयःसएवगो चरइतिपौनरुक्त्यंप्रतीयते ॥ तथापीहदुःखितंसुखंप्रतिविमिनोतिबध्नातिविषयोदुःखहेतुरिंद्रियंवशीकरोतिगोचरइतिप्रदर्शनादपौनरुक्त्यंद्रष्टव्यम् ॥ भगस्यैश्वर्यादेरिदंभागं महद्भागंयस्यासौमहाभागः ॥ हेमहाभागराजनएवंवक्ष्यमाणप्रकारेणविषयाश्चविपर्यवृत्तयश्चपृथक्विभिन्नायांति ॥ पार्थक्येनेंद्रियगोचरतांव्रजंति ॥ अथवासमरंतिसंच रंतीत्यन्वयः ॥ विषयाश्चमहाभागजातिश्चैवंपृथक्पृथगितिपाठेजातिः सामान्यंरूपत्वगंधत्वाद्यमप्यनेकविधम् ॥ ३४ ॥ सत्यपिचक्षुर्गोलकेकेचिच्चेतनाःप्राणिनः

॥ ऋषिरुवाच ॥ ज्ञानमस्तिसमस्तस्यजंतोर्विषयगोचरे ॥ विषयाश्चमहाभागयांतिचैवंपृथक्पृथक् ॥ ३४ ॥ दिवांधाःप्राणिनःकेचिद्रात्रावंधास्त थापरे ॥ केचिद्दिवातथारात्रौप्राणिनस्तुल्यदृष्टयः ॥ ३५ ॥ ज्ञानिनोमनुजाःसत्यंकिंतुतेनहिकेवलम् ॥ यतोहिज्ञानिनःसर्वेपशुपक्षिमृगादयः ॥ ३६ ॥ ज्ञानंतन्मनुष्याणांयत्तेषांमृगपक्षिणाम् ॥ मनुष्याणांचयत्तेषांतुल्यमन्यत्तथोभयोः ॥ ३७ ॥

दिवांधाःउलूकादयःतथाअपरेकेचित्प्राणिनःकाकादयोरात्रावंधाः ॥ दृष्टिहीनाइत्यन्वयः ॥ केचिद्गवाश्वप्रभृतयःप्राणिनःयथादिवातथारात्रौचतुल्यादृष्टिर्येषांतेतुल्यदृष्टयो भवंतीत्यन्वयः ॥ पूर्वंराज्ञासुरथेनपृष्टंयन्मोहोज्ञानिनोरपितत्किमेतदितितत्रोत्तरमर्थांगीकारेण ॥ ३५ ॥ मनुजाःज्ञानिनःसत्यंकिंतुतएवकेवलंज्ञानिनोनहि ॥ यतोमनु जेभ्योऽन्येपिसर्वेपशुपक्षिमृगादयःज्ञानिनःसंत्येवहीत्यन्वयः ॥ सर्वेऽपिमनुजादयोयथाविषयंयथोचितज्ञानाएवेतिभावः ॥ मनुजामानवाः संतिसाधुसत्यम् ॥ तुस्याद्भेदेवधा रणे ॥ हिहेतावप्यवधारणे ॥ अतोह्यनेनापिकेवलंनियतमपराक्रियाविशेषणमिदानींज्ञानित्वाविशेषात्प्राणिनांप्रतिनियतज्ञाननिबंधनव्यवहारसिद्धिः कथंस्यादित्याशंक्यता मुपपादयितुमाह ॥ ३६ ॥ तेषांमृगपक्षिणांयज्ज्ञानंस्वभावजम् ॥ शास्त्रजमव्याहतज्ञानजंचतन्नमृगपक्षिणाम् ॥ तुल्यमन्यत्तथोभयोःतथातेनप्रकारेणप्रतिनियतंतत्तत्स्व जातिप्रयुक्तोपयुक्तंविषयज्ञानादन्यद्यज्ज्ञानंशरीरमात्रोपयोगितदुभयोर्मृगादिमनुष्ययोः॥आहारनिद्रादिविषयज्ञाननिबंधनव्यवहारपार्थक्यसंसिद्धेरसांकर्यमितिभावः ॥३७॥

प्रागुक्तंराज्ञायन्मोहोज्ञानिनोरपितत्किमेतदितितत्रकिमाश्चर्यमित्याहमदृष्टांतम् ॥ हेराजन्ज्ञानेसत्यपिमोहात्ममत्वात्शावचंचुषुशिशुत्रोटिषुकणमोक्षादृतान्आदृतकण मोक्षान्क्षुधाबुभुक्षयापीड्यमानानपिएतान्पतंगान्पश्येत्यन्वयः ॥ ज्ञानेसत्यपीति ॥ येशावचंचुषुनिक्षेप्तव्यकणास्तेयद्यस्माभिरेवभक्ष्येरन्तर्हिनूनंवयंक्षुधानपीड्यामहेइतिस्वार्थं जानंतोपिस्वयंक्षुधापीड्यमानाअपिमोहान्ममत्वाद्वाशावचंचुष्वेवकणान्निक्षिपंतिपक्षिणइतिभावः ॥ पतेरंगच्पक्षिणि॥ चंचुस्त्रोटिरुभेस्त्रियौ ॥ आदृताःकणमोक्षायैस्तेकणमो क्षादृताः । वाहिताग्न्यादिषुपरनिपातः॥कणमोक्षाहितानित्यपिक्वचित्पाठः ॥३८॥ हे मनुजव्याघ्रराजन्मानुषालोभात्प्रत्युपकारायप्रत्युपकृतिलोभाद्धेतोः सुतान्सुतेषुविषये षुकालांतरेप्रत्युपकारमेतेऽस्मदर्थंकरिष्यंतीतिसाभिलाषाःसकामाःभवंतिइतिपादत्रयान्वयः ॥तत्रनिदर्शनमाह॥ननुभोराजन्त्वमेतान्लोकेप्रसिद्धान्पक्षिमृगादीन्ममत्वात्सुता न्प्रतिसाभिलाषान्सादृतान्किंनपश्यसि ॥ इतिचतुर्थपादान्वयः ॥ अहोराजन्नेतेयदिपशुपक्षिमृगादयोपिकिलप्रत्युपकारनिरपेक्षाअपिकेवलंममत्वादेवसुतान्प्रतिसाभिलाषाः सादराःदृश्यंतेकिमुतमानुषाममत्वाक्रष्टमानसाःप्रत्युपकारगृध्नवःसुतान्प्रतिसाभिलाषाःस्युःअतितरामेवेतिभावः ॥ मनुजोयंव्याघ्रइवशूरःश्रेष्ठःमनुजव्याघ्रः ॥ उपमितंव्याघ्रा

ज्ञानेपिसतिपश्यैतान्पतंगाञ्छावचंचुषु ॥ कणमोक्षादृतान्मोहात्पीड्यमानानपिक्षुधा ॥ ३८ ॥ मानुषामनुजव्याघ्रसाभिलाषाःसुतान्प्रति ॥
लोभात्प्रत्युपकारायनन्वेतान्किंनपश्यसि ॥ ३९ ॥ तथापिममतावर्त्तमोहगर्त्तेनिपातिताः ॥ महामायाप्रभावेणसंसारस्थितिकारिणा ॥ ४० ॥
तन्नात्रविस्मयःकार्योयोगनिद्राजगत्पतेः ॥ महामायाहरेश्चैषातयासंमोह्यतेजगत् ॥ ४१ ॥

दिभिःसामान्याप्रयोगइतिसमासः । स्युरुत्तरपदेव्याघ्रपुंगवर्षभकुंजराः । सिंहशार्दूलनागाद्याःपुंसिश्रेष्ठार्थगोचराः॥प्रश्नावधारणानुज्ञानुनयामंत्रणेननु । सुतान्प्रतिइतिप्रतियोगे द्वितीयासप्तम्यर्थेअत्रापिउपकृतपुत्रकर्तव्यप्रत्युपकारलोभात्पितरोमनुष्याःपुत्रवात्सल्यंकुर्युर्ममत्वाद्वविशेषतइत्यलंविस्तरेण ॥ ३९ ॥ यद्यप्यमीमनुष्यायथाप्रत्युपकारार्थंपु त्रान्पालयंतितद्वन्मोक्षार्थमपियतंतएव ॥ तथापिसंसारस्थितिकारिणामहामायाप्रभावेणममतावर्त्तेमोहगर्त्तेनिपातिताःइत्यन्वयः ॥ ममताआवर्त्तइवममतावर्त्तः ॥ तत्रतत्रचम हत्यामायायाःप्रभावःसामर्थ्यंसर्वाकलनशक्तिविजृंभितेन । अथवामहामायांप्रतिपूरयतिमहामायाप्रः सचासौभावश्चेतितेन ॥ भावःसत्तास्वभावाभिप्रायचेष्टात्मजन्मसु ॥ संसारस्यस्थितिःप्रवाहनित्यतयावस्थानंनकदाचिदनीदृशंजगदितिभावाभावादिजगद्रूपंसंसाररूपावेदसंसारस्थितिंकरोतीतितच्छीलःसंसारस्थितिकारीतेन ॥ ४० ॥ चशब्दोहेतौ यतोमहामायेतियाऽनादिःप्रसिद्धास्तिभवतीएषाजगत्पतेःहरेर्विष्णोःयोगनिद्रेतिकथ्यते ॥ तयाजगत्संमोह्यतेमुह्यत्संप्रयुज्यतेमोहपरायणंक्रियते ॥ तत्तस्मात्ज्ञाने सत्यपिपुत्रादिषुममत्वंकथंजायतेइतिअत्रविस्मयोनकार्यइत्यन्वयः ॥ विस्मयोद्भुतम् ॥ योगोनिद्रेवयोगनिद्राप्रपंचात्मावगमोयोगोत्रध्यानलक्षणोविषयेभ्यश्चित्तवृत्तिनिरोधोवि

वक्षितः ॥ नतुसाक्षान्निद्राअस्वमत्वाद्देवानाम् । यंगःसन्नहने पायध्यानसंगतिद्युक्तिपु ॥ अपूर्ववस्तुलाभेपिभेषजेपिचरोपिच । ममभायादुरत्ययेतिभगवद्वचनान्महामायायाः
प्राधान्यमाह ॥ ४१ ॥ हियम्मादनादिःप्रसिद्धा वैष्णवीमायाभगवतीऐश्वर्यादियुता ॥ अतःसादेवीस्वेच्छयादीव्यंतीसतीज्ञानिनामपिउपनिषत्स्थज्ञानानामपिपुंसांचेतांसिबला
त्सामर्थ्यादाकृष्यमोहायमांमारिकत्वायममत्वा यप्रयच्छतिददातिचित्तानिममत्वाधीनानिकरोतीत्यन्वयः ॥ स्थौल्यसामर्थ्यसैन्येषुबलंनाकाकसीरिणोः ॥ दाणायच्छःशिति
॥ ४२ ॥ तयादेव्याचराचरंविश्वंविसृज्यतेविशेषणसृज्यतेउत्पाद्यते ॥अथचसैषादेवीप्रसन्नासतीनृणांपुंसांवरदाभवति ॥ अप्रसन्नाऽवरदाभवति ॥ अथचसैषादेवीनृणांभक्ता
नांप्रसन्नासतीमुक्तयेचभवतीत्यन्वयः ॥तयाविसृज्यतेतयाअविसृज्यतेइत्यकारप्रश्लेषोविवक्षातोज्ञेयः । अइत्येततपृथगव्ययम् ॥ अमानोनाःप्रतिषेधवचनाइतिस्मरणात् ॥ अन्य
धुश्च ॥ अभावेनह्यनोनापीति ॥ चरतीतिचराचरंजंगमरूपंविश्वमित्यर्थः ॥ चारिष्णुजंगमचरंत्रसमिंगंचराचरम् । चारिचलिपतिवदीनांद्वित्वमच्याकूचाभ्यासस्यवा चरादीनांपचाद्य
चिद्द्विर्भावोऽभ्यासस्यागागमश्च आग्विधानसामर्थ्याद्धलादिःशेषोन अन्यथाऽकारादेशएववक्तव्यःस्यात् ॥ नचेहचरंचाचरंचेतिविगृह्यैकवद्भावेनविश्वविशेषणंचराचरमित्येतदिति

ज्ञानिनामपिचेतांसिदेवीभगवतीहिसा ॥ बलादाकृष्यमोहायमहामायाप्रयच्छति ॥ ४२ ॥ तयाविसृज्यतेविश्वंजगदेतच्चराचरम् ॥ सैषाप्रसन्ना वरदानृणांभवतिमुक्तये ॥ ४३ ॥ साविद्यापरमामुक्तेर्हेतुभूतासनातनी ॥ संसारबंधहेतुश्चसैवसर्वेश्वरेश्वरी ॥ ४४ ॥

शंकनीयम् ॥ विश्वग्रहणादेवजगद्ग्रहणादेववातस्यपौनरुक्त्यप्रसंगात् ॥ नहिस्थावरजंगमात्मकादन्यद्विश्वस्यशब्दवाच्यंवास्ति ॥ तस्माच्चराचरमिहजंगममेवविवक्षितम् ॥ विश्व
जगच्छब्दयोरिहभिन्नवाक्यस्थतयाविवक्षितत्वादपौनरुक्त्यम् ॥ सर्वसर्वविश्वमशेषंकृत्स्नंसमस्तनिखिलाखिलनिनिःशेषम् ॥ विष्टपंभुवनंजगत् ॥ जगतिजगद्विश्वम् ॥
जगत्स्याद्विष्टपेक्लीबेवायावनेजंगमेत्रिषुइतिरुद्रकोशः ॥ ४३ ॥ इहमहामायाअविद्यारूपाबंधहेतुःविद्यारूपातुमुक्तिहेतुरितिप्रतिपाद्यते ॥ तत्रअविद्यापक्षस्तावत्साप्रसि
द्धादेवीअविद्याविद्येतरा ॥ यद्वावेत्तिवित्ब्रह्मज्ञानसंपन्नःततोन्यःअवित्सांसारिकःतयातिअविद्या ॥ कीदृशीअविद्याअपरमापराउत्कृष्टामामोक्षलक्ष्मीःततोन्याऽपरमा ॥
अथवानविद्यतेपराउत्कृष्टामामोक्षलक्ष्मीर्यस्याःसाअपरमा ॥ अथवा ॥ अःविष्णुःपरमःपरोन्योधिकरणभूतोयस्याःसाअपरमा ॥ पुनःकीदृशीअविद्याअमुक्तेर्हेतुभूतान
विद्यतेमुक्तिर्यस्मात्त्रिवर्गात्सोमुक्तिस्त्रिवर्गःधर्मकामार्थलक्षणः क्षयस्थानवृद्धिलक्षणोवात्रिवर्गः तस्यहेतुभूता ॥ पुनःकीदृशीअविद्याअसनातनीनसनासदाभवाअसनातनी ॥
अनादिरपिह्यविद्याविद्याविनिवर्तनीयत्वादनित्याअध्रुवा ॥ पुनःकीदृशीअविद्यासर्वेश्वरीसर्वेईश्वराःईशनशीलाःस्वामिनःस्वस्वामिभावसंबंधिनोभवंति ॥ यतःसासर्वे

श्वरीअखिलप्रपंचरूपासैवेश्वरीऐश्वर्यसंपन्ना ॥ अतएवसंसारबंधहेतुःसंसारइतिबंधस्तस्यहेतुःकारणमथवासर्वेषांलोकानामीश्वराःब्रह्मविष्णुमहेश्वराः [illegible]
वैष्णवी माहेश्वरीतिव्यपदेशतस्तत्रतद्वशीकृत्याचिन्त्यातस्वामिनी तियावत् ॥ पुनःकीदृशीअविद्या साअःविष्णुस्तेनसहवर्तमाना विष्णुमायेत्यर्थः ॥ चकारेणविद्यारूपाहिमहा
मायेतिपक्षःसमुच्चीयते ॥ तथाहि ॥ सावैष्णवीमायामैव विद्याअतीतप्रपंचब्रह्मगोचरा ॥ पुनःकीदृशीविद्यापरमापरात्मात्मतत्त्वगोचरत्वाद्दुस्तरा ॥पुनःकीदृशीविद्या॥सनातनी
सत्यंज्ञानमनंतंब्रह्मेतिश्रुतेः ॥ ब्रह्मरूपत्वान्नित्या ॥ ब्रह्मतत्त्वगोचरत्वोपचाराचित्यापिशाश्वती ॥ शाश्वतस्तुध्रुवोनित्यःसदातनसनातनाः ॥ मायंचिरमित्यादिनाट्युःतुट्टिन्त्वा
तडीप् ॥ पुनःकीदृशीविद्यासर्वासंपूर्णाविश्वरूपा ॥ पुनःकीदृशीविद्याईश्वरस्यईश्वरी ईश्वरेश्वरीईश्वरस्यापिहिस्वरूपदिदृक्षुत्वाचिन्त्यावानव्ययत्वात अवश्याश्रयणीयत्वा
तस्याः ॥ स्थेशभासपिसकसोवरचिईष्टइतिईश्वरः ॥ ईश्वरइतिरूपम् अश्नुतेअश्नुव्यात्नोव्याने तिइतिविगृह्यईश्वरीतिभवति ॥ अश्नोतेराशुकर्मणिवरट्चेचोपधायाइत्यौणा
दिकोवरट् ॥ पुनःकीदृशीविद्या ॥ संसारबंधहेतुःपुंसःमुक्तेर्हेतुभूताकारणभूतेत्यर्थः ॥ संसाररूपबंधस्यहेतागंतासंसारबंधहेता तस्यसंसारबंधहेतुःपुंसः मुक्तेर्मोक्षस्यहेतुभूता ॥

राजोवाच ॥ भगवन्काहिसादेवीमहामायेतियांभवान्॥ ब्रवीतिकथमुत्पन्नाकर्मचास्याश्चकिंद्विज ॥४५॥ यत्प्रभावाचसादेवीयत्स्वरूपायदुद्भवा॥
तत्सर्वंश्रोतुमिच्छामित्वत्तोब्रह्मविदांवर॥४६॥ऋषिरुवाच॥नित्यैवसाजगन्मूर्तिस्तयासर्वमिदंततम्॥तथापितत्समुत्पत्तिर्बहुधाश्रूयतांमम ॥ ४७॥

ज्ञानादेवतुकैवल्यमितिसिद्धांतश्चविद्ययैवमुक्तिःनिदानमितितात्पर्यम्॥हेतुरिति हिगतौ तृचिषष्ठ्येकवचनांतमेतत ॥षष्ठीसमासः ॥ कर्तरिचेतितु षष्ठीसमासप्रतिषेधःप्रायिकोजनि
कर्तुः प्रकृतिरिति पाणिनिप्रयोगाल्लिंगादवसीयते ॥ हेतुशब्दस्तुउकारांतःकारणवाची ॥ अविद्याअहंमतिः विद्यातुमोक्षफलंज्ञानम् ॥ ४४ ॥ सुरथःसुमेधसंमुनिंमहामायाम
हिमानंप्रष्टुंवाक्यमूचे ॥ हेभगवन्द्विजसुमेधः मुनेभवानयांमहामायेतिब्रवीतिआहकाहिसादेवीसाचकथं केनप्रकारेण उत्पन्नाउदभूत् अस्याःदेव्याःकर्मचकिंपराक्रमश्चकइत्युवाच
राजेत्यन्वयः ॥ इतिहेतुप्रकरणप्रकर्षादिसमाप्तिषु ॥ ४५ ॥ पुनःपृच्छतिराजा ॥ हेब्रह्मविदांवरश्रेष्ठ त्वत्तः सकाशात्तत्सर्वंश्रोतुमिच्छामितदितिकिंसादेवी यत्प्रभावायत्सा
मर्थ्यायत्स्वरूपायदाकृतिःयदुद्भवाचयदुत्पत्तिकाच ॥ तस्याःदेव्याःसामर्थ्यंकीदृशंकिंस्वरूपंकीदृशंच प्रादुर्भवनमितिप्रश्नतात्पर्यम ॥ त्वत्तःत्वात् आख्यातोपयोगइत्य
पादानता यःभावोयस्याःसा यत्स्वरूपंयस्याःसायथोक्ता ॥ ब्रह्मविदंतिब्रह्मविदःतेषांमध्येवर ॥ वेदस्तत्त्वंतपोब्रह्मब्रह्माविप्रःप्रजापतिः ॥ब्रह्मवेदोब्रह्मतपोब्रह्मज्ञानंचशाश्वतम् ॥
ब्रह्मन्निति संबुद्ध्यंतः पाठःक्वचित ॥ ४६ ॥ अथसुमेधाऋषिरुवाच ॥ हेराजन्जगन्मूर्तिःसादेवी नित्यैवतयादेव्याइदंलोकमयंसर्वंततंकृतम् ॥ सातुकेनापिनततानकृता ॥

तथापिलोकोपकारार्थातत्समुत्पत्तिस्तत्प्रादुर्भावः॥बहुधाअनेकधाममवाचोयुक्तितःत्वयाश्रूयतामित्यन्वयः ॥ जगत्जगतीमूर्तिः कायोयस्याःसातथोक्ता ॥ तस्याःसमीचीना उत्पत्तिम्तत्समुत्पत्तिः ॥ मूर्त्तिःकाठिन्यकाययोः ॥ ४७ ॥ सादेवीदेवानांकार्यसिद्धयर्थंयदाविर्भवतिप्रकाशतेतदासादेवीनित्यापिसतीलोकेउत्पन्नालब्धजन्मेति अभिधीयतेकथ्यतेजनतयेत्यन्वयः ॥ आत्मवचनादात्मरूपत्वादकृतकत्वाच्चनित्यंतस्याइतिभावः ॥ प्रकाशेप्रादुराविःस्यात् ॥ आविर्भवतिप्रकाशतेइत्यर्थः ॥ नियतंभवानित्यानेध्रुवेत्यप् ॥ गतानुगतिकोलोकोनलोकः पारमार्थिकः ॥ सतीमप्यसतीमाहसीतांरक्षःक्षयाश्रयात ॥ महजोयःसमुल्लासःक्षीराब्धेःसोपिमंस्यते । चंद्रइत्य त्रकिंकुर्मोगतानुगतिकंजगत ॥ ४८ ॥ कल्पांतेप्रलयेब्रह्मादीनांनिशावसानेजगतिभुवनेएकार्णवीकृतेएकार्णवत्वेनकृतेसतिएकोदकपूरत्वावस्थापितेसतिभगवानैश्वर्यादिसंगतः प्रभुःस्वामीविष्णुर्व्यापकोनारायणःशेषमनंतफणीश्वरम्आस्तीर्यआप्रसार्यतल्पकीकृत्ययदायोगनिद्रामभजयोगनिद्रामिवासेवत । तदास्मिन्कालेयोगनिद्रोपलक्षितेकालेवि ष्णुकर्णमलोद्भूतौमधुकैटभावितिविख्यातौनाम्नाकथितौद्वावसुरौसुरविद्विषौब्रह्माणंविष्णोर्नाभिकमलस्थंवेधसंहिंसितुमुद्यतौ उद्युक्तावुन्मुखावभूतामिति श्लोकयुग्मान्वयः ॥

देवानांकार्यसिद्ध्यर्थमाविर्भवतिसायदा ॥ उत्पन्नेतितदालोकेसानित्याप्यभिधीयते ॥ ४८ ॥ योगनिद्रांयदाविष्णुर्जगत्येकार्णवीकृते ॥ आस्ती र्यशेषमभजत्कल्पांतेभगवान्प्रभुः ॥ ४९ ॥ तदाद्वावसुरौघोरौविख्यातौमधुकैटभौ ॥ विष्णुकर्णमलोद्भूतौहंतुंब्रह्माणमुद्यतौ ॥ ५० ॥ सनाभिक मलेविष्णोःस्थितोब्रह्माप्रजापतिः ॥ दृष्ट्वातावसुरौचोग्रौप्रसुप्तंचजनार्दनम् ॥ ५१ ॥

योगोनिद्रेवध्यानंयोगनिद्रातां वेवेष्टिव्याप्नोतिविश्वंविष्णुःजंगम्यतेजगतत्तस्मिन्यस्मिन्नर्णांस्यंभांसिसंतिबहूनिसोर्णवः ॥ अर्णसोलोपश्चेतिवः ॥ एकःकेवलोर्णवःसमुद्रःपूर्णोयस्मिं स्तत एकार्णवंजगत प्रलयतःप्राक्समार्णवत्वेनजगद्व्यवस्थापितंप्रलयेतु एकार्णवस्यजगतोभावःऐकार्ण्यम् ब्राह्मणादित्वात्ष्यञ् वृद्धिः स्त्रियामैकार्ण्यमेवऐकार्णवी षिद्गौरादिभ्यश्चेतिङीप् ॥ तयाएकार्णव्या एकार्णवत्वेनकृतंव्यवस्थापितंजगत्तस्मिन ॥ अथवा ॥ नियत्याभगवत्या जगत्येकार्णवेकृतेतिमुक्तसंशयः पाठः ॥ संवर्त्तःप्रलयःकल्पःक्षयःकल्पांतइत्यपि ॥ कल्पःशास्त्रेविधौन्यायेसंवर्त्तेब्रह्मणोदिने ॥ कल्पस्यांतोवधिःकल्पान्तस्तस्मिन् ॥ मन्यतेऽहमेवशूरइतिमधुः ॥ मधुःपुंस्यसुरेचैत्रेमधुकेसुरभावपि ॥ क्लीबंतुमधुमद्येस्यात्क्षौद्रेपुष्परसेपिच ॥ कीटस्येवभाःप्रभायस्यतत्कीटभंकर्णजंमलंतत्रभवःकैटभः ॥ बृंहतिवर्धतेब्रह्मातम् । विष्णोःकर्णांतर्येमलंतदुद्भूतौ ॥ ४९ ॥ ५० ॥ विष्णोर्नाभिकमलेस्थितःसप्रजापतिर्ब्रह्मातावसुरौचउग्रौदृष्ट्वाजनार्दनंचप्रसुप्तंयोगनिद्रापन्नंदृष्ट्वाएकाग्रहृदयस्थितःसन्हरेः विष्णोःप्रबोधनार्थाय हरिनेत्रकृतालयांतांयोगनिद्रांमहामायांतुष्टावस्तुतवान ॥ इति श्लोकयुग्मान्वयः ॥ नाभिरेवकमलंतत्रस्थितउपविष्टः ॥ ब्रह्माविप्रोपिकाश्चित्स्या

त् ॥ अतउक्तंप्रजापतिरिति । प्रजाप[illegible]यादतउक्तंब्रह्माइति ॥ अर्दहिंसायांचुरादिः जनानर्दयतिहिनस्तिजनार्दनः ॥ अर्दगतौयाचनेच भ्वादिःजनानूअर्दतिग च्छति ॥ टुष्टुस्तुतौस्तवनक्रियाफलंस्वरक्षालक्षणंब्रह्मणएवेत्यात्मनेपदेसतितुष्टुवेइतिपाठः ॥ अथवास्तवनक्रियाफलंपारंपर्यात्तदेवरक्षणेलक्षणमेवेतियुक्तं परस्मैपदंतुष्टावेति ॥ यदुक्तम् इतिहरेःप्रबोधनार्थायेतितुयद्यप्यव्यवहितंस्तवनक्रियाफलंसाक्षात्प्रयोजनम् ॥ तथापिप्रयोजनंदैत्यवधविधिद्वारकंपारंपर्यावधृतंदेवसंरक्षणमेवस्तवनक्रियाफलम् ॥ एकमद्वितीयम्अग्रंप्रमुखंहृदयंस्वांतंयस्यसएकाग्रहृदयः ॥ अनन्यमनस्कःस्थितःनिष्कंपः ॥ अथवा ॥ एकमद्वितीयमग्रंप्रधानंहृच्चित्तंयस्यसःएकाग्रहृत् अयेशुभावहेविधौ दैत्यवधलक्षणेविषयेस्थितःदत्तावधानःअयस्थितः ॥ हरेर्नेत्रेणवकृतआलयोययासातथोक्ता ॥ अथवाहारिणानेत्राभ्यांकृतआलयोगृहंयस्याःसातथोक्ता ॥ अथवा ॥ हरेर्नेत्रे णचक्षुषाप्रमाणेनकृतःआलयःअसंश्लेषःअनाशःअमोक्षोवायस्याःसातथोक्ता ॥ अथवा ॥ हरेःपरमात्मनोनेताप्रापयितावेदांतःहरिर्नेतातेनअकृतःआलयःगृहंप्रतिनियतं स्थानंयस्याःसातथोक्ताताम् ॥ प्रबोधनमेवार्थःप्रयोजनंतस्मैप्रबोधनार्थाय ॥ ५१ ॥ ५२ ॥ ब्रह्मातावत्तस्तोतुंस्वयमेवप्रतिजानीतेप्रतिज्ञांकरोति ॥ अतुलमसदृशंतेजोय

तुष्टावयोगनिद्रांतामेकाग्रहृदयस्थितः॥प्रबोधनार्थायहरेर्हरिनेत्रकृतालयाम् ॥५२॥ ॥ ब्रह्मोवाच ॥ ॥ विश्वेश्वरींजगद्धात्रींस्थितिसंहारकारिणीम्॥
स्तौमिनिद्रांभगवतींविष्णोरतुलतेजसः ॥५३॥ त्वंस्वाहात्वंस्वधात्वंहिवषट्कारःस्वरात्मिका ॥ सुधात्वमक्षरेनित्येत्रिधामात्रात्मिकास्थिता ॥५४॥

स्यसः अतुलतेजाःतस्यविष्णोर्ध्यानरूपांनिद्रांस्तौमि । तेजःप्रभावेदीप्तौचबलेशुक्रेपिकीर्तितम् । तेजःअसहनत्वेपि । यदाहुः । अधिक्षेपावमानादेःप्रयुक्तस्यपरेणयत् ॥ प्राणा त्ययेप्यसहनंतत्तेजःसमुदाहृतम् ॥ कीदृशींनिद्रां विश्वेश्वरींविश्वस्यईश्वरींव्यापिकांजनयित्रीम् ॥ अश्नोतेराशुकर्मणिवरट्चेचोपधायाः॥पुनश्छेदेतु ॥ कीदृशीं जगद्धात्रींजगतो धारयित्रींपोषयित्रींच ॥ पुनःकीदृशींस्थितिंसर्गसंहारमध्यमावस्थांकुर्वाणाम् ॥ संहारंचसर्गस्थित्युत्तरावस्थांकुर्वाणाम् ॥ सुप्यजातौणिनिस्ताच्छील्ये ॥ पुनःकीदृशींभगव तीम् ॥षडैश्वर्यसंगताम् ॥ जगदिति ॥ धात्रीमितिताच्छील्येतृन्योगे नलोकाव्ययसूत्रेणषष्ठीनिषेधात्कर्मणिद्वितीयांतंजगदिति ॥ एतेनविष्णुयोगनिद्रैवजगत्सर्ग स्थितिसंहारकारिणीब्राह्मीवैष्णवीमाहेश्वरीमयीशक्तिरितिस्तुतितात्पर्यंसूचितम् ॥ ५३ ॥ अशेःसरन् वन्वकत्वषत्वानि ॥ अक्षरंवर्णनिर्माणंवर्णमप्यक्ष रंविदुः । अक्षरंनक्षरंविंद्यादक्षरंश्रुतितोययोः ॥ अश्नातित्रींल्लोकान्भुंक्तेभूतात्मकत्वादक्षरा ॥ अश्नुतेव्याप्नोतिविश्वात्मकत्वाच्चअक्षरा ॥ यद्वा क्षरतिसंच लतिक्षरंनक्षरमक्षरंध्रुवम् अक्षराध्रुवा ॥ अतएव हेअक्षरेध्रुवेहेनित्येहेशाश्वतिहेदेवित्वंस्वाहादेवतोद्देशेनद्रव्यत्यागजनितदेवतापितृरूपत्वेनआस्थिताअंगीकृता ॥

भन्नासिशास्त्रेण । अव्ययंस्वाहेति ॥ यदभ्यभुः । स्वाहादेवहविर्दानेश्रौषड्वौषड्वषट्स्वधेतिच ॥ यद्वा ॥ त्वंस्वाहेति देवहविर्दानमंत्ररूपासि ॥ यद्वा ॥ त्वं
स्वाहेत्येवमसिस्वाहात्वंदेवस्वरूपेत्यर्थः ॥ यद्वा ॥ त्वंस्वाहासिहुतभुक्प्रियासि ॥ सुष्ठुआहूयतेस्वाहासास्त्यस्याःइतिवास्वाहा ॥ स्वाहाग्राप्यनलप्रिया ॥ यद्वा ॥ आका
रःस्यात्पितामहः । त्वंसुष्ठुआंपितामहंब्रह्माणंजिहीषेगच्छसिस्वाहासि त्र्यसिब्राह्मयसि ॥ आतोनुपसर्गेकः ॥ हेदेवित्वंस्वधापितृद्देशेनदीयमानद्रव्यजनिततृप्तिरसि ॥ यद्वा
॥ त्वंस्वधेत्येवमत्सिस्वधात् ॥ स्वधेतिमंत्रतोभुंजानापितृरूपासीत्यर्थः ॥ यद्वा ॥ अकारोवासुदेवःस्यात् ॥ सुष्ठुअंवासुदेवंदधासिपोषयसिस्वधासिलक्ष्मीरसि ॥ हेदेविहि
यतःत्वंवषट्कारोसि ॥ अतःवषडिंद्रायेतिवषट्कारभागिंद्रइतित्वमिद्राण्यसीत्यर्थः ॥ यद्वा ॥ हेदेवित्वंहित्वमेववषट्कारोसि वषट्कारोयजमानः ऋत्विक्चासि॥ हिहेतावव
धारणे ॥ हेदेवित्वंस्वरात्मिका ॥ स्वःस्वर्गःआत्मायस्याःसास्वर्गरूपासि ॥ यद्वा ॥ त्वंपरलोकात्मासि ॥ स्वर्गेपरेचलोकेस्वः ॥ यद्वा ॥ त्वंस्वरात्वंस्वरात्मिकाऽनुदात्तादि
स्वरूपरूपासि अथचनिषादऋषभादिस्वरात्मिकाप्यसि ॥ अथवा ॥ वषट्कारस्वरात्मिकाइत्येकंपदम् ॥ वषट्कारयतिवषट्कारंस्वःफलंतपःप्रयोजनमात्मायस्याः
सा॥वषट्कारप्रवर्तकस्वर्गरूपफलात्मासि॥ हेदेवित्वंसुधामत्सिसुधात्वअसि ॥ हेदेवित्वंत्रीह्लोकांस्त्रीन्वेदांस्त्रीन्ब्रह्मविष्णुमहेश्वरान्वादधासिइतित्रिधासि ॥यद्वा॥ त्रिधामासि॥

अर्धमात्रास्थितानित्यायानुच्चार्याविशेषतः ॥ त्वमेवसंध्यासावित्रीत्वंदेविजननीपरा ॥ ८८ ॥

त्रीणिधामानिगृहाणिभुवनलक्षणानिदेहानिब्रह्मादिरूपाणितेजांसिचंद्रार्काग्निरूपाणिप्रभावरूपाणिचत्रिशक्तिलक्षणानियस्याः सात्रिधामा ॥ हेदेवित्वं त्र्यात्मिका ॥
त्रैङ्पालने ॥ त्रायतेत्राः विष्णुःक्विप्त्रा आत्मास्वभावोयस्याःसाविष्णुरूपासि ॥ यद्वा संपदादित्वाद्भावेक्विप् ॥ त्राणंत्राः पालनमात्मास्वरूपंयस्याःसा पालनस्वरूपासि ॥
यद्वा हेदेवित्वंत्रिधात्रिभिःप्रकारैःएकमात्रद्विमात्रत्रिमात्ररूपस्वरा ॥ परंपरयावर्णात्मकह्रस्वदीर्घप्लुतभेदभिन्नमात्राआत्मायस्याः सात्रिधामात्रात्मिका स्वरवर्णरूपासिस्थिता
सिअस्थितामिच ॥ यद्वा ॥ त्रिधात्रिभिःप्रकारैःब्राह्मीवैष्णवीमाहेश्वरीरूपाःमातरः आत्मास्वरूपंयस्याःसात्रिशक्त्याकृतिस्त्रिमात्रात्मिकेयंविष्णुयोगनिद्रास्थितेति ॥ त्रिधा
मात्रात्मिका ॐकाररूपेतिचमात्राअकारःउकारःमकारश्चेतितदात्मिकातत्स्वरूपेतिकश्चिदोम्पदगतवर्णानभांक्षीत् ॥ तच्चपापात्पापीयः ॥ ईदृशीमोम्पदव्युत्पत्तिमत्सूत्राम्
अंधस्यचांधलग्नस्यविनिपातःपदेपदेइत्यंधपरंपरापारंपर्यपर्यागतामंधकुक्कुटीगतिमिवपदेपदेस्खलंतींप्रतिकियदवतुष्यामःकिं ॥ यद्वा तुष्यामः॥ कियद्वातुष्यामः॥ तथाहि ॥
वर्णेषुयेवर्णैकदेशावर्णांतरसमानाकृतयस्तेषु तत्कार्यंनभवति ॥ तच्छायानुकारिणोहितेनपुनस्तएवेतिपृथक्प्रयत्ननिवर्त्यंहिवर्णमिच्छंत्याचार्याः ॥ दर्शिताचास्माभिरोंपदव्यु
त्पत्तिरोंनमश्चंडिकायाइत्यत्रावतेष्टिलोपश्चेतिसूत्रइत्यलंविस्तरेण ॥ ५४ ॥ पूर्वत्रत्रिधामात्रात्मिकाइतिविशेषणेनअकारादिस्वररूपमात्रकात्मतोक्ता ॥ अर्द्धमात्रात्मिकाते

नतुककारादिव्यंजनरूपमात्रकात्मतोच्यते ॥ हेदेवित्वमर्धमात्राअर्धमात्राअर्धमात्रा

स्वोद्विमात्रोदीर्घउच्यते ॥ त्रिमात्रस्तुप्लुतोज्ञेयोव्यंजनंचार्धमात्रकमिति ॥ १ ॥ अथवापूर्वत्रत्रिधामात्रात्मिकेत्यनेनओमात्मकत्वंविवक्षितम् ॥ तत्रओंइतिद्विमात्रेदीर्घत्वात् ॥ मकारस्त्वर्धमात्रःव्यंजनत्वात् ॥ एवंत्रिधामात्रात्मकता ॥ अथवा ॥ ओमभ्यादानइतिसूत्रतोवेदादिप्रारंभेॐअग्निमीळेपुरोहितमित्यादौओंशब्दओंइतिप्लुतः ॥ एवंत्रिधा मात्रात्मकता ॥ अथवा ॥ प्रणवष्टेरितिसूत्रेणयज्ञकर्मणिअपांरेतांसिजिन्वतो३मृइत्येवंपादस्यवाअर्द्धस्यवाअंत्यस्याक्षरस्यो ३म् शब्दस्त्रिमात्रआदिश्यतेएवंत्रिधामात्रात्मक ता ॥ तत्रो ३म् शब्देमकाररूपायाअर्द्धमात्रास्थितानित्याध्रुवामोक्षंसूचयंतीविशेषतः ॥ अनुच्चार्या ॥ परमात्मरूपत्वात् ॥ यतोवाचोनिवर्तंते अप्राप्यमनसासहेतिश्रुति विशेषतः ॥ लक्षणीयासाअर्धमात्रात्वमेव ॥ अर्धमात्रासूचितायामुक्तिःसात्वमेवेतिभावः ॥ अर्धमात्रायामर्धरूपतयास्थितेत्यपिव्याख्यातम् ॥ अथच ॥ अंविष्णुंयातिअयार मासात्वमेव ॥ अथचवदेःक्विप् ॥ वदतीतिउत्वाचकःशब्दः ॥ नविद्यतेउत्वाचकःशब्दोयस्याःसानुत्यतोवाचोनिवर्तंतेअप्राप्यमनसासहेतिश्रुतेः ॥ चरितुंगंतुंप्राप्तुमर्हाचार्या ॥ अनुत्चसाचार्याचअनुत्चार्यापरब्रह्मतासात्वमेव ॥ हेदेवित्वमेवसंध्यासि ॥ संध्यायंत्यस्यांसंधीयतेअहोरात्रौवास्यांसंध्यापितृप्रसूः ॥ पितॄणांमातासीतियावत् ॥ अथवा ॥

त्वयैतद्धार्यतेविश्वंत्वयैतत्सृज्यतेजगत् ॥ त्वयैतत्पाल्यतेदेवित्वमत्स्यंतेचसर्वदा ॥ ५६ ॥

हेदेवित्वमेवसावित्री ॥ सवितुरयंसावित्रीऋगसि ॥ यद्वा ॥ साप्रसिद्धासावित्रीवैष्णवीशक्तिरसीतियावत् ॥ यद्वा ॥ सवितादेवतायस्याःसातदादिव्याहृतिरहिताऋक् ॥ सैवव्याहृतिसहितागायत्रीत्युच्यते ॥ हेदेवि त्वं वेदजननीगायत्र्यसिइतियावत् । नित्यस्यापिसतोवेदस्यगायत्र्युपदेशानुदयाद्वेदाध्ययनानुदयइतिगायत्र्युपरिष्टैवजननीवेदा ध्ययनजननीत्यध्येयाध्ययनैक्योपचारौचित्यतोवेदंजनयतिवेदजननी ॥ वेदस्यवाजननीवेदमातागायत्रीत्युक्तम् ॥ हेदेवित्वंपरासिश्रेष्ठासि ॥ यद्वा ॥ पॄपालनपूरणयोः पिपर्ति इतिपरा ॥ वेदांश्चजनांश्चवेदजनान्नयंतिसौख्यंप्रापयंतीतिवेदजनन्योब्राह्मणायास्तासांपरापालयित्रीचत्वमेवासि ॥ देवजननीतितुपाठे देवानांजननी अदितिस्त्वमेवपराउत्तमा ॥ यद्वा वेदजननींगायत्रींपांतिवेदजननीपाःऋषयःतानरक्षितुंरासिगृह्णासिवेदजननीपरात्वमेवासि ॥ ५५ ॥ इहहिपाठक्रमा दर्थक्रमोबलीयानितिसृष्ट्याद्युपक्रम्योच्यते ॥ हेदेवित्वयाब्राह्म्याशक्त्याएतज्जगत्सृज्यतेउत्पाद्यतेहेदेवित्वयावैष्णव्याशक्त्याएतज्जगत्पाल्यतेदुःखाद्रक्ष्यते ॥ हेदेवित्वं रौद्रीशक्तिः सतीएतज्जगदंतेऽवसानेअत्सिखादसि ॥ तदित्थंसर्वदापुनःपुनःक्रमशःसर्गस्थितिसंहारलक्षणत्रिविधावस्थापन्नमेतद्विश्वंवस्तुतस्त्वयैकयापिब्राह्मीवैष्णवीरौद्री

व्यपदेशभेदभिन्नयाशक्त्याधार्यतेआत्मशक्त्यामधिकरणरूपायांविश्वनाधेयीक्रियतेत्वयेतितात्पर्यंसर्वंददासीत्यन्वयः ॥ ५६ ॥ इहजमन्मयेइतिपाठः ॥ मयगतौ ॥ मयतेजा नातिइतिमया ॥ पचाद्यचिस्त्रियांटाप् ॥ जगतोमयाजगन्मया ॥ हेसर्वज्ञेसंबुद्धौहेजगन्मयेहेभुवनज्ञे ॥ सर्वेगत्यर्थाधातवःप्रयोगाद्ज्ञानार्थाः ॥ जगन्मयिइतिपाठेपिसंबुद्धयन्त मेव॥ देव्यानयास्त्रष्टव्यत्वेनपालनीयत्वेनसंहर्तव्यत्वेनच देवीकर्तृकजगत्कर्मकतत्तत्सर्गादिक्रियाविषयभूताज्जगतोहेतोरागताजगत्सर्गादिव्यापारमुद्दिश्यागताप्रादुर्भूता देवीजग न्मयीत्युच्यते ॥ ततआगतइत्यधिकृत्यमयडितिसूत्रेणहेतुभ्योमनुष्येभ्यश्चमयट्प्रत्ययः ॥ ततआगतइत्यर्थेजगतोहेतोरागतादेवीजगन्मयी ॥ टित्त्वात्ङीप् ॥ ह्रस्वः ॥ अथवा तत्प्रकृतवचनेमयट् ॥ प्रकृतंप्रस्तुतमुच्यतेस्मिन्नितिप्रकृतवचनंतदितिप्रथमासमर्थात्प्रकृतवचनाभिधेयेमयट् ॥ जगत् प्रकृतंप्रस्तुतंकर्त्तव्यत्वेनोच्यतेऽस्यांजगन्मयीसंबुद्धौ ह्रस्वः ॥ हेदेविहेजगन्मयिभुवनज्ञे ॥ अथवा ॥ हेजगन्मयिजगन्निर्मातुमागतेजगन्निर्माणकारणादागतेत्वमस्यजगतःविसृष्टौविशेषतःसृष्टौउत्पादनेविषयेसृष्टिरूपासि ॥ तथां तेवसानेसंहारेविषयेसंहृतिरूपाचासीत्यन्वयः ॥ सृष्टिस्रष्ट्र्योःपालनपालयित्र्योःसंहृतिसंहर्त्र्योश्चाभेदेनातिशयोक्तिः॥देव्याःसर्वात्मकत्वेनवास्वरूपकथनम् ॥ हेदेविजगन्मयि ब्रह्मणिवर्त्ततइतिव्यपदेशमात्रंसृष्ट्यादिकंतुत्वमेवचकरोषिनाहमितिनम्रोक्तिरप्यवसेया ॥ ५७ ॥ हेदेवित्वंमहतीविद्यापरब्रह्मगोचरज्ञानरूपासि ॥ हेदेवित्वंमहतीअविद्याअ

विसृष्टौसृष्टिरूपात्वंस्थितिरूपाचपालने ॥ तथासंहृतिरूपांतेजगतोस्यजगन्मये ॥ ५७ ॥ महाविद्यामहामायामहामेधामहास्मृतिः ॥
महामोहाभगवतीमहादेवीमहेश्वरी ॥५८॥ प्रकृतिस्त्वंचसर्वस्यगुणत्रयविभाविनी ॥ कालरात्रिर्महारात्रिर्मोहरात्रिश्चदारुणा ॥ ५९ ॥

निर्वचनीयाविद्याप्रपंचपरिविज्ञानरूपासि ॥ हेदेवित्वंमहतीमाया ॥ अनात्मन्यात्मेतिबुद्धिरात्मन्यप्यनात्मेतिबुद्धिर्माया ॥ हेदेवित्वंमहामेधामहतीधारणावतीबुद्धिःमहती अमेधाअधारणावतीधीः॥हेदेवित्वंमहास्मृतिर्महतीस्मृतिर्ध्यानरूपामहतीअस्मृतिःअध्यानरूपा ॥ हेदेवित्वंमहामोहामहाममतामहाअममताच ॥ हेदेवित्वंभगवतीऐश्वर्ययुक्ता च अभगवतीअनैश्वर्यासि ॥ हेदेवित्वंमहादेवीमहादेवस्यपत्नी ॥ हेदेवित्वंमहेश्वरी ॥ महतीईश्वरीव्यापकस्वभावा ॥ अश्नोतेराशुकर्मणिवरच्चेचोपधायाः ॥ अथच ॥ महतीविद्यास्यांसामुक्तिःमहतीमायाअविद्यायस्यांसाअमुक्तिः इत्थंमहामेधास्मृतिः महास्मृतिरितिइष्टदेवतोपासना महामोहा तृष्णा अस्मृतिः मूर्छानिद्राच ॥ ५८ ॥ हेदेवित्वंचत्वमेवसर्वस्यप्रकृतिरिति ॥ प्रक्रियतेसर्वमनयाप्रकृतिः सत्त्वरजस्तमःसाम्यावस्थाअव्यक्ताख्याप्रधानम् ॥ अथचत्वमेवगुणान्सत्त्वरजस्तमांसिविभावयसि ॥ पृथक्कृ त्यजगद्रूपेणावस्थापयसि ॥ गुणत्रयविभाविनी ॥ सत्त्वंज्ञानसुखहेतुःरजोरागात्मदुःखहेतुःतमआवरकंमोहहेतुःगुणाःप्रकृतिधर्माः ॥ हेदेवित्वमेवकालरात्रिः ॥ जगत्संहारका रिणीयामभंगिनीयत्रप्रलीयतेजगत् ॥ हेदेवित्वमेवमहारात्रिःयत्रचतुर्मुखोमुक्तिमगात् ॥ हेदेवित्वमेवदारुणा मोहरात्रिश्चासि ॥ममतागर्भपातिनीमहामायाख्यासंसृतिःदंष्ट्राक

रालाविरुद्धपत्न्यः अतिदारुणाः ॥ मोहरात्रिर्मोहतनुर्जगत्सूत्रेजगत्करी ॥ ५९ ॥ हेदेवित्वंश्रीः संपत्तिरसिहरिप्रियाप्यसि ॥ हेदेवित्वमीश्वरीईश्वरस्यपत्न्यसि अश्नोतेराशुकर्माणिवरट्चेचोपधायाइति ॥ जगद्व्यापिनीचासि ॥ हेदेवित्वंह्रीः असि ॥ ह्रींकारोवैप्राणइतिश्रुतेः ॥ प्राणभूतासि ह्रीमितिमकारांतमव्ययं प्राणवाचि ॥ ह्रीमनुनासिकस्वरांतपाठेतुदेवीप्रणवासीतिरहस्यम् ॥ ह्रीस्त्वमितिचपाठेलज्जाशब्देनपौनरुक्त्यंस्यात् ॥ हेदेवित्वंबुद्धिरसिचिन्मात्रब्रह्मरूपासि त्वंबोधलक्षणासि ॥ बोधयितृव्यापारदर्शनासि अथवा बोधरूपाविविधागमरूपासि ॥ हेदेवित्वंलज्जासिव्रीडासि ॥ हेदेवित्वंपुष्टिरसि अवयवोपचितिरसि ॥ हेदेवि त्वंतथातेनतुष्टिरसि ॥ प्रीतिरसि ॥ हेदेवित्वंशांतिरूपारतिविषयव्यावृत्तिरसि ॥ हेदेवित्वमेवक्षांतिस्तितिक्षाचासि ॥ ६० ॥ हेदेविहेचंडिकेत्वंतथाउक्तलक्षणप्रकारेण खड्गिनी शूलिनीगदिनीचक्रिणीशंखिनीचापिनीबाणाबाणवतीपरिघायुधाचसतीअतएवघोराअत्युग्रदर्शनाभुशुंडीतिभाष्यसेइत्यन्वयः॥अतइनिठनौ गदिनीत्यत्रतुव्रीह्यादिभ्यश्चेतिइनिःसर्वत्र ॥ ऋन्नेभ्योङीप्॥बाणाबाणवतीअर्शआदिभ्योऽच्मत्वर्थीयः॥परिघः परिघातनः लोहबद्धोलगुडआयुधंयस्याः सातथोक्ता ॥ खड्गशूलगदाचक्रशंखचापबाणपरिघै

त्वंश्रीस्त्वमीश्वरीत्वंह्रीस्त्वंबुद्धिर्बोधलक्षणा ॥ लज्जापुष्टिस्तथातुष्टिस्त्वंशान्तिःक्षांतिरेवच ॥ ६० ॥ खड्गिनीशूलिनीघोरागदिनीचक्रिणीतथा ॥
शंखिनीचापिनीबाणाभुशुंडीपरिघायुधा ॥ ६१ ॥ सौम्यासौम्यतराशेषसौम्येभ्यस्त्वतिसुंदरी ॥ परापराणांपरमात्वमेवपरमेश्वरी ॥ ६२ ॥

रष्टाभिरायुधैरष्टभुजाघोरात्युग्राकृतिश्चंडिकादेवी॥ भुशुंडीतिवक्ष्यमाणलक्षणासतीप्रमादत्विितिभावः॥मुडिखंडने॥शत्रून्मुंडतिखंडयतिइतिकर्मण्यणिस्त्रियांङीप्शत्रुमुंडी॥भुजैःशत्रुमुंडीभुजशत्रुमुंडीचंडिका ॥ अत्रहिभुजशत्रुमुंडीशब्दैःपृषोदरादीनियथोपदिष्टमितिशिष्टोपदिष्टत्वातजइत्यस्यअत्रुमइत्यस्यचलोपेकृतेभुशुंडीतिव्युत्पाद्यते॥भुजाभिरष्टभिःशत्रूनष्टावष्टाभिरायुधैः ॥ मुंडत्यत्युग्रचंडोक्तिर्भुशुंडीचंडिकास्मृता॥यद्वाहुःउड्डीयोड्डीयचप्राप्यनदंतीदशकर्तिका ॥ क्रमतेचानतांगीयासाभुशंडीनिगद्यते॥ एतेन बाणभुशुण्डीपरिघायुधेत्येकंपदमितिव्याख्यावगंतव्या । बाणइत्यनाकारःपाठःइत्युक्तिरपिन्युदस्ता ॥ भुशुंडीगोफणिकेत्युक्तिरप्ययुक्तमूलोपेक्षणीयाप्रेक्षावद्भिः ॥ परिघोलोहार्गलमितितुशब्दवोर्थतश्चभ्रष्टंव्याख्यातम् ॥यदाहक्षीरस्वामी॥ परितोहंतिपरिघः परौघइतिहेर्घत्वम् ॥ लोहबद्धोलगुडइति॥६३॥ हेदेवित्वमेवजगतीसौम्यासिअक्रूराप्रशांतासि सोमदैवतिकाप्यासि । अथवा । शोभनामालक्ष्मीःयस्यासौसुमहःविष्णुः सुमस्यभावःसौम्यंशोभनलक्ष्मीकत्वं तत्यस्याअस्त्यसौसौम्या । अर्शआद्यच् । शोभनलक्ष्मीकत्वयुतासि ॥ अथवा । उमासहितःसोमः उमापतिस्तस्यभावःसौम्यंतयस्याःसासौम्याउमापतित्वयुतासि ॥ हेदेवित्वमेवसौम्यतरासि ॥ सूयतेसुधांसोमश्चन्द्रःसोमस्येयं

सुधासौमी ॥ सौमींसुधामर्हतिसौम्यादेवावलिस्त्वंच । दंडादित्वा यः । तयोस्त्वमतिशयेनसौम्यासौम्यतरा ॥ द्विवचनविभज्योपपदेतरबीयसुनाविति द्विवचनेउपपदेतरप् ॥ तमिलादिष्वाक्रुत्वसुचः इतिपुंवद्भावः ॥ हेदेवित्वमशेषसौम्येभ्यः अखिलसुंदरेभ्यःपदार्थेभ्यस्तुपार्थक्येनअतिसुंदरीअसि ॥ सुष्ठुनंदयतिसुंदरी मनोज्ञा मनोरमा सोमदैवतके सौम्यः सौम्यःस्यात्सुंदरेपिच॥ सौम्योऽक्रूरेबुधेसौम्यःसौम्यःशांतेप्रयोगतः ॥ हेदेवित्वमेवपराश्रेष्ठा । हेदेवित्वमेवपराणांश्रेष्ठातः परमा॥अत्युत्कृष्टापरमोत्तमा ॥ व्यवस्थात्र तुश्रेष्ठत्वस्यविवक्षितत्वात । अन्यथापरेषामितिस्यात् । अथवा । परंब्रह्मअणंतिकथयंतिपराणःक्विप् ॥ तेषांमध्येत्वंपरमासि ॥ यद्वापरेचापरेचपरापराः ॥ द्वंद्वेचेतिसर्वनामत्वाभावात्सुडागमाभावः ॥ तेषांत्वंपरमा । अथच । हेदेवित्वमेवपरमा । उत्कृष्टालक्ष्मीः । अथवा । परमःईश्वरःतस्यस्त्रीत्वमेवपरमेश्वरी । ईश्वरीस्वामिनीदुर्गालोकानांव्यापिकाचसा ॥ ६२ ॥ हेअखिलात्मिकेदेविक्वचित जगतिसतअसद्वायत्किंचिद्वस्तुपदार्थरूपंप्रतीयतेतस्यसर्वस्यसदसदात्मकस्ययाशक्तिःसामर्थ्यंसात्वमेवासि ॥ अतःपरंमयाकिंस्तूयसेइत्यन्वयः ॥ पदंचपदार्थश्चताभ्यांक्रियमाणास्तुतिश्चस्तोताचस्तुत्यंचतत्तदुचितशक्तिश्चत्वमेवेतित्वत्तोन्यत्वाभावाद्भेदनिबंधनास्तुतिःकथंप्रवर्तनीयेति

यच्चकिंचित्क्वचिद्वस्तुसदसद्वाऽखिलात्मके ॥ तस्यसर्वस्ययाशक्तिःसात्वंकिंस्तूयसेमया ॥ ६३ ॥ ययात्वयाजगत्स्रष्टाजगत्पात्यत्तियोजगत् ॥
सोपिनिद्रावशंनीतःकस्त्वांस्तोतुमिहेश्वरः ॥६४॥ विष्णुःशरीरग्रहणमहमीशानएवच ॥ कारितास्तेयतोऽतस्त्वांकःस्तोतुंशक्तिमान्भवेत् ॥६५॥
सात्वमित्थंप्रभावैःस्वैरुदारैर्देविसंस्तुता ॥ मोहयैतौदुराधर्षावसुरौमधुकैटभौ ॥ ६६ ॥

भावः॥इयमेवचपरमावधिस्तुतिरतोऽपिकानामस्तुतिरित्यपरोभावः ॥ अग्न्यादितत्तदौचित्यतत्तदर्थक्रियाकरीशक्तिरप्रतिबद्धात्मधर्मः सामर्थ्यशब्दिता ॥ ६३ ॥ हेदेवित्वांस्तोतुमिहकईश्वरःकःसमर्थोस्तिनकोपि ॥ तथाहिययाजगत्स्रष्टाउत्पादयिता । तृन्नंतोयम् । यद्वा । भविष्यदनद्यतनेलुडन्तोयम् ॥ यःजगत्पातिरक्षतिभविष्यत्सामीप्येलट् ॥ यद्वाजगत्पाताइतिपाठः ॥ भविष्यदनद्यतनेलुडंतोयम् ॥ योवमानेजगत अत्तिसंहरति ॥ सोपिविष्णुरपिययायोगनिद्रयात्वयादेव्यानिद्राधीनतांगमितः ॥ वशींवंध्यगवीवश्यासुताग्नीकारिणीवशा । इच्छायंत्रणयोःपुंसिप्रभुत्वेचवशंगतः ॥ ६४ ॥ हेदेवियतःत्वयामहामायया अहंब्रह्माविष्णुश्चईशानश्चतेत्रयोपिशरीरग्रहणंकारिताःशरीरंगृह्णन्तःकारिताःममतावृताःकृताः ॥ अतस्त्वांकःपुमान्स्तोतुंशक्तिमान्भवेत ॥ नकोपि ॥ यःकोपिशरीरधारीसत्वांस्तोतुमसमर्थएवतदन्यस्तुमुक्तस्त्वद्रूपएवसन्कथंत्वामेवस्तोष्यतित्वंचाशरीरिणीस्तुतिश्चस्तुत्यस्तोतृभेदनिबंधना ॥ अतस्त्वद्विषयास्तुतिःकथंघटेतसाकल्येनेतिस्तुत्युपसंहारएववरमितिभावः ॥६५॥ हेदेवित्थंवर्णितैरुदारैर्दक्षिणैःसरलैर्वैरैःस्वैरात्मीयैःप्रभावैःसामर्थ्यविशेषैःसंस्तुताजगन्मोहयंतीत्वमुएतौइमौ । यद्वा । आइतौएतौआगतौदुर्धर्षौदुःखेनाभिभवनीयौमधुकैटभौनामअसुरौसुरद्विषौमोहय

अविवेकंप्रापयेत्यन्वयः ॥ दक्षिणेसरलोदारौ ॥६६॥ हेदेवित्वयाजगत्स्वाम्यच्युतः दैत्यारिर्विष्णुर्लघुशीघ्रंप्रबोधंचउन्निद्रभावंनीयतांत्वयासमुच्यताम् ॥ किंचएतौमहासुरौ हंतुमस्यअच्युतस्यविष्णोर्बोधश्चक्रियताम् उत्साहानुकूल्यंबुद्ध्युन्मेषश्चक्रियतांरच्यतामित्यन्वयः ॥ प्रबोधमितिप्रधानेकर्मणिद्वितीया ॥ अप्रधानेकर्मणितुनीयतामितितिङा भिहितत्वात्प्रथमा ॥ ६७ ॥ तदातस्मिन्प्रलयेकालेतत्रविष्णुनाभिकमलेवेधसाब्रह्मणाएवंस्तुतातामसीतमोगुणसंमतानिद्रात्मिकादेवीमधुकैटभौनिहंतुंविष्णोःप्रबोधनार्थायत स्यैवनेत्रास्यनासिकाबाहुहृदयेभ्यस्तथोरसःवक्षसश्चनिर्गम्यव्यक्तजन्मनःप्रकटजननस्यब्रह्मणः अव्यक्तजन्मनश्चब्रह्मणः दर्शनविषयेतस्थौप्रकटीबभूवेतिश्लोकद्वयान्वयः ॥ अव्यक्तात्प्रधानाज्जन्मयस्यसः अव्यक्तादात्मनःजन्मयस्यवा । यतोसावात्मनाभूत् । नेत्रेचआस्यंचनासिकाचबाहवश्चहृदयंचेतिद्वंद्वः ॥ प्राण्यंगत्वात्प्राप्तस्यैकवद्भावस्यनद धिपयआदीनीतिनिषेधाद्बहुवचनम् । यद्वा । अयंतेअयाः प्राणाः नेत्रास्यनासिकाबाहुहृत्तेनमहिताअयाःप्राणाःउच्छ्वासनिश्वासलक्षणाःतेभ्यःसकाशेभ्यःउरसश्चनिर्गत्य निद्रा ब्रह्मदर्शनपथमगमदितिभावः ॥ ६८ ॥ ६९ ॥ तयानिद्रयादेव्यामुक्तःपरित्यक्तोजगन्नाथोजनार्दनःविष्णुश्चएकार्णवेजगत्येकजलपूरेअहिशयनात्शेषनागशयनात्सकाशादु

प्रबोधंचजगत्स्वामीनीयतामच्युतोलघु ॥ बोधश्चक्रियतामस्यहंतुमेतौमहासुरौ ॥ ६७॥ ऋषिरुवाच ॥ ॥ एवंस्तुतातदादेवीतामसीतत्रवेधसा ॥ विष्णोः प्रबोधनार्थायनिहंतुंमधुकैटभौ ॥ ६८ ॥ नेत्रास्यनासिकाबाहुहृदयेभ्यस्तथोरसः ॥ निर्गम्यदर्शनेतस्थौब्रह्मणोव्यक्तजन्मनः ॥ ६९ ॥ उत्तस्थौचजगन्नाथस्तयामुक्तोजनार्दनः ॥ एकार्णवेहिशयनात्ततःसददृशेचतौ ॥ ७० ॥ मधुकैटभौदुरात्मानावतिवीर्यपराक्रमौ ॥ क्रोधरक्तेक्ष णाहंतुंब्रह्माणंजनितोद्यमौ ॥ ७१ ॥

त्तस्थौउत्तस्थिवान्ततःशयनादुत्थायउत्थानादनंतरंवासजनार्दनःतौमधुकैटभौददृशे ॥ नात्रपितंददृशातेपरस्मैपदंवाक्यात्कर्त्रेगिकर्मव्यतिहारेआत्मनेपदम् ॥ विष्णुकर्तृकंदे त्यकर्मकंतावद्दर्शनंव्यतिबभूवे । अथचतावत् ॥ दैत्यकर्तृकविष्णुकर्मकंदर्शनंव्यतिबभूवे अन्यथाददर्शइतिस्यात् ॥ ७० ॥ कीदृशौददृशेजनार्दनः ॥ मधुश्चकैटभश्चतौ मन्यवेहस्ववीरइतिमधुः । कीटस्येवभायस्यतत्कीटभंकर्णमलंतत्रभवःकैटभः । इहदिपृषोदरादित्वाद्भइत्युत्तरपदलोपोद्रष्टव्योभीमसेनोभीमइतिवत्॥ क्वचित्तवृत्तभंगमनुसृत्यत तश्चमधुकैटभौदुरात्मानावितिपाठः । युजोर्जेनसरिद्भर्तुःपथ्यावक्त्रंप्रकीर्तितमितिद्वितीयेचरणेअतिवीर्यपराक्रमावित्यत्रचतुरक्षरादूर्ध्वंजगणस्यसत्त्वान्नवृत्तभंगः॥तेनमधुकैटभा वित्यत्रभौइतिनपठनीयमित्यर्थः ॥ पथ्यावक्त्रतयानभौ ॥अन्यथामधुकैटभौदुरात्मानावितिनवाक्षरपादत्वेनअपिमाषंमषंकुर्याच्छंदोभंगंनचाचरेदितिछंदःशास्त्रमनथभंगप्रसं गःस्यात् ॥ अथवाहुः ॥ छंदोवत्पुराणानिभवंतिअन्यत्रवेदंछांदसंछंदः ॥ यदक्षरधुम्नद्दिदःन्यूनाधिकाक्षरत्वेनयत्रपादःक्वचिद्भवेत्॥तद्वैदिकंनिवृच्छंदोमृत्युंजयतुर्यथा ॥ इति ॥ दुरात्मानौदुष्टबुद्धी ॥ अतिवीर्यपराक्रमौ अत्युत्कृष्टबलौअत्युत्कृष्टप्रभावौअत्युत्कृष्टशक्तीअत्युत्कृष्टोद्योगौच ॥ वीर्यंबलंप्रभावश्चगत्तयुद्योगौपराक्रमौ ॥ क्रोधरक्ते

क्षणौ क्रोधेनरक्तेईक्षणेययोस्तौप्रत्येकंतथोक्तौ ब्रह्माणंहंतुं जनितोद्यमौ ॥ दुर्वि‍भिनाजनितउत्पादितउद्यमउत्थितः यम :कालोययोस्तौ । यद्वा । जननंजनिः संजाता जनिर्यस्या सौ जनितः ॥ तारकादित्वादितच् ॥ जनितोद्यमावासन्नकालाविवियावत् ॥ ७१ ॥ ततःशयनात्समुत्थायभगवान् ऐश्वर्यादिमान् विभुःव्यापकःहरिःविष्णुस्ताभ्यांमधुकैटभाभ्यां सहयुगपत्बाहुप्रहरणःसन्पंचवर्षसहस्राणियुयुधे ॥ युधसंप्रहारेआत्मनेपदीदेवादिः ॥ बाहवएवप्रहरणानिआयुधानियस्यासौबाहुयुद्धंचकारेत्यर्थः ॥ वर्षाणांसहस्राणिपंचेतिसंख्यायाःशब्देप्राधान्येप्यन्वयार्थंवर्षाणामेवप्राधान्यमितिकालस्यात्यंतसंयोगेद्वितीया ॥ पंचसहस्राणिवर्षाण्यभिव्याप्ययुद्धंव्यधादितिभावः ॥ ७२॥ अतिबलोन्मत्तौमहामायाविमोहितौसंतौतावप्यसुरौअस्मत्तोवरोवांछितोर्थस्त्वयाव्रियतामितिकेशवमुक्तवंतौऊचतुः ॥ अत्यधिकबलेनसामर्थ्येनउन्मत्तावधिकमदौमहामायया विमोहितौप्रयुक्तौ प्रापिताविवेकौअस्मत्तआवाभ्याम् ॥ प्रशस्तकेशःकेशवःविष्णुः ॥ ७३ ॥ असुरौप्रतिविष्णुरवोचत ॥ अथेदानींचेद्भवंतौमेतुष्टौस्तस्तर्हिउभावपिअसुरौममवध्यौमयाहंतुमर्हौ ॥ इहहनोवावधचेतियत्तथेतितुघात्यौभवेतांस्याताम् ॥ अत्रचप्रतिपक्षेविषयेकिमन्येनवधादपरेणकृतंस्यात् ॥ वधादितरवरेप्रार्थितेशत्रुशेषप्रसंगः

समुत्थायततस्ताभ्यांयुयुधेभगवान्हरिः ॥ पंचवर्षसहस्राणिबाहुप्रहरणोविभुः ॥ ७२ ॥ तावप्यतिबलोन्मत्तौमहामायाविमोहितौ ॥ उक्तवंतौवरोस्मत्तोव्रियतामितिकेशवम् ॥ ७३ ॥ ॥ श्रीभगवानुवाच ॥ ॥ भवेतामद्यमेतुष्टौममवध्यावुभावपि ॥ किमन्येनवरेणात्रएतावद्धिवृतंमया ॥७४॥ ऋषिरुवाच ॥ ॥ वंचिताभ्यामितितदासर्वमापोमयञ्जगत् ॥ विलोक्यताभ्यांगदितोभगवान्कमलेक्षणः ॥ ७५ ॥

स्यात् ॥ तदन्यत्तुवस्तुभगवतोममप्रार्थ्यंसिद्धमेवेत्याशयादाह ॥ भवन्तौमयाएतावद्धिएतावदेवभवत्कर्मकमत्कर्तृकवधलक्षणंवृतंप्रार्थितंनान्यत् ॥ वाक्येसंधिकार्यमतंत्रम् ॥ एकाएकशिरोरुहात्रिचरणाएकेक्षणाद्विस्तनीतिवत् ॥ अथवावरेणातएतावद्धीतिपाठः ॥ अतएवाभ्यांभवद्भ्यामेतावदेववधरूपंवस्तुमयावृतंनान्यदिति ॥ ७४ ॥ तदाअसुरवधवरप्रार्थनाकालेविष्णुनामहामायानुकूलेनवंचिताभ्यांविप्रलब्धाभ्यांमधुकैटभाभ्यांसर्वंजगदापोमयंविलोक्यभगवान्कमलेक्षणः पुंडरीकाक्षोविष्णुःइतिगदितःइतिवक्ष्यमाणप्रकारेणउक्तः । विप्रलब्धस्तुवंचितः । आप्लृव्याप्तौ । आपःकर्माख्यायामितिआपस्शब्दःसांतोप्यस्ति ॥ आपोभिर्मार्जनंकुर्वीतवत् ॥ अपांसिकर्मसाधनानि ॥ प्रकृतानिउच्यंतेऽस्मिन्जगतितत्आपोमयंतत् ॥ प्रकृतवचनेमयट् ॥ अथवा ॥ आपःस्त्रीभूम्नि मयगतौ । अनुदात्तेत्त्वलक्षणमात्मनेपदंचक्षिङोङित्त्वात्कचिदनित्यमिति लङ्परस्मैपदम् । आपःकर्त्र्यः ॥ जगत्कर्म ॥ आपोमयञ्जगदित्यत्रनकारस्यचुत्वेनञकारः ॥ सर्वमापोमयञ्जगत्सर्वंजगत्कर्म आपःकर्त्र्यःअमयन् अगच्छन्व्याप्तवत्यइतिविलो

क्यताभ्यांहारिरुक्तइतियोजना ॥ ७५ ॥ किंगदितःकमलेक्षणोभगवान्ताभ्यां । हेविष्णोतवयुद्धेनआवामसुरौप्रीतौस्वः भवावः ॥ हेविष्णोत्वमावयोर्मधुकैटभयोःश्लाघ्यः
म्तुन्यःमृत्युःअंतकालोसि ॥ ॥ किंतुयत्रोर्वीभूमिःसलिलेनपरिप्लुतानाभूत् तत्रआवांमधुकैटभौजहिहन्याः इतिताभ्यांविष्णुरुक्तः॥आवयोर्वधरूपंवरंवाञ्छतामायिनातेनविष्णु
नाआवामसुरौवंचितावभूताम् । ततोयेननौवधोनस्यात्सकोन्यस्त्वद्वधोपायः। अयमास्तिसंप्रतिसर्वंजगदापोमयंजलमयमेववर्त्तते ॥ ततश्चयत्रोर्वीजलमयीनदृश्येततत्रावयोर
सुरयोस्त्वत्कर्तृकोवधोस्त्विति ॥ एवंचोक्तोहिसर्वापिपृथ्वीजलमध्येचेतिकनौहानिष्यत्यसावित्यावाभ्यामसुराभ्यांमायाविभ्यांभगवानपिवंचितोभविष्यत्यशुभस्यकालायप
नास्त्विवतिभावः ॥ आपोमयमित्यत्रआपस्इतिसांतम्आपोभिर्मार्जनंकुर्यादितिप्रयोगश्च ॥ भुजिमृङ्भ्यांयुक्त्युकौ ॥ मृत्युःस्त्रीपुंसयोरंते ॥ जहीतिहंतेर्विध्यादौलोटि
मेर्ह्यपिवहंतेर्जःआभीयतयाजस्यासिद्धत्वाद्वेर्लुगभावः ॥ वधिःप्रकृत्यंतरमस्तीतिकेवलोप्यस्तिवधशब्दःशिष्टप्रयोगतः ॥ ७६ ॥ सुमेधाऋषिःसुरथंप्रतिवाक्य
मूचिवान् ॥ हेमधुकैटभौयद्यथायुवाभ्यामगादितत्तथानततोन्यथाइत्युक्त्वाशंखचक्रगदाभृताभगवताविष्णुनास्वकीयेजघनेउपरस्थादूर्ध्वप्रदेशंतयोरसुरयोःशिरसिकृत्वानिधाया

प्रीतौस्वस्तवयुद्धेनश्लाघ्यस्त्वंमृत्युरावयोः ॥ आवांजहिनयत्रोर्वीसलिलेनपरिप्लुता ॥७६॥ ॥ ऋषिरुवाच ॥ ॥ तथेत्युक्त्वाभगवताशंखचक्रगदा
भृता ॥ कृत्वाचक्रेणवैच्छिन्नेजघनेशिरसीतयोः ॥ ७७ ॥ एवमेषासमुत्पन्नाब्रह्मणासंतुतास्वयम् ॥ प्रभावमस्यादेव्यास्तुभूयःशृणुवदामिते ॥
॥ ७८ ॥ इति श्रीमा०सावर्णिकेमन्वंतरेदेवीमाहात्म्येमधुकैटभवधोनामाष्टसप्ततितमोध्यायः ॥ ७८ ॥ ॥ ऋषिरुवाच ॥ ॥ देवासुरमभूद्युद्धंपू
र्णमब्दशतंपुरा ॥ महिषेऽसुराणामधिपेदेवानांचपुरंदरे ॥ १ ॥

वस्थाप्यवैप्रसिद्धेनचक्रेणछिन्नेकृतेअच्छेदिषातामित्यन्वयः ॥ प्रलयकालजलपूरोभगवतोजघनादधोनाभूदितिभगवतोजघनंजलप्लुतंचन ॥उर्वींचभवतिपृथिव्यारब्धत्वात् ॥
इत्थंविष्णुचक्रोच्छिन्नशिरस्कत्वात्तयोरसुरयोःश्लाघ्यमृत्युताच ॥ शंखश्चचक्रंचशंखचक्रेतेनसहितागदाशंखचक्रगदातांबिभर्तिइतिशंखचक्रगदाभृत् तेन। यद्वा । स्त्रीकट्याः
पुरोभागोहन्यतेजघनमित्युपलक्षणम् ॥ ७७ ॥ एवंप्रकारेणब्रह्मणाआत्मभुवास्वयमात्मनामंस्तुताएषादेवीसमुत्पन्नादेवकार्यार्थंप्रादुरभूत ॥ हेराजन्सुरथत्वंभूयःपुनःभूयिष्ठं
यथाभवतितथाचअस्याःदेव्याःप्रभावंप्रादुर्भावंसामर्थ्यंचशृणुआकर्णय । भूयस्तेवदाम्यहम् ॥ सुमेधानामर्षिः ॥ ७८ ॥ इतिश्रीमद्राजाधिराजश्रीमत्तोमरान्वयश्रीमदुद्ध
रणात्मजश्रीशंतनुचक्रवर्तिविरचितायांशांतनव्यांमार्कण्डेयेचंडिकामाहात्म्यटीकायांमधुकैटभवधविध्युपलक्षितोष्टसप्ततितमोध्यायः ॥ ७८ ॥ छ ॥ सावर्णिमनुंकायति
सावर्णिकंसावर्णिःप्रयोजनमस्येतिसावर्णिकम् ॥ ॥ पुराकल्पेमहिषासुरेअसुराणामधिपेसति देवानांचपुरंदरेइन्द्रेअधिपेसतिदेवासुरयुद्धंपूर्णमन्यूनमब्दशतंवर्षशतमभूदित्य

न्वयः ॥ असुराणांविजिगीषूणामिदमासुरंदेवानामासुरंदेवासुरम् ॥ अथवा ॥ देवैःसहआसुरंदेवासुरंयुद्धं ॥यद्वा ॥ देवाश्वासुराश्वदेवासुरंयेषांचविरोधःशाश्वतिकइतिएकव द्भावः ॥ तदस्मिन्नस्तितद्देवासुरंयुद्धम् ॥ अर्शआदित्वादच् ॥ यद्वा ॥ देवासुरस्येदंदेवासुरंयुद्धंसंज्ञापूर्वकोविधिरनित्यइतिह्यादिवृद्ध्यभावः ॥ अन्यथादैवासुरमेवस्यात् ॥ पुराण्यरीणांदारयतिपुरंदरः । वाचंयमपुरंदरौचेतिखश् ॥ महिषेसुराणामधिपेइतिनिचृच्छंदोमधुकैटभौदुरात्मानावितिवत् ॥ १ ॥ तत्रयुद्धेमहावीर्यैरसुरैर्देवसै न्यंपराजितमभिभूतमभ्यभावि ॥ ततश्चमहिषासुरःसकलान्देवान्जित्वाअभिभूयइंद्रोभूदित्यन्वयः ॥ वीर्यंबलंप्रभावश्ववीरकर्मचकीर्तितम् ॥ सिनोति बध्नाति सहइनेनस्वामिनावर्ततेवासेनासेनैवसैन्यंचातुर्वर्ण्यादित्वात्स्वार्थेष्यञ् ॥ २ ॥ ततोमहिषासुरात्पराजिताःप्राप्तपराभवाःदेवाःपद्मयोनिंपद्मजंप्रजापतिंब्रह्माणं पुरस्कृत्यपुरोधायतत्रगताः । क । यत्रेशःशर्वःयत्रचगरुडध्वजोविष्णुरास्तेइत्यन्वयः ॥ योनिःस्थात्कारणेभगे ॥ पुरोव्ययंगत्यास्यं ॥ पराजेरसोढइत्यपादानास्या ॥ ॥ ३ ॥ त्रिदशादेवाःतयोरीशकेशवयोःअग्रेयथायेनप्रकारेणवृत्तंनिष्पन्नंमहिषासुरचेष्टितमौद्धत्यंतद्वत्तथैवप्रकारेणवृत्तं देवाभिभवविस्तरंशब्दप्रपंचनंकथयामासुः ॥

तत्रासुरैर्महावीर्यैर्देवसैन्यंपराजितम् ॥ जित्वाचसकलान्देवानिंद्रोभून्महिषासुरः ॥ २ ॥ ततःपराजितादेवाःपद्मयोनिंप्रजापतिम् ॥ पुरस्कृत्यग तास्तत्रयत्रेशगरुडध्वजौ ॥ ३ ॥ यथावृत्तंतयोस्तद्वन्महिषासुरचेष्टितम् ॥ त्रिदशाःकथयामासुर्देवाभिभवविस्तरम् ॥ ४ ॥ सूर्येंद्राग्न्यनिलेंदूनां यमस्यवरुणस्यच ॥ अन्येषांचाधिकारान्सस्वयमेवाधितिष्ठति ॥ ५ ॥ स्वर्गान्निराकृताःसर्वेतेनदेवगणाभुवि ॥ विचरंतियथामर्त्यामहिषेण दुरात्मना ॥ ६ ॥ एतद्वःकथितंसर्वममरारिविचेष्टितम् ॥ शरणंवःप्रपन्नाःस्मोवधस्तस्यविचिंत्यताम् ॥ ७ ॥

अथवात्रिदशाःतयोरीशकेशवयोरग्रेयथावृत्तंवृत्तंचरित्रमनतिक्रम्यमहिषासुरचेष्टितंकथयामासुः ॥ तद्वन्महिषासुरचेष्टितवत् ॥ यथावृत्तंवृत्तमनतिक्रम्यदेवाभिभवविस्तरं देवानामभिभवोयस्मिन्सःविस्तरोयस्मिन्कर्मणितद्यथाभवतितथाकथयामासुःमहिषासुरचेष्टितं देवाभिभवंचविस्तरसहितंकथयामासुरितिभावः ॥ ४ ॥ चकारेणानुक्त दिक्पत्यनुक्तग्रहाःगृह्यंते ॥ ततोन्येषांब्रह्मर्षीणांचअमीषांसूर्यादीनामधिकारान्समहिषासुरःस्वयमेवाधितिष्ठति सूर्यस्येंद्राग्न्योरनिलस्येंदोर्यमस्यवरुणस्यततोन्येषांचदे वानामृषीणांचअधिकारेषुस्वयमेवमहिषासुरस्तिष्ठति ॥ अधिशीङ्स्थासांकर्मेतिअधिकरणंकर्मास्यमूउपपदविभक्तेःकारकविभक्तिर्बलीयसीअन्यथाभिधाने ॥ ॥ ५ ॥ दुरात्मनातेनमहिषेणासुरेण सर्वेदेवगणाः स्वर्गान्निराकृताःसंतःभुविविचरंतिमर्त्यायथामरणधर्माणोमनुष्याइवप्रत्यास्याताःनिरस्तांःनिराकृताः ॥ ६ ॥ अत्रवद तिब्रह्मविष्णुमहेश्वरापेक्षंबहुवचनम् ॥ अस्माभिर्देवैरिंद्रादिभिःएतदमरारिविचेष्टितं देवारेर्महिषासुरस्यचेष्टितमौद्धत्यं देवाभिभवंचसर्वंनिरवशेषंचयुष्माकमग्रेकथितं

वयमिंद्रादयःसर्वेवोयुष्मान्शरणंरक्षितॄन्दुःखेभ्यःपालयितॄन्प्रपन्नाःप्राप्ताःस्मः ॥ तस्यमहिषासुरस्यवधोहननंविचिंत्यतां येनसहन्येतसउपायोयुष्माभिश्चिंतनीयः ॥ शॄहिंसायांशृणातिशत्रून् शरणंगृहरक्षित्रोः ॥ वेदाःप्रमाणमितिवच्छरणमिहैकवचनांतंविवक्षितम् अस्तेर्लङुत्तमपुरुषबहुवचनांतंस्मइति ॥ वधहिंसायांवधनंवधः ॥ भावेघञ् जनिवध्योश्चेति वृद्ध्यभावः ॥ अतएवचवधितुमर्हौ वध्यौऋहलोर्ण्यत इतिवृद्ध्यभावः ॥ तथाचममवध्यावुभावपिइतिप्राक्तनेप्रयोगेइदंचसाधनमवगंतव्यम् ॥ हनोवावधचेतितुअदंतत्वंतत्रदर्शितं ॥ ममेतितत्रकृत्यानांकर्त्तरिचेतिषष्ठी ॥ यद्वा ॥ तत्रवधमर्हतौवध्यौ ॥ दंडादिभ्योयदितियत् ॥ ७ ॥ इत्थं देवानांवचांसिनिशम्यआकर्ण्यमधुसूदनः कैटभजित्विष्णुश्चशंभुश्चमृत्युंजयःकोपंचकार ॥ तौकीदृशाकृती ॥ भ्रुकुटीकुटिलाननौभृकुटीकुटिलाननौभ्रकुटीकुटिलाननौइतिपाठत्रयम् ॥ भ्रुकुटीभृकुटी भ्रकुटीस्त्रियः ॥ कुटकौटिल्ये ॥ इकृष्यादिभ्यः ॥ यद्वा ॥ सर्वधातुभ्यइन् ॥ कुटादित्वात्ङित्त्वाद्गुणाभावः॥ कृदिकारादक्तिनोवाङीप् ॥ इकोह्रस्वोङ्यो गालवस्यौत्तरपदिकंह्रस्वत्वम् ॥ अकारोवाभ्रुकुंसादीनामितिपक्षेअत्वमौत्तरपदिकम् ॥ ततश्चभ्रुवौकोधात्भुग्नेकुटीइवभ्रुकुट्यौताभ्यांभ्रुकुटीभ्यांकुटिलेभुग्नेआननेययोःतौ

॥ ऋषिरुवाच ॥ ॥ इत्थंनिशम्यदेवानांवचांसिमधुसूदनः ॥ चकारकोपंशंभुश्चभ्रुकुटीकुटिलाननौ ॥ ८ ॥ ततोतिकोपपूर्णस्यचक्रिणोवदनात्ततः ॥ निश्चक्राममहत्तेजोब्रह्मणःशंकरस्यच ॥ ९ ॥ अन्येषांचैवदेवानांशक्रादीनांशरीरतः ॥ निर्गतंसुमहत्तेजस्तच्चैक्यंसमगच्छत ॥ १० ॥ अतीवतेजसःकूटंज्वलंतमिवपर्वतम् ॥ ददृशुस्तेसुरास्तत्रज्वालाव्याप्तदिगंतरम् ॥ ११ ॥

भृकुटीकुटिलाननौहारिहरौनिशम्येतिशमेर्णौअतउपधायाइतिवृद्धौशमोदर्शनगतिसूत्रेणचक्षुःसाधनज्ञानादन्यत्रश्रवणेमित्त्वान्मितांह्रस्वः चक्षुःसाधनज्ञानेतु निशामय पश्यत्यर्थे ह्रस्वाभावः ॥ चकारात्ब्रह्माचभ्रुकुटीकुटिलाननःकोपंचकारेत्यनुसंधेयम् ॥ ८ ॥ ततोनंतरमतिकोपपूर्णस्यचक्रिणोविष्णोर्ब्रह्मणःशंकरस्यततोविस्तृतात्तस्माद्वदनात्सकाशान्महत्तेजोनिश्चक्रामनिरगात् ॥ तेजःप्रभावेदीप्तौचबलेशुक्रेपिकीर्त्तितम् ॥ ९ ॥ तेभ्यस्त्रिभ्योऽन्येषांशक्रादीनांचदेवानांसुमहत्तेजःकर्तृशरीरतएवनिर्गतंनिरगमत् ॥ तत्तेजःकर्तृ ऐक्यम् एकमपृथक्समगच्छतसमपद्यतएकमभवत् ॥ ऐक्यमितिचातुर्वर्ण्यादित्वात्स्वार्थेष्यञ् ॥ अकर्मकाच्चेत्यनुवृत्तौसमोगम्यृच्छीत्यादिसूत्रेणगमेरात्मनेपदंतङ् ॥ तच्चैक्यंसमपद्यतेत्यपिक्वचित्पाठः ॥ सकर्मत्वेपरस्मैपदम् ॥ तच्चैकतांसमगच्छत् ॥ १० ॥ तेइंद्रादायःसुराःतत्रदेवसदसि ॥ यद्वा ॥ तत्रदैवेतेजसिदेदीप्यमानेजृंभमाणेजयति ॥ अतीवअत्यर्थंसुतरांसुष्ठुज्वालाव्याप्तदिगंतरं ॥ ज्वालाभिरर्चिभिर्व्याप्तंविद्योतितंदिशांदशानामंतरंमध्यमंतरालंयेनतथोक्तंज्वलं

तंदीप्यमानंपर्वतमिवहेमाद्रिमिवतेजसः कूटंपुंजंददृशुर्दृष्टवंतः ॥ मायानिश्चलयंत्रेषुकैतवानृतराशिषु ॥ अयोघनेशैलशृंगेसीरांगेकूटमन्नियाम् ॥ बलवत्सुष्ठुकिमुतस्वत्यती वचनिर्भरं ॥ ११ ॥ तत्रदेवसदसितत्प्रागुत्पन्नंब्रह्मविष्णुरुद्रमुखजं तेजस्तत्पश्चात् उत्पन्नमिंद्रादिसर्वदेवशरीरजं च तेजःउभयत्विषाअतुलमनुपमंत्विषादीप्त्याव्याप्तलो कत्रयम् एकस्थमेकस्मिन्नेवसमवायिनितिष्ठत् एकत्वेनापृथग्भावेनतिष्ठत्वर्त्तमानंसन्नारीअभूत् ॥ तत्तेजःस्त्रीरूपमभूदितिभावः नृनरयोर्वृद्धिश्चेतिशार्ङ्गरवादिपाठात् नृत्वज तिविवक्षायांङीषिवृद्धिः ॥ १२ ॥ यच्छंभोरिदंशांभवं तेजःतेनास्याःमुखमजायतसमजनिष्ट ॥ याम्येनयमदेवताकेनतेजसातस्याः नार्याःकेशाअभवन् विष्णुतेजसातस्या नार्याः बाहवश्चाभवन् ॥ दित्यदित्यादित्यपत्युत्तरपदाण्ण्यइत्यत्रयमाचेतिवक्तव्यमित्याहुः ॥ १३ ॥ सौम्येनसोमदेवताकेनतेजसातस्याःनार्याःस्तनयोर्युग्ममभवत् ऐंद्रेणते जसामध्यमभवत् ॥ वरुणसंबंधिनावारुणेनतेजसाजंघोरूजंघाभ्यांसहितौऊरूजंघोरूअभवताम् ॥ जंघेचऊरूचवारुणेनतेजसाप्रत्येकमभूतामित्यर्थः॥ अन्यथाजानुबाहुवत्प्रा

अतुलंतत्रतत्तेजःसर्वदेवशरीरजम् ॥ एकस्थंतदभून्नारीव्याप्तलोकत्रयंत्विषा ॥१२॥ यदभूच्छांभवंतेजस्तेनाजायततन्मुखम् ॥ याम्येनचाभवन्के शाबाहवोविष्णुतेजसा ॥१३॥ सौम्येनस्तनयोर्युग्मंमध्यमैंद्रेणचाभवत् ॥ वारुणेनचजंघोरूनितंबस्तेजसाभुवः ॥ १४ ॥ ब्रह्मणस्तेजसापादौत दंगुल्योर्कतेजसा ॥ वसूनांचकरांगुल्यःकौबेरेणचनासिका ॥ १५ ॥ तस्यास्तुदंताःसंभूताःप्राजापत्येनतेजसा ॥ नयनत्रितयंजज्ञेतथापावक तेजसा ॥ १६ ॥ भ्रुवौचसंध्ययोस्तेजःश्रवणावनिलस्यच ॥ अन्येषांचैवदेवानांसंभवस्तेजसांशिवा ॥ १७ ॥

ण्यंगत्वादेकवद्भावान्नपुंसकत्वात्तह्रस्वत्वंस्यात् ॥ जंघोरूइतिनदधिपयआदित्वान्नैकवत्त्वमितिपक्षेजंघाचऊरुश्चेतिजात्येकवचनंविग्रहे ॥ भुवःतेजसानितंबःकटिदेशःअभवत् ॥ ॥१४॥ ब्रह्मणस्तेजसातस्याःनार्याःपादावभवतां तदंगुल्यःपादयोरंगुल्यःअर्कतेजसाअभवन् अष्टानांवसूनांचतेजसाकरांगुल्योऽभवन् ॥१५॥ कौबेरेणकुबेरसंबंधिनातेजसा नासिकाअभवत ॥ १५ ॥ तस्याःनार्याःदंतास्तुप्राजापत्येनप्रजापतिसंबंधिनातेजसासंभूताः समभवन् ॥ प्राग्दीव्यतीयेष्वर्थेषुदित्यदित्यादित्यपत्युत्तरपदाण्ण्यः ॥ तथान यनात्रितयंनेत्रत्रयंपावकतेजसावह्नितेजसाजज्ञेअजनिष्ट ॥ जनेः कर्त्तरिपरोक्षेलिट्यात्मनेपदम् ॥ १६ ॥ तस्याःनार्याःयेभ्रुवौतत्संध्ययोस्तेजःयद्वायत्संध्ययोस्तेजःतत्तस्याःना र्याभ्रुवावितिद्विरुभयथायोज्यम् ॥ तथाअनिलस्यवायोर्यत्तेजःतौतस्यानार्याःश्रवणौशब्दग्रहणौ ॥ यद्वा ॥ यौतस्याःनार्याःश्रवणौशब्दग्रहणौतदनिलस्यवायोस्तेजःइत्युभयथापि योज्यम ॥ तदित्थमुक्तानांचततोन्येषांचदेवानांसंबंधिनांतेजसांसंभवःसाशिवासासर्वमंगलादेवी ॥ यद्वा ॥ याशिवासदेवानांतेजसांसंभवःइत्युभयथापियोज्यम् ॥ निर्दिश्यमान

प्रतिनिर्दिश्यमानयोरेकत्वमापादयंति सर्वनामानिपर्यायेणतल्लिंगसंख्याभांजिभवंति ॥ श्रूयतेशब्दआभ्यामितिकरणेल्युटि श्रवणौशब्दग्रहौइतिपुँल्लिंगता ॥ कर्णशब्दग्रहौ श्रोत्रंश्रुतिःस्त्रीश्रवणंश्रवःइत्यभिधानतस्तुनपुंसकत्वे श्रवणेअनिलस्ययेतिपाठोपिसभ्यः ॥१७॥ ततःशिवायाःदेव्याआविर्भावानंतरंसमस्तदेवानांतेजोराशिसमुद्भवांतेजःपुंजात्समुद्भवंतींतांसर्वमंगलांदेवींविलोक्यअमराःप्राक्महिषार्दिताअपिमहिषासुरेणाहिंसिताअपिप्रीतिंप्रापुःप्राप्तवंतः ॥ अर्दहिंसायांचुरादिःक्तःकर्मणि ॥ १८ ॥ ततोदेवीदर्शनतःप्रमोदाप्राप्त्यनंतरंतेदेवाःजयैषिणःसंतस्तांदेवींजयंतींजयजयेत्युच्चैरूचुः॥अथतेदेवाः सर्वेपितस्यैदेव्यैस्वानिस्वान्यायुधानिचददुः॥१९॥ देवायुधानिमंत्रध्यानवशंवददेवताकृतीन्यत्यद्भुतशक्तीनिइतिशूलाधिदैवताद्विनिष्कृष्यपिनाकभृत्पिनाकीशिवःतस्यैदेव्यैशूलमायुधंस्वसदृशमायुधंददौदत्तवान् ॥ आयुधादिदेवतासामर्थ्यादायुधंस्वसदृशमायुधंसूतेयत्तन्म्यैदत्तवानितिभावः॥अस्त्रीशूलंरुगायुधं॥कृष्णश्वविष्णुश्वस्वचक्रतःसुदर्शनाच्चक्रतःसमुत्पाद्यआकृष्यतस्यैदेव्यैदत्तवान् ॥ यथादेवतेजोमयीदेवीसमभवत्तथातदायुधान्य

ततःसमस्तदेवानांतेजोराशिसमुद्भवाम् ॥ तांविलोक्यमुदंप्रापुरमरामहिषार्दिताः ॥ १८ ॥ ततोदेवाददुस्तस्यैस्वानिस्वान्यायुधानिच ॥ ऊचुर्जयजयेत्युच्चैर्जयंतींतेजयैषिणः॥ १९॥ शूलंशूलाद्विनिष्कृष्यददौतस्यैपिनाकभृत्॥ चक्रंचदत्तवान्कृष्णःसमुत्पाद्यस्वचक्रतः ॥ २० ॥ शंखंचवरुणःशक्तिंददौतस्यैहुताशनः ॥ मारुतोदत्तवांश्चापंबाणपूर्णेतथेषुधी ॥ २१ ॥ वज्रमिन्द्रःसमुत्पाद्यकुलिशादमराधिपः ॥ ददौतस्यैसहस्राक्षोघंटामैरावताद्गजात् ॥ २२ ॥

पिदेवायुधसमुद्भवान्येवदेवतेच्छयेतिनात्राश्चर्यमितिभावः ॥२०॥ वरुणश्चशंखंतस्यैदेव्यैददौ॥ हुताशनश्चाग्निस्तस्यैदेव्यैददौशक्तिमायुधविशेषम् ॥ अत्रापिशंखतःशक्तितश्चशंखशक्तिंचाकृष्यदत्तवंतौताविितिभावः॥ मरुदेवमारुतःवायुःतस्यैदेव्यैचापंदत्तवान्॥तथामारुतएवबाणपूर्णेशरसंभृतेइषुधीदत्तवान्तस्यैदेव्यै ॥ अक्षयबाणपूर्णतूण्यौदत्तवान् ॥ तूणोपासंगतूणीरनिषंगाइषुधिर्द्वयोः।इषवोधीयंतेऽत्रइषुधिःइषुधीइतिद्विवचनंसव्यापसव्याभ्यांचापाकर्षणसूचनार्थम् ॥ २१ ॥ अमराधिपःसहस्राक्षःइंद्रःशचीपतिःकुलिशाद्वज्रात्मकाशाद्वज्रंपविंसमुत्पाद्याकृष्यतस्यैददौ ॥ किंचसएवेंद्रःशचीपतिःऐरावतात्स्वर्गजात्तत्सकाशात्घंटांचमहतीमाकृष्यतस्यैदेव्यैददौ ॥ वज्रोस्त्रीहीरकेपवौ ॥संभवेव्यभिचारेचस्याद्विशेषणमर्थवत इदिपरमैश्वर्ये इंदतिइन्द्रः सोन्योपिस्यात्अतःउक्तमराधिपइतिसोन्योपिदेवःस्यात् अतउक्तंसहस्राक्षइति ॥सहस्रमक्षीणियस्यसःसहस्राक्षःसोऽहिःशेषोपिमहस्राननत्वात सहस्रमेवअक्षीणियस्येत्येवंभूतविग्रहत्वस्यविवक्षितत्वादशे ( दो ) षः । सुरूढिर्योगमपहरतीतितुन्यायोत्रनाश्रितः ॥ तत्रत्याश्रितेऽप्यव्या

वृत्त्याकीर्तनेनश्ले ( शे ) षोनास्तीति ॥ यद्यपिस्यात्तथापितदा ( दना ) श्रयणजनितःपौनरुक्त्यदोषःप्रसज्येतेत्यलंविस्तरेण ॥ बहुव्रीहौसक्थ्यक्ष्णोःस्वांगात्षचूसमासांतः
॥ २२ ॥ यमोअंतकःकालदंडादाकृष्यदंडंकालदंडमायुधंतस्यैदेव्यैददौ ॥ अंबुपतिश्चवरुणःपाशादाकृष्यपाशंददौ ॥ तस्यैदेव्यैपाशाख्यमस्त्रंददौ। आश्वाख्याशा
लिशीघ्रार्थौपाशोबंधनशस्त्रयोः ॥ प्रजापतिर्ब्रह्मातस्यैदेव्यैअक्षमालांजपमालांकमंडलुंचददौ ॥ अस्त्रीकमंडलुःकुंडी ॥ ब्रह्माविप्रोपिकाश्वित्स्यात् ॥ अतउक्तंप्रजापतिरिति ॥
समनुरपिस्यात् ॥ अतउक्तंब्रह्मेत्यपि ॥ वेदस्तत्त्वंतपोब्रह्मब्रह्माविप्रःप्रजापतिः ॥ २३ ॥ रविःनिजानात्मीयान्रश्मीन्किरणांस्तस्यादेव्याःसमस्तेषुरोम्णांकूपेषुददौनिक्षि
प्तवान् ॥ किरणप्रग्रहौरश्मी ॥ स्वकेनित्येनिजंत्रिषु ॥ कालोयमःतस्यैदेव्यैनिर्मलंखड्गंनिर्मलंस्वच्छंचर्मदत्तवान् ॥ अंगत्राणसाधनंफलकंचर्मदत्तवान् ॥ फलकोस्त्रीफलं
चर्म ॥ कालोमृत्यौमहाकालेयमेऽनेहसिचस्मृतः ॥ २४ ॥ क्षीराण्युदकानियस्ययस्मिन्वासक्षीरोदश्च ॥ उदकस्योदःसंज्ञायां ॥ क्षीराब्ध्यधिदैवतःअमलंहारंमुक्ताफलहा
रंददौदत्तवान् ॥ तथासएवक्षीरोदःतस्यैदेव्यैअजरेचनूतनेजरारहितेअंबरेवाससीदत्तवान् ॥ अंबरंव्योम्निवाससि ॥ २५ ॥ चूडामणिमित्यारभ्यश्लोकत्रयमेककर्तृकैकक्रिय

**कालदंडाद्यमोदंडंपाशंचांबुपतिर्ददौ ॥ प्रजापतिश्चाक्षमालांददौब्रह्माकमंडलुम् ॥ २३ ॥ समस्तरोमकूपेषुनिजरश्मीन्दिवाकरः ॥ कालश्चदत्त
वान्खड्गंतस्यैचर्मचनिर्मलम् ॥ २४ ॥ क्षीरोदश्चामलंहारमजरेचतथांबरे ॥ चूडामणिंतथादिव्यंकुंडलेकटकानिच ॥ २५॥ अर्द्धचंद्रंतथाशुभ्रंकेयू
रान्सर्वबाहुषु ॥ नूपुरौविमलौतद्वद्ग्रैवेयकमनुत्तमम् ॥ अंगुलीयकरत्नानिसमस्तास्वंगुलीषुच ॥ २६ ॥**

कंद्रष्टव्यम् ॥ तथाहिविश्वकर्मादेवशिल्पी सूर्योपि ॥ यदभ्यधुः ॥विश्वकर्मार्कसुरशिल्पिनोरिति ॥ विश्वस्यकर्मास्मादर्कात् ॥ विश्वंकर्मास्यसुरशिल्पिनइतिविश्वकर्मा ॥
सदेवशिल्पीतस्यैदेव्यैयथाचातुर्येणरचितंदिव्यंदिविभवं द्युप्रागपागुदक्प्रतीचोयत् ॥ चूडामणिंशिरोरत्नंददौ ॥ तथाकुंडलेकर्णवेष्टनेसुवर्तुलेतस्यैसएवविश्वकर्माददौ ॥
कटकोर्द्धर्चादित्वादस्त्रियाम् ॥ तथासएवतस्यैदेव्यैशुभ्रमर्द्धचंद्रस्यसमप्रविभागःअर्द्धचंद्रःतंददौ ॥ अर्द्धंनपुंसकमितिसमासः ॥ परवल्लिंगंद्वंद्वतत्पुरुषयोः ॥ तथासएववि
श्वकर्मातस्यैदेव्यैसर्वबाहुषुकेयूरान्केयूराणिअंगदानिददौ ॥ केयूरोर्द्धर्चादित्वादस्त्रियां ॥ तद्वत्पूर्ववत्सएवविश्वकर्मातस्यैदेव्यैतस्याःदेव्याःपादयोर्नूपुरौमंजीरौविमलौनिर्मलौ
मंजीरौददौ ॥पादांगुलंतुलाकोटिर्मंजीरोनुपुरोस्त्रियाम्॥हंसकःपादकटकंतद्वत्पूर्ववच्चातुर्येणराचितम्॥ अनुत्तमंनास्त्यतोन्यदुत्तमंयस्मात्तदनुत्तमंवरेण्यं ग्रैवेयकंग्रीवालंकारंकंठभू
षणंतस्यैदेव्यैददौविश्वकर्मा कुलकुक्षिग्रीवाभ्यःश्वास्यलंकारे ष्वितिढकञ्॥नास्तसत्कारिणांग्रैवमित्यत्रत्वनलंकारत्वादणेव॥तथासएवविश्वकर्मादेवशिल्पीतस्याःदेव्याःसमस्ता

सुसकलासुअंगुलीषुयोग्यानि अंगुलीयकरत्नानितस्यैदेव्यैददौ ॥ जिह्वामूलांगुलेश्छः ॥ स्वार्थेकन् ॥ अंगुलीषुभवानिअंगुलीयकानांरत्नानिअंगुलीयकान्येववारत्नानि ॥
सुसकलासुअंगुलीषुयोग्यानि अंगुलीयकरत्नानितस्यैदेव्यैददौ ॥ जिह्वामूलांगुलेश्छः ॥ स्वार्थेकन् ॥ अंगुलीयकानिरत्नानिचेतिद्वन्द्वः ॥ तथासएव रत्नंस्वजातिश्रेष्ठेपीत्यभिधानतःगुणतःश्रेष्ठानिमनोज्ञानिअंगुलीयकरत्नानिरमंतेस्मिन्रत्नं ॥ जातौजातौयदुत्कृष्टंतद्रत्नमभिधीयते ॥ अंगुलीयकानिरत्नानिचेतिद्वन्द्वः ॥ तथासएव विश्वकर्माऽभेद्यंदंशनंचदिव्यंकवचंतस्यैदेव्यैददौ ॥ दश्यंतेबध्यंतेदंशनं ॥ तनुत्रंवर्मदंशनम् उरच्छदःकंकटकोजगरःकवचोस्त्रियाम् ॥ २६ ॥ २७ ॥ जलधिःसमुद्रःतस्यैदेव्यैशिरसिउ रसिचअपरामम्लानपंकजांमालांस्रजमददात् ॥ डुदाञ्दाने ॥ भूतानद्यतनेलङ्परस्मैपदम् ॥ अददादितिपाठेतुददानेचक्षिङोङित्करणलिंगादनुदात्तेत्त्वनिबंधनमात्मनेपदमनि त्यमित्यात्मनेपदाभावः ॥ किंचसएवजलधिःतस्यैदेव्यैअतिशोभनमत्यर्थमनोहरंपंकजंलीलारविंदमददात्अददद्वापाठः ॥ अम्लानानिअशुष्काणिसदैवार्द्रीभूतानियस्यांसातथो क्ताताम् ॥ यद्वा ॥ नास्तिम्लानंम्लानिःसर्वदैवयेषांतानिअम्लानानिपंकजानियस्याःसातां माल्यतेधार्यतेमालास्रक्ताम् ॥ आसमंतादाप्ता आप्त्यपेक्षयाआशब्दस्योपसर्गत्वं आपोंभांसियैःयानिवातानिआपानिपंकजानिवानिरातिगृह्णातीतिआपराताम् ॥ ऋक्पूरब्धूःपथामानक्षेइतिअःसमासांतःद्व्यंतरुपसर्गेभ्योपईत्नुनईत्वमनवर्णातादितिवक्तव्य

विश्वकर्माददौतस्यैपरशुंचातिनिर्मलम् ॥ अस्त्राण्यनेकरूपाणितथाभेद्यंचदंशनम् ॥ २७ ॥ अम्लानपंकजांमालांशिरस्युरसिचापराम् ॥ अददा ज्जलधिस्तस्यैपंकजंचातिशोभनम् ॥ २८ ॥ हिमवान्वाहनंसिंहंरत्नानिविविधानिच ॥ ददावशून्यंसुरयापानपात्रंधनाधिपः ॥ २९ ॥ शेषश्चस र्वनागेशोमहामणिविभूषितम् ॥ नागहारंददौतस्यैधत्तेयःपृथिवीमिमाम् ॥ ३० ॥

मितिस्मरणादित्थंचआपरांइतिच्छेदः ॥ यद्वा ॥ नास्तिपरंश्रेष्ठंयतःसाअपरा अनुत्तमाताम् ॥ यद्वा ॥ नविद्यंतेपराःशत्रवोयत्रधार्यमाणायांसाताम् ॥ यद्वा ॥ ततोदेवीतःअप रानपराअपराअभिन्नाअपृथग्भूतासदैवसंलग्नाताम् ॥ यद्वा ॥ शिरसिउरसिचअपरांपृथग्भूताम् ॥ शिरसिमालांमाल्यरूपांस्रजंमाल्यंमालास्रजौमूर्ध्निइत्यभिधानात् ॥ उर सितुकंठात्प्रालंबरूपांमालां प्रालंबमृजुलंबिस्यात्कंठादित्यभिधानात् ॥ कंठाद्वक्षस्यवलंबमानंमाल्यंमालारूपंप्रालंबमुच्यतइतिअपरत्वंपृथक्त्वंमालायाः ॥ २८ ॥ हिमवानअद्रिराजः तस्यैदेव्यैसिंहंनामवाहनंददौ ॥ वाहयतिप्रापयतिवाहनम् ॥ यद्वा ॥ वहतिवाहनम् ॥ वाहनमाहितादितिप्रयोगादन्येषामपिदृश्यते इतिदीर्घः ॥ यद्वा ॥ उह्यतेप्राप्यतेनेनेतिवाहनम् ॥ वाहनमाहितादितिनिपातनादुपधादीर्घत्वम् ॥ हिनस्तिसिंहःपंचास्यःकंठीरवः ॥ किंचं सएवहिमवान् तस्यैदेव्यै विविधानिनानाप्रकाराणिरत्नानि अददात् ॥ धनाधिपोधनदःसुरयाअशून्यंसर्वदापरिपूर्णपानपात्रंददौ ॥ सूयतेपरिवास्यतेसुरा गंधोत्तमा ॥ २९ ॥ यइमांपृथिवींधत्तेधारयतिससर्वनागेशःसर्वनागाधिपःशेषः

अनंतश्चमहामणिविभूषितंनागहारंनागरूपंहारंतस्यैदेव्यैददौ ॥ नागाःसर्पेभ्योन्येदेवयोनयःइत्याहुः ॥ अनंतोनागराजःस्यात्सर्पराजस्तुवासुकिः ॥ नागाःकाद्रवेयाः ॥ काद्रवेयेगजेसीसेनागःस्यान्नागकेसरे ॥ ३० ॥ यैरायुधालंकारादिकंदेव्यैसमर्पितंदेवैस्ततोऽन्यैरपिसुरैःसर्वैर्भूषणैस्तथाआयुधैश्वसंमानितापूजितासतीदेवीसाट्टहासमत्यधिकहासगर्भंयथास्यात्तथाउच्चैःउदग्रंयथास्यादुदात्तंवायथास्यात्तथामुहुर्मुहुःवारंवारंननाद ॥ णदअव्यक्तेशब्दे ॥ मुखतोनादमानंदतः सिंहनादंचकार ॥ एतेनसंग्रामतःशत्रून्संहरिष्यामीतिवीररसाविर्भावःसूचितः सिंहनादेन ॥ क्ष्वेडा तु सिंहनादःस्यात् ॥ सिंहस्येवनादोनदनंवीराणांयोद्धकामानांखलुभवति ॥ अट्टअतिक्रमहिंसनयोः भावेघञ् ॥ अट्टनमट्टःअट्टेनजातोहासोऽट्टहासः अट्टहासेनसहितंसाट्टहासं क्रियाविशेषणमेतत् ॥ ३१ ॥ तस्यादेव्याःघोरेणभयंकरेणनादेनसिंहनादेनकृत्स्नंनभःअंतरिक्षमापूरितमभिव्याप्तंकवलितम् ॥ अथचअमायता अमासमीपेआयताआगच्छताअतिमहताऽदीर्घेणवर्धमानेनतेनासिंहनादेनघोरेणजनितःप्रतिशब्दःप्रतिध्वनिः महानभूत् ॥ इणगतौ ॥ अङ्पूर्वः यद्वा अनुपसर्गः ॥ शतरिइणोयणादेशः । तृतीयांतं नादेनेत्यस्य विशेषणममायतेत्यदः ॥ समीपार्थेसहार्थेचस्यादमेत्येतदव्ययम् ॥ कश्चिन्मा

अन्यैरपिसुरैर्देवीभूषणैरायुधैस्तथा ॥ संमानितानानादोच्चैःसाट्टहासंमुहुर्मुहुः ॥३१॥ तस्यानादेनघोरेणकृत्स्नमापूरितंनभः ॥ अमायतातिमहता प्रतिशब्दोमहानभूत् ॥ ३२ ॥ चुक्षुभुःसकलालोकाःसमुद्राश्चचकंपिरे ॥ चचालवसुधाचेलुः सकलाश्चमहीधराः ॥ ३३ ॥ जयेतिदेवाश्चमुदाता मूचुःसिंहवाहिनीम् ॥ तुष्टुवुर्मुनयश्चैनांभक्तिनम्रात्ममूर्त्तयः ॥ ३४ ॥

ङ्मानेदैवादिकःआत्मनेपदानित्यत्वेनशत्रंतंमायतेत्येतादित्यास्यत । तन्न ङित्त्वनिमित्तात्मनेपदस्यनित्यत्वाभ्युपगमात् ॥ यद्वा ॥ माङ्मानेदिवादिः । भूतानद्यतने लङ् । तेननादेनकृत्स्नंनभः आपूरितंसत्अमायतपरिमितमजायत । अहोविभुनभःअनंतमहत्परिमाणमपितेनसिंहनादेनआपूरितत्वादमायतपरिमितमजायतेत्याश्चर्योक्तिः । अन्यथाविभुस्तावन्नपरिमीयते ॥ परिमीयतेचेद्विभुत्वव्याहतिरिति ॥ ३२ ॥ तेनप्रतिशब्देननिमित्तेनसकलालोकाःचुक्षुभुःक्षोभमापुः ॥ क्षुभसंचलने ॥ लोकस्तुभुवनेजने ॥ तेनशब्देनसमुद्राश्चचकंपिरे सरित्पतयश्चकंपमापुः ॥ कपिचलने ॥ चचालवसुधा भूश्चलनमाप ॥ चलकंपने ॥ चेलुः सकलाश्चमहीधराः पर्वताःचेलुःचकंपिरेकंपमापुः ॥ चलकंपने ॥ सर्वत्रकर्तरिलिट् ॥ ३३ ॥ जयेतिचमुदादेवास्तामूचुःसिंहवाहनां सिंहोवाहनंयस्याःसासिंहवाहनातां सिंहवाहनां देवींजयलोकोत्कर्षेणवर्त्तस्व ॥ यद्वा ॥ जयशत्रूनभिभवेतिदेवाःमुदाहर्षेणऊचुःउक्तवन्तः ॥ सिंहवाहिनीमितिपाठे सिंहेन वाहयत्यात्मानंसिंहवाहिनी ॥ यद्वा ॥ सिंहंवाहयतियुद्धौचितींप्रापयतिसिंहवाहिनीतां

अथोएनां देवींभक्तिनम्रात्ममूर्तयोमुनयस्तुष्टुवुः चकारादानचुश्चभक्त्यानम्राआत्ममूर्त्तयायषा तेतथोक्ताः ॥ आत्ममूर्त्तयःस्वकायाः ॥३४॥ तदित्थं देव्याःसाट्टहासंसिंहनादेनसमस्तं त्रैलोक्यंत्रिभुवनंसंक्षुब्धंदृष्ट्वाप्राप्तक्षोभंवीक्ष्यतेसर्वेअमरारयःमहिषासुरादयःदैत्याःसन्नधाखिलसैन्याःउदायुधाःसंतःसमुत्तस्थुःयोद्धुमुत्थिताअभूवन्नित्यन्वयः । सम्यक्क्षुब्धं यदाहुः—क्षुब्धस्वांतेतितिनिपातनान्मन्था:तिरिक्तविषयेक्षुभितमितिप्राप्नोति । तत्रपरिहारः ॥ क्षुब्धागिरिनदीत्याद्यमुपमानाद्भविष्यतीतित्रयोलोकाःत्रैलोक्यं चातुर्वर्ण्यादित्वात्स्वार्थेष्यञ् ॥ अमराणामरयः अमरावाअरयोयेषांतेअमरारयः ॥ महिषासुरादयोदैत्याःसन्नद्धाःव्यूढकंकटाःअखिलाः सैन्याःसैनिकाःयेषां सेनाधीश्वराणां ते तथोक्ताः ॥ सन्नद्धोवर्मितःसज्जोदंशितोव्यूढकंकटः ॥ सेनायांसमवेतायेसैन्यास्तेसैन्यकाश्चते ॥ योद्धुमूर्द्ध्वीकृतानिआयुधानियैस्तेउदायुधाःसमुत्तस्थुः ॥ अनोरूर्ध्वकर्मणिइत्युक्तेर्नात्रात्मनेपदम् ॥ ३५ ॥ आस्तुस्यात्कोपपीडयोः महिषासुरःआः एततूकिमितिक्रोधात् आभाष्यउक्त्वाअशेषैरसुरैर्वृतःपरिवेष्टितःसन्तंदेव्याःसिंहनादलक्षणंशब्दमभ्यधावतअभिययौ।धावुगतिशुद्ध्योः।स्वरितेत्त्वादात्मनेपदम् ॥३६॥श्लोकद्वयमेकान्वयेद्रष्टव्यम्।ततःअभिधावनानंतरंसमहिषासुरः

दृष्ट्वासमस्तंसंक्षुब्धंत्रैलोक्यममरारयः ॥ सन्नद्धाखिलसैन्यास्तेसमुत्तस्थुरुदायुधाः ॥३५॥ आःकिमेतदितिक्रोधादाभाष्यमहिषासुरः ॥ अभ्यधावततंशब्दमशेषैरसुरैर्वृतः ॥ ३६ ॥ सददर्शततोदेवींव्याप्तलोकत्रयांत्विषा ॥ पादाक्रांत्यानतभुवंकिरीटोल्लिखितांबराम् ॥ ३७ ॥ क्षोभिताशेषपातालांधनुर्ज्यानिःस्वेनताम् ॥ दिशोभुजसहस्रेणसमंताद्व्याप्यसंस्थिताम् ॥ ३८ ॥ ततःप्रववृतेयुद्धंतयादेव्यासुरद्विषाम् ॥ शस्त्रास्त्रैर्बहुधामुक्तैरादीपितदिगंतरम् ॥ ३९ ॥

तांदेवींददर्श । कीदृशीम् । त्विषादीप्त्यातेजसाव्याप्तलोकत्रयाम् ॥ पादाक्रांत्यानतभुवंनम्रवसुधां किरीटेनउल्लिखितांबरांस्पृष्टगगनाम्॥ धनुर्ज्यानिःस्वनेन क्षोभिताशेषपातालकंपितसकलरसातलाम् ॥ भुजसहस्रेणसमंतात्समंततःदिशःदशव्याप्यसंस्थितांसम्यगवस्थिताम् ॥ किरीटंपुंनपुंसकम्॥धनुर्ज्याधनुषिआरोपितामौर्वीसमंतात्समंततइत्यर्थेऽव्ययम् ॥ संस्थाधारेस्थितौमृतौ ॥३७॥३८॥ ततोदेवीदर्शनादनंतरंतयादेव्यासहसुरद्विषांमहिषासुरादीनांयुद्धंप्रववृते प्रकर्षेणअवर्तिष्ट ॥ कीदृग्युद्धम्॥बहुधामुक्तैरुज्झितैःप्रयुक्तैःप्रेरितैःशस्त्रास्त्रैःखड्गबाणादिभिःआदीपितदिगंतरमासमंतात्दीपितमुद्द्योतितंदिशामंतरंमध्यमंतरालंयस्ययत्रवातत्तथोक्तम् ॥ क्रियाविशेषणंचैतत्स्यात् ॥ यद्यप्यायुधंतुप्रहरणंशस्त्रमस्त्रमित्यभिन्नार्थतयाप्यधुस्तथापिशस्त्राणिखड्गादीनिकरस्थानि अस्त्राणितुबाणादीनि मोक्तव्यानि इत्यस्यावांतरभेदः ॥ अथवा शस्त्रमायुधलोहयोरित्यभिधानात् शस्त्रेणलोहेनकालायसेननिर्मितान्यस्त्राणितैः ॥ अतश्चसेनांगत्वनिबंधनैकवद्भावशंकाप्यपास्ता ॥ शास्त्रैरितिपाठे शास्त्रैःआयुधशास्त्रेकथितान्यस्त्राणितैः ॥ शास्त्रै

स्तत्तद्देवताकैर्मंत्रैः शिक्षितान्यस्त्राणिवाशास्त्राणि ॥ यद्वा ॥ शस्त्रस्यलोहस्येमानीत्यणिशास्त्राणिलोहमयानितैः ॥ ३९ ॥ सेनांनयमानः सेनानीर्महिषासुरस्यसेनानीः सेनाधिपः चिक्षुराख्यः चिक्षुरसंज्ञः समहासुरः युयुधे । युधसंप्रहारे ॥ आत्मनेपदी ॥ संप्रहारोहननम् ॥ अथच ॥ अतोन्यः चामरः चामराख्यः महासुरश्चचतुरंगबलान्वितः सन्युयुधे संप्रजहार ॥ हस्त्यश्वरथपादातंसेनांगंस्याच्चतुष्टयम् ॥ चत्वारिअंगानियत्रबलेतेनअन्वितः ॥ ४० ॥ रथानांषड्भिरयुतैः अन्वितः रथानांषष्टयासहस्रैर्युक्तः उदग्राख्योमहासुरः युयुधे ॥ एकाद्याः संख्याअष्टादशपर्यंताः संख्येयेषुवर्त्तमानास्त्रिलिंगाः विशेष्यलिंगाः भवंति ॥ इहषड्भिरित्येतदयुतैरित्यस्यविशेषणंद्रष्टव्यम् ॥ किंच विंशत्याद्यास्तुसर्वाः संख्यायां— संख्येयेचवर्त्तमानाः सत्यएकवचनांताएवभवंति ॥ किंच—संख्यामात्रार्थेवर्तमानायाः विंशत्यादेः संख्यायाः द्विवचनबहुवचनेअपिभवतः । सरूपाणामेकशेषारंभात् द्वेविंशतीतिस्रो विंशतयः । गवांविंशती गवांविंशतयः ॥ इहच षट्अयुतानिषड्भिरयुतैरित्ययुतशब्दस्यएकशेषः । ततोबहुवचनम् । एवमुत्तरत्रापियथासंख्यंव्युत्पत्तिरनुसंधेया ॥ दशसहस्राणिअयुतम् ॥ महाहनुर्नाममहासुरः रथानाम् अयुतानियानितेषांमयुतानांसहस्रेणरथायुतसहस्रेणयुद्धसाधनेनदेव्यासहअयुध्यत ॥ रथानांकोट्यासाधनभूतयायुद्धमकरोदित्यर्थः

महिषासुरसेनानीश्चिक्षुराख्योमहासुरः ॥ युयुधेचामरश्चान्यश्चतुरंगबलान्वितः ॥ ४० ॥ रथानामयुतैः षड्भिरुदग्राख्योमहासुरः ॥ अयुध्यतायुतानांचसहस्रेणमहाहनुः ॥ ४१ ॥ पंचाशद्भिश्चनियुतैरसिलोमामहासुरः ॥ अयुतानांसतैः षड्भिर्बाष्कलोयुयुधेरणे ॥ ४२ ॥ गजवाजिसहस्रौघैरनेकैरुग्रदर्शनः ॥ वृतोरथानांकोट्याचयुद्धेतस्मिन्नयुध्यत ॥ ४३ ॥

॥ ४१ ॥ असयः खड्गाइवलोमान्यस्यअसय एववालोमानियस्यसः असिलोमानामममहासुरश्चरथानांपंचाशद्भिर्नियुतैः युद्धसाधनैः देव्यासहअयुध्यतयुद्धमकरोत् ॥ दशलक्षाणिनियुतम् । पंचाशन्नियुतानिपंचकोटयः ॥ रथानांपंचभिः कोटिभिरयुध्यतेत्यर्थः ॥ द्वौपंचतौपंक्तिर्दशपंक्तयः शतंदशशतानिसहस्रंदशसहस्राण्ययुतंदशायुतानिप्रयुतंतुलक्षमेव । दशलक्षाणिनियुतमेव लक्षादुपरिगणितस्थानंनियुतमुक्तंगणितागमेलक्षमयंनियुतमिति । एतेनतन्निरस्तं यत् अयुतंदशसाहस्रंनियुतंस्याद्दशायुतैरिति ॥ नियुतंदशायुतैरित्येतदमूलप्रमाणमुपेक्ष्यंप्रेक्षावद्भिः । विंशत्याद्याः सदैकत्वेयद्यपिस्युस्तथापिसंख्यामात्रेर्थेवर्त्तमानानांविंशत्यादीनांसंख्यानांद्विवचनबहुवचनेअपिभवतः एकशेषात् ॥ ततश्चपंचाशद्भिरितिअत्रबहुवचनंयुक्तंनियुतैरित्यस्यबहुत्वात् ॥ रणेयुद्धेबाष्कलोनाममहासुरः अयुतानांषड्भिः शतैर्युयुधे ॥ रथानांयानिषड्भिः शतैर्गुणितानिषष्टिलक्षाणितैः साधनैः देव्यासमंबाष्कलोयुद्धंचकार ॥ ४२ ॥ तस्मिन्युद्धेउग्रदर्शनोनाममहासुरः अनेकैर्गजवाजिसहस्रौघैश्चरथानांकोट्याचवृतः परिवेष्टितः सन्देव्यासममयुध्यत ॥ गजाश्ववाजिनश्चभूयांसः गजवाजि

सेनांगत्वात्द्वंद्वैकवद्भावः ॥ गजवाजिनोभूयांसः सहस्राणिअपरिमितानितेषांसमूहाः अनेकेऽपरिमिताः तैः परिवारितः परिवेष्टितः ॥ अथचरथानांकोट्यावृतः परिवेष्टितः ॥ को
टिः संख्याविशेषः कोटिरर्बुदसंज्ञासंख्याप्रयुतसंज्ञंलक्षम् अर्बुदसंज्ञाकोटिरितिह्याहुः ॥ ४ ३ ॥ अथतत्रसंयुगेसंग्रामेबिडालाख्यः बिडालोनाममहादैत्यः रथानांपंचाशद्भिरयुतैः पंच
भिर्लक्षैः परिवारितः परिवेष्टितः सन् देव्यासमंयुयुधेयुद्धंचकार ॥ ४ ४ ॥ कालोनाममहादैत्यः रणेरथानांपंचाशतायुतैः पंचाशत्संख्यागुणैस्तैरयुतैः पंचभिर्लक्षैर्वृतः वेष्टितः युयुधे ॥ अ
पिचसएवतत्रसंयुगेयुद्धेतावद्भिरेवहस्तिभिर्वाजिभिः पदातिभिश्चसेनांगैः प्रत्येकंपंचभिः पंचभिर्लक्षैः परिवारितः सन्देव्यासमंयुयुधे ॥ ४ ५ ॥ तत्रसंयुगेयुद्धेअन्येचचिक्षुरादिभ्योऽपरे
येऽसुरास्तत्रतेषुमहासुराअयुतशः अयुतैरयुतैः दशसाहस्रीभीरथनागहयैः करणैर्वृताः परिवेष्टिताः संतः देव्यासहयुयुधुः ॥ चक्षिङोङित्करणत्वोनुदात्तेत्त्वनिमित्तात्मनेपदस्यानित्य
त्वात्परस्मैपदम् ॥ अन्यथात्रयुयुधिरेइत्येवन्याय्यम् ॥ युध्यतेरनुदात्तेत्त्वात् ॥ इह अन्येचतत्रेतिनिर्द्धारणेसप्तमी ॥ येचिक्षुरादिभ्योऽन्येअसुराः सन्तितत्रतेषुमहासुराइतियत्तदो
रर्थतोनित्यसंबंधः ॥ परतोयस्तत्रशब्दः ससंयुगेइत्येतंदपेक्षयाधिकरणसप्तम्यंतः ॥ अयुतशइति ॥ संख्यैकवचनाच्चवीप्सायामितिकारकवाचिनः संख्याशब्दाद्वीप्सायांशस्प्रत्ययः ॥

बिडालाख्योमहादैत्यः पंचाशद्भिरथायुतैः ॥ युयुधेसंयुगेतत्ररथानांपरिवारितः ॥ ४४ ॥ वृतः कालोरथानांचरणेपंचाशतायुतैः ॥ युयुधेसंयुगेतत्रता
वद्भिः परिवारितः ॥ ४५ ॥ अन्येचतत्रायुतशोरथनागहयैर्वृताः ॥ युयुधुः संयुगेदेव्यासहतत्रमहासुराः ॥ ४६ ॥ कोटिकोटिसहस्रैस्तुरथानांदंतिनां
तथा ॥ हयानांचवृतोयुद्धेतत्राभून्महिषासुरः ॥ ४७ ॥ तोमरैर्भिंदिपालैश्चशक्तिभिर्मुसलैस्तथा ॥ युयुधुः संयुगेदेव्याखड्गैः परशुपट्टिशैः ॥ ४८ ॥

रथैः सहिताः नागाः गजाः रथनागाः रथनागैः सहिताहयाः रथनागहयास्तैः समानाधिकरणाधिकारेशाकपार्थिवादीनामुपसंख्यानमुत्तरपदलोपश्चेतिसमासः ॥ अन्यथारथाश्च
नागाश्चहयाश्चेतिद्वंद्वेरथनागहयमितिसेनांगत्वादेकवद्भावः स्यात् ॥ ४६ ॥ महिषासुरः तत्रयुद्धेरथानांदंतिनांहयानांचप्रत्येकंकोटिकोटिसहस्रैर्वृतः परिवेष्टितः सन्तयादेव्यासहयो
द्धुमवहितोभूत् ॥ कोट्यागुणिताकोटिः कोटिकोटिः कोटिकोट्यागुणितानिसहस्राणिकोटिकोटिसहस्राणितैः चकारात्पदातीनामपितावद्भिरेवकोटिकोटिसहस्रैर्वृतइत्यवगंतव्यम्
॥ ४७ ॥ संयुगेयुद्धेचिक्षुराद्याः सर्वेपिमहासुराः तोमराद्यैरायुधैः साधनैः देव्यासमंयुयुधुः ॥ चक्षिङोङित्करणादत्रआत्मनेपदानित्यत्वात्परस्मैपदम् ॥ अन्यथायुयुधिरेइत्येवस्यात्
युधेरनुदात्तेत्त्वात् ॥ सर्वलातोमरोस्त्रियाम् ॥ स्तोम्यंतेश्लाघ्यंतेतोमराः ॥ स्तोमश्लाघायाम् ॥ भिंदिपालः सृगस्तुल्यौ ॥ भिंदतः शत्रोः प्रयोक्तारंयापालयतिभिंदिपालः हस्तक्षे
प्योलगुडः कासःसामर्थ्ययोः शक्तिः ॥ कामुर्नामायुधविशेषः ॥ अयोग्रंमुसलोस्त्रीस्यात् ॥ मुस्यतेखंड्यतेनेनमुसलं खंडयतिभिनत्तिखड्गः द्विधारः करवालोसिरित्यर्थः ॥ परानृर्श्यं

तितनूकुर्वंतिपरशवः कुठारभेदाः॥पट्टिःक्षेत्रादिविन्यासेहिंसाख्यशारयोरपि ॥ पट्टिर्धाराविशेषोस्त्यस्मिन्पट्टिशः॥लोमादित्वात्शः । परशुभिःसहिताःपट्टिशाःतैः॥परशवश्च पट्टिशाश्चआयुधविशेषाइतिद्वंद्वेतुसेनांगत्वात्द्वंद्वैकवद्भावःस्यात् ॥ ४८ ॥ ततोयुद्धप्रवृत्तेरनंतरंकेचितमहासुराःदेवींहंतुंशक्तीश्चिक्षिपुः । क्षिपप्रेरणे ॥ आचिक्षिपुरितिपाठेतु प्रयोक्तुमाकृष्टवंतः ॥ तथादेवींहंतुंपाशांश्चिक्षिपुःपाशान्प्रेरितवंतः ॥ तथैवअपरेकेचित्तुखड्गप्रहारैर्देवींहंतुंप्रचक्रमुः ॥ आदिकर्मणिप्रयोक्तव्येप्रोपाभ्यामित्यात्मनेपदेनभवत्यमि तिचेत्॥उच्यते॥पूर्वंधातुःसाधनेनयुज्यतेपश्चादुपसर्गेणेत्यादिरीत्याकर्मणिवृत्तिः ॥अथवानायंप्रइत्युपसर्गः॥ तर्हिंप्रोपसर्गः॥प्रतिरूपकःअव्ययाख्यःअन्यथाप्रचक्रमिरेइत्यात्मने पदमेवस्यात् ॥४९॥ ततःसादेवीविजिगीषमाणांचंडिकानिजान्यात्मीयानिशस्त्राणिखड्गादीनिअस्त्राणिचबाणादीन्यायुधानिवर्षतिप्रवर्त्तयतितच्छीलेतितथोक्तासतीतानिम हासुरप्रवर्तितानिप्रयुक्तानि शस्त्राणिखड्गादीनि अस्त्राणिच बाणान्यायुधानिलीलयैवप्रचिच्छेदद्वेधाचकार खंडयामास ॥ छिदिर्द्वैधीकरणे ॥ हलादिःशेषेपुनःप्रसं गविज्ञानात्सिद्धमिति प्रसक्तोपि न॥ हलादिःशेषः अवयवावयवः समुदायावयवोभवतीतिवचनात् ॥ शस्त्राण्यस्त्राणिचंडिकेतिपाठेअंतरेणापिचकारंचार्थोर्थतःकचिद्गम्यते ॥

केचिच्चचिक्षिपुःशक्तीःकेचित्पाशांस्तथापरे ॥ देवींखड्गप्रहारैस्तुतेतांहंतुंप्रचक्रमुः ॥ ४९॥ सापिदेवीततस्तानिशस्त्राण्यस्त्राणिचंडिका ॥ लीलयै वप्रचिच्छेदनिजशस्त्रास्त्रवर्षिणी ॥ ५० ॥ अनायस्तानानादेवीस्तूयमानासुरर्षिभिः ॥ मुमोचासुरदेहेषुशस्त्राण्यस्त्राणिचेश्वरी ॥५१ ॥सोपिक्रुद्धो धुतसटोदेव्यावाहनकेसरी ॥ चचारासुरसैन्येषुवनेष्विवहुताशनः ॥ ५२ ॥

यथाअहरहर्नयमानोपिगामश्वंपुरुषव्रजंवैवस्वतोनतृप्यतीतिवाक्ये ॥ अथवा ॥शस्त्राण्यस्त्राणिचांबिकेतिपाठः ॥ शस्त्राण्यस्त्राणिचेश्वरीतितुक्वचित्पाठः ॥ लीलाहेलाविला सःखेलाक्रीडावातथा ॥ ५० ॥ अनायस्तमखिन्नमम्लानमाननंमुखंयस्याःसातथोक्तादेवीविजिगीषमाणा सुरैर्ब्रह्मादिभिर्ऋषिभिर्वसिष्ठादिभिश्च ॥ यद्वानारदादिभिः सुरर्षिभिःस्तूयमानाईश्वरीचभगवतीअसुराणांदेहेषु ॥ यद्वा ॥ आसुरेष्वसुरसंबंधिषुदेहेषुशस्त्राणिखड्गादीनिअस्त्राणिबाणादीन्यायुधानिमुमोचप्रयुक्तवतीप्रेरितवती ॥ ईश्वरस्यस्त्रीईश्वरी ॥ यद्वा ॥ अश्नोतेराशुकर्मणिवरट्चेच्चोपधायाइतिईश्वरीविश्वव्यापिकाभगवतीत्यर्थः ॥ ५१ ॥ सप्रसिद्धःदेव्याःवाहनीभूतःकेसरीसिंहोपिक्रुद्धः धुतसटःकंपितस्कंधकेसरःसन्आसुरसैन्येषुयद्वाअसुरसैन्येषुचचारप्रससारपरिबभ्राम ॥ केषुकइव वनेषुहुताशनोग्निरिव ॥ सिंहःक्रोधेनज्वलद्रूपत्वात्हुताशनइवेतिहुताशनसा दृश्यंसिंहस्यवर्णितम् ॥ यथाचवनानि वनाग्निदग्धानिभस्मीभूतानिस्युस्तथादैत्यसैन्यान्यपिदेवीवाहनीभूतसिंहरोषानलदग्धानिभवेयुरितिदैत्यसैन्यानांवनसादृश्यंद्रष्टव्यम् ॥

कुद्धःकंठीरवोगर्जन्नुज्ज्वलोज्ज्वलदीधितिः ॥ उद्गमान्निवजज्वालसज्वालाज्वलनधुविशोपनाथ ॥ [illegible]
पमानावधुवाःसटायेनतथोक्तइतिसटाप्रयोगसिद्धिः ॥ ५२ ॥ अंबिकाचंडिकारणेसंग्रामेमहासुरैः समंयुध्यमानासतीयान्यानेवयावतएवनिश्वासान्[illegible]तान्मुमुचमुक्तवती
तेएवतावंतएवनिश्वासाः प्रत्येकंसद्यःतस्मिन्नेवक्षणेशतसहस्रशःगणाःचंडिकागणाः संभूताःसमदृश्यंत ॥ इहगणाः शताधिकंसहस्रंचेद्विवक्षिताःस्युस्तदाशतसहस्रमेकादशशता
निशतसहस्रं शतसहस्रमितिवीप्सायांशतसहस्रशः। संख्यैकवचनाच्चवीप्सायांशस्॥अथचगणाःशतगुणितानिसहस्राणिलक्षमित्यर्थः।।५३।।तेरणेदेवीरोषनिश्वासजागणाःयुध्य
ध्वंयुध्यध्वमितिदेव्याउपबृंहिताःप्रोत्साहिताःपरशुभिःभिंदिपालासिपट्टिशैरायुधैरसुरगणान्नाशयंतःमहासुरैःसमंयुयुधुः॥ भिंदिपालैःसहिताअसयःखड्गाःतैःसहिताःपट्टिशाःतैः
द्वंद्वेतुसेनांगत्वादेकत्वंस्यात् ॥ बृहिवृद्धौ ।। उपपूर्वःप्रोत्साहनेवृद्ध्युत्कर्षेवावर्तते ॥ देवीशक्त्यपबृंहितानितिपाठेअपपूर्वोबृहिरवृद्धिवाची । तेगणाःदेवीसामर्थ्यात्क्षीणानसुर
गणान्नाशयंतः ॥अस्मिन्पाठेगणानांशौर्योत्कर्षोनास्ति ।। यतोदेवीशक्त्यपबृंहितानेवासुरान्नाशयंतोयुयुधुः॥५४॥युद्धेमहोत्सवेइवदेव्यागणाः पटहानानकानवादयंतवादि

निश्वासान्मुमुचेयांश्चयुध्यमानारणेंबिका ॥ तएवसद्यःसंभूतागणाःशतसहस्रशः ॥ ५३ ॥ युयुधुस्तेपरशुभिर्भिंदिपालासिपट्टिशैः ॥ नाशयंतो
सुरगणान्देवीशक्त्युपबृंहिताः ॥ ५४ ॥ अवादयंतपटहान्गणाःशंखांस्तथापरे ॥ मृदंगांश्चतथैवान्येतस्मिन्युद्धमहोत्सवे ॥ ५५ ॥ ततोदेवीत्रि
शूलेनगदयाशरवृष्टिभिः ॥ खड्गादिभिश्चशतशोनिजघानमहासुरान् ॥५६॥ पातयामासचैवान्यान्घंटास्वनविमोहितान् ॥ असुरान्भुविपाशेन
बद्ध्वाचान्यानकर्षयत् ॥ ५७ ॥ केचिद्द्विधाकृतास्तीक्ष्णैःखड्गपातैस्तथापरे ॥ विपोथितानिपातेनगदयाभुविशेरते ॥ ५८ ॥

तवंतः ॥ वदेर्ण्यंताल्लङिणिचश्चेत्यात्मनेपदम् ॥ आनकःपटहोस्त्रीस्यात् ॥ तथापरेगणाःशंखानवादयंत ॥ तथान्येगणाःमृदंगान्मुरजानवादयंत ॥ युद्धमहोत्सवइत्यनेनबाणा
नांरणोन्मुखत्वेनशौर्योत्कर्षसंग्रामजयित्वंसूच्यते॥उत्सूतेसुखमुत्सवःमहानुत्सवोमहोत्सवः ॥ ५५॥ ततोनंतरंदेवीत्रिशूलेनगदयाशरवृष्टिभिःखड्गादिभिश्चसंग्रामसाधनैरायुधैःश
तशःशतैःशतैःमहासुरान्निजघान । निरंतरंजिहिंस॥आदिशब्देनयष्टिपरशुकुंतमुद्गरमुशलकर्त्तरीकरवालिकाभिंदिपालपरिघशंकुतोमरवज्रशक्तिपाशचक्राद्यायुधानिगृह्यंते ॥
॥ ५६ ॥ अथचदेवीघंटास्वनविमोहितान्घंटानिर्घोषमूर्छितान्अन्यानसुरान्पाशेनबद्ध्वाभुविपातयामास ॥ अथचदेवीअन्यानसुरान्पाशेनाकर्षयदाकृष्टवती॥कृषेश्चुरादि
कात्स्वार्थेणिचिलङ्रूपम्॥ननुचनायंपठ्यतेचुरादौयदैवम् ॥कर्षत्याकर्षणेशेतुकृषते कृषतीत्युभेइत्येवंपठ्यते॥एवंतर्हिभ्वादेःकर्षतःकर्षणंकर्षःकर्षमकरोत् तत्करोतीतिणिच्॥
॥ ५७ ॥ देव्यास्तीक्ष्णैःखड्गपातैःकेचिन्महासुराःद्विधाकृताःखंडिताः॥ तथाऽपरेमहासुरादेव्यागदयाकृतेननिपातेनविपोथिताःसंतःभूमौशेरतेशायितवंतइत्यर्थः ॥ विपोथि

ताइतिपुथर्हिंसायांदिवादिः ॥ यदाहुः॥ पुथ्येत्पुंथतिर्हिंसार्थेभाषार्थेपोथयेदिति ॥ विविधंपोथनं विहननं विपोथःसंजातएषांविपोथिता संजातविघाताइत्यर्थः॥यद्वाविविधः पोथःविघातोयेषांतेविपोथाः विपोथाःकृताःविपोथिताः तत्करोतीतिणिचि कर्मणिक्तः॥नतुचपुथ्यतेर्णिचिकर्मणिक्तः नतुचपुथ्यतेरुदुपधत्वान्नपुंसकेभावेक्तेकृतेकित्त्वनिषेधप क्षेपोथितमितिस्यात्॥ततश्वविविधंपोथितंपोथनं विहननंयेषांतेइतिबहुव्रीहौवाहिताग्न्यादित्वान्निष्ठांतस्यपरनिपातेविपोथिताःस्युः नस्युः यतउदुपधाद्भावादिकर्मणोरन्यतर स्यामितिशब्विकरणानामेवोदुपधानांतत्रसूत्रेग्रहणंनान्येषामित्यभ्युपजग्मुः ॥ यद्वा ॥ विपुंथिताइतिपाठेपुथिर्हिंसासंक्लेशनयोः भ्वादिःकर्मणिक्तःविपुंथिताविहिंसिताःसंक्लेशि तावधिताइतियावत् ॥ ५८ ॥ केचिन्महासुराःदेव्यामुसलेनभृशमत्यर्थंहताःताडितारुधिरंरक्तंवेमुःउज्जगरुः ॥ केचिच्चमहासुराःदेव्याशूलेनवक्षसिभिन्नाविदारि ताःसंतःभूमौनिपातिताःन्यपतन् ॥ वेमुरितिअतएकहल्मध्येनादेशादेर्लिटिइति टुवमूउद्गिरणइत्यस्यनशसददवादिगुणानामितिनिषेधादेत्वाभ्यासलोपौनस्तइत्याहुः ॥ ततश्चववमुरित्येवंभवितव्यमिति ॥ अत्रसमादधुः अतएकहल्मध्येनादेशादेर्नशसददवादिगुणानांलिटीत्येकयोगेकर्तव्येयोगविभागादस्यानित्यत्वमितिततःवेमुरित्यपिक्व

**वेमुश्चकेचिद्रुधिरंमुसलेनभृशंहताः ॥ केचिन्निपतिताभूमौभिन्नाःशूलेनवक्षसि ॥ ५९ ॥ निरंतरशरौघेणकृत्ताःकेचिद्रणाजिरे ॥ शैलानुकारिणः प्राणान्मुमुचुस्त्रिदशार्दनाः ॥ ६० ॥ केषांचिद्बाहवश्छिन्नाश्छिन्नग्रीवास्तथापरे ॥ शिरांसिपेतुरन्येषामन्येमध्येविदारिताः ॥ ६१ ॥**

चित्साधुःस्यादिति ॥ ५९ ॥ केचिच्छैलानुकारिणः शैलान्स्वगात्रपरिमाणतःअनुकुर्वाणाःपर्वतायमानाः त्रिदशानामर्दनाःअर्दयितारःहिंसकाः असुराःरणा जिरेरणस्याग्रेदेव्याप्रयुक्तेननिरंतरशरौघेणअविच्छिन्नबाणव्यूहेनकृत्ताः छिन्नाःविद्धाःप्राणानसून्मुमुचुःव्यमुंचन् ॥ शराणामोघःतेनशरौघेण ॥ कुमतिचेतिणत्वम् ॥निरंतरः शराःनिरंतरशराःतेषामोघःसमूहः तेन॥सेनानुकारिणइतिक्वाचित्पाठः॥सेनासैन्यम्अनुपश्चात्कर्तुंशीलंयेषांतेअग्रेसराःशूराःत्रिदशार्दिनःदेवहिंसिनःकेचिदसुराःरणाजिरेप्राणा न्मुमुचुःअत्याशुः ॥ सेनानुकारिणइतिपाठे सिध्यंतिसेधाः ॥ शल्यानुकारिणइतितुसभ्यःपाठः ॥ श्वावितुशल्यइत्यभिधानात् ॥ शल्यःशल्यकोभक्ष्यःपंचनखः ॥ निरंत राइतिपाठे शरौघेणनिरंतराः प्रतिलोमकपव्याप्ताः कृताः सिद्धाः ॥ अवएवशल्यकाइवशललीकण्टकशतावृताः ॥ शल्यकाइवदृश्यमानारणाग्रेप्राणान्मुमुचुः ॥ निरंतराः शरौघेणकृताइतितुपाठेकृताराचिताइत्यर्थः ॥ ६० ॥ तयादेव्याकेषांचिदसुराणांबाहवोभुजाःछिन्नाःखण्डिताः भुविपेतुः तयादेव्याऽपरेसुराःछिन्नाग्रीवाःशिरोधरायेषां तेछिन्नग्रीवाः संतः पेतुः ॥ तथादेव्याऽन्येषामसुराणांछिन्नानिशिरांसिपेतुःतथादेव्याऽन्येसुराःवपुषोमध्यदेशेविदारिताःखण्डिता ःसंतः पेतुः भूमौबभ्रमुः ॥ असाकल्येतुचि

त्वन॥ छिन्नंछातंलूनंकृत्तंदातंदितंछितंवृक्णं दारितौभिन्नभेदितौ॥६१॥ अपरेतुमहासुरायुद्धतःदेव्याविच्छिन्नजंघाःखण्डितजंघाकाःसंतःउर्व्यांभुविपेतुःप्रपमतुः ॥ कांचयुयु
ध्यंतःएकबाह्वक्षिचरणाःएकबाहुकाएकाक्षाःएकचरणकाश्चसंतोदेव्याद्विधाकृताः खण्डिताउर्व्यांपेतुःन्यपतन्॥ बाहुश्चअक्षिचचरणंबाह्वक्षिचरणंचयुद्धतःप्रतिमहासुरंसंपन्नमे
कबाह्वक्षिचरणंयेषांते ॥ द्वंद्वांतेश्रूयमाणंपदंव्यावर्तकंप्रत्येकमभिसम्बध्यते ॥ तथासम्पन्नव्रीहियवोग्रामःतथाचव्रीहियवधान्याःप्रजाः ॥ ६२ ॥ अन्येमहासुराःशिरसि
छिन्नेपिसतिभूमौपातिताःपुनस्तदनुउत्थिताःकंशिरोबध्नंतिकबंधाःसंतःपुनःशिरोधारिणःसंतःगृहीतपरमायुधाःआत्तोत्तमशस्त्राः पुनर्देव्यासमंयुयुधुः ॥ गृहीतपरमायुधेतिद्वावि
सर्गपाठेतुगृहीतापरमाआसमंतात्युत्युद्धंययासादेवीगृहीतपरमायुत्गृहीतपरमायुधेतितृतीयांतमेतत् ॥ कबंधोस्त्रीक्रियायुक्तमपमूर्द्धकलेवरम् ॥ कस्यशिरसोबन्धोत्रकबन्धः ॥
कंबध्नातिवाकबन्धः ॥ कबंधंसलिलेतुण्डे ॥युद्धेषुयोद्धृवीरेषुसहस्रेकृन्तमूर्द्धसु ॥तदावेशात्कबन्धःस्यादेकोऽमूर्द्धाक्रियान्वितइतिकबंधलक्षणम्॥देवीदानवयुद्धेतुकबन्धार्बुदको
टयः॥क्षणेक्षणेसमुत्पन्नादेव्यायुयुधिरेपुनः॥ देवीदानवयुद्धोत्थकबन्धार्बुदकोटयः ॥ देवीरोषोत्थहुंकारज्वलज्ज्वनभस्मिताः ॥६३॥ तत्रयुद्धेअपरेमहासुराःतूर्याणांवाद्यादी

विच्छिन्नजंघास्त्वपरेपेतुरुर्व्यांमहासुराः ॥ एकबाह्वक्षिचरणाःकेचिद्देव्याद्विधाकृताः ॥ ६२ ॥ छिन्नेपिचान्येशिरसिपतिताः पुनरुत्थिताः ॥ कबं
धायुयुधुर्देव्यागृहीतपरमायुधाः ॥ ६३ ॥ ननृतुश्चापरेतत्रयुद्धेतूर्यलयाश्रिताः ॥ कबंधाश्छिन्नशिरसःखड्गशक्त्यृष्टिपाणयः ॥ ६४ ॥ तिष्ठतिष्ठेति
भाषंतोदेवीमन्येमहासुराः ॥ रुधिरौघविलुप्तांगाःसंग्रामेलोमहर्षणे ॥ ६५ ॥

नांततानद्धघनशुषिराणांचतुर्णांलयःसाम्यंवाद्यादीनामन्योन्यसमत्वमाश्रिताःवीररसावेशवशाःखड्गशक्त्यृष्टिपाणयःयुध्यमानाः पूर्वंदेव्याछिन्नाशिरसोपिवीररसःविष्कारात्संग्रा
मादिदेवतावेशाच्चाविःकृतचेतनाःसंतःपश्चात्कंशिरोबध्नंतिस्वंस्वंयथास्थानंसंनिवेशयंतीतिकबन्धाःसंतःपुनःशिरोधारिणःसंतःननृतुर्नृत्यंचक्रुः॥चकारात्केचिद्देव्यासमंयुयुधि
रेच॥ तूर्यलयाश्रिताहिनृत्यंतिखड्गशक्त्यृष्टिपाणयोहियुध्यंते॥ ततंवीणादिकंवाद्यमानद्धंमुरजादिकम् । वंशादिकंतुशुषिरंकांस्यतालादिकंघनम्॥तथाचभरतः॥ततंचैवावनद्धं
चघनंशुषिरमेवच ॥ चतुर्विधंतुविज्ञेयमातोद्यंलक्षणान्वितम् ॥ एतएवाभ्यधुः ॥ चतुर्विधमिदंवाद्यंवादित्रातोद्यनामकमिति ॥ यद्यपिखड्गेतुनिस्त्रिंशचंद्रहासासिऋष्टयइतिऋष्टिः
खड्गपर्यायस्तथाप्याकृतिसंनिवेशविशेषभेदभिन्नतयापृथक्प्रयुक्तः ॥ खड्गशक्त्यष्टपाणयइतिपाठेतुखड्गैःशक्तिभिश्चअष्टाव्यामाःपाणयोयेषांते ॥ यद्वा ॥ दैत्याःकेचिदष्ट
भुजाश्चसंतीतिखड्गश्चशक्तयश्चअष्टस्वष्टसुपाणिषुयेषांते ॥ ६४ ॥ अन्येमहासुराः संग्रामशूराःयुद्धेतिष्ठतिष्ठेतिदेवींभाषंतःकथयंतःस्वकीयामहमहमिकांप्रकटयंतोदेव्यास

मंयोद्धुमाजग्मुरितिशेषः ॥ तिष्ठतिष्ठेत्यत्रनित्यवीप्सयोर्नित्येआभीक्ष्ण्येचतिङन्तस्यद्विर्वचनम् ॥ भाषंतइतिभाषव्यक्तायांवाचि ॥ अनुदात्तेत्त्वात्प्राप्तस्यात्मनेपदस्यचक्षिङोङि
त्त्वादनित्यत्वात्परस्मैपदं शतृप्रत्ययः ॥ तिष्ठतिष्ठेत्यभाषंतेतिपाठेतुअन्येमहासुरादेवींतिष्ठतिष्ठअयास्मदग्रेक्कयास्यसिक्कचनिलीयसेइतिसभर्त्सनंनामग्राहमालपान्नित्यर्थः ॥ तिष्ठ
तिष्ठेतिचैवोक्तादेव्याऽन्येयुयुधुर्मृधे अन्येचमहासुरामृधेयुद्धेदेवितिष्ठतिष्ठेतिसभर्त्सनमुक्तादेव्याचसमंयुयुधुः ॥ लोमानिरोमाणिहृष्यंत्युद्भवंत्यनेनेतिलोमहर्षणंतस्मिन्रोमाञ्चोद्ग
मकारिणिसंग्रामेरुधिराणामोघाःस्तोमाःतैः विलुप्तांगाअपरेमहासुरास्तैः ॥ रोमांचोरोमपुलकोरोमहर्षणमित्यपि ॥ ओघोवृंदेंभसांरये ॥ ६५ ॥ देव्यापातितैःभ्रंशितैःरथैर्नागै
र्गजैरश्वैरसुरैश्चकीर्णासावसुंधराअगम्याऽनधिगम्यागंतुमशक्यातत्राभवत् ॥ क्वयत्रसमहान्रणःसंग्रामःदेव्यासमंमहिषासुरसैन्यानामभूत् ॥ पातितैरथेत्यत्ररोरीतिरेफलोपः ॥
रथसहिताःनागाःरथनागाःतत्सहिताअश्वाःतैः । द्वंद्वेतुसेनांगत्वादेकवद्भावःस्यात् ॥ वसूनिधास्यतिसावसुंधरा नगम्याअगम्याअसेव्या ॥ गमेःपोरदुपधायत ॥ ६६ ॥ किंच
तत्रयुद्धेअसुरसैन्यस्यमध्येसद्यः सपदितत्क्षणेदेव्यासहसंग्रामारंभक्षणेएववारणानांगजानामसुराणांदैत्यानांवाजिनांघोटकानांशोणितौघारक्तसमूहाएवमहानद्यःसमुद्रगाः सद्यः

पातितैरथनागाश्वैरसुरैश्चवसुंधरा ॥ अगम्यासाऽभवत्तत्रयत्राभूत्समहारणः ॥ ६६ ॥ शोणितौघामहानद्यःसद्यस्तत्रविसुस्रुवुः ॥ मध्येचासुरसै
न्यस्यवारणासुरवाजिनाम् ॥ ६७ ॥ क्षणेनतन्महासैन्यमसुराणांतथांबिका ॥ निन्येक्षयंयथावह्निस्तृणदारुमहाचयम् ॥ ६८ ॥ सचासिंहोमहाना
दमुत्सृजन्धुतकेसरः ॥ शरीरेभ्योमरारीणामसूनिवविचिन्वति ॥ ६९ ॥

विसुस्रुवुःप्रसुस्रुवुरित्यर्थः ॥ रक्तप्रवाहमय्योमहानद्योबभूवुरित्यर्थः ॥ विसुस्रुवुः ॥ स्रुगतौ लिट् उस्युवङ् ॥ ६७ ॥ तथातद्वत्अंबिकादेवीअसुराणांतत्प्रसिद्धंमहासैन्यंक्ष
णेनतत्क्षणमात्रेणक्षयंविनाशंनिन्येप्रापयामास ॥ नयतिर्द्विकर्मकः ॥ तृणानिचदारूणिचतृणदारूणितेषांमहान्चयःगणःसमूहःतंयथावह्निस्तद्वत ॥ यद्वा ॥ यथातथैवसाम्ये
॥ ६८ ॥ नकेवलमांबिकैवअपितुससिंहश्च ॥ सप्रसिद्धोदेव्यावाहनीभूतोधुतकेसरःकंपितस्कंधकेसरःसिंहश्चमहानादंमहांतंनादंकंठीरवत्वात् । कंठगर्जनमुत्सृजन् कुर्वन्तथो
चितमसुरसैन्यंक्षयंनाशंनिन्ये॥ यद्वारूप्यात्अथवासचासिंहःकर्त्ता ।विचिन्वतीतिविचयनाक्रियासंबंधनीयः ससिंहःमहानादमुत्सृजन्धुतकेसरःसन्नमरारीणांसुरद्विषांशरीरेभ्यः
सकाशतः असून्प्राणान् विचिन्वतिप्राणान्गृह्णीयादिवसंहरेदिव॥विचिन्वतीतिचिञ्चयने ॥ विध्यादौलिङर्थेलेट्कर्त्तरिस्वादिभ्यः श्नुः लेटस्तिप् लेटोडाटावितिअडागमः॥
छांदसोगुणाभावः इकोयणचि न किंतुहुश्नुवोःसार्वधातुकेयण् ॥ इतश्चलोपःपरस्मैपदेष्वितितुवा तेनात्रनाश्रीयते ॥ अथवाविचिन्वतीतिसप्तमीयम् ॥ सासिंहश्चधुतकेसरः

महानादमुत्सृजन्असुरान्व्यापादयतच्छरीरेभ्यःप्राणान्विचिन्वतीवेत्युत्प्रेक्षते॥ ततश्चतस्मिन्सिंहेऽमरारीणांशरीरेभ्यःप्राणान्विचिन्वतीवइतस्ततःसंहर्तुंगवेषयतीवसतिदेव्याग
णैश्चतैरसुरैःसहयुद्धंकृतंव्यधायीत्यर्थः।६९। तत्रसंग्राममभूमौदेव्याःरोषनिश्वाससंभूतैर्गणैश्चतैरसुरैःसहयुद्धंतथाकृतंयथादिविस्वर्गेदेवाःपुष्पवृष्टिमुचःसंतः एनांदेवींतुष्टुवुःस्तुतवंतः॥
पुष्पाणांवृष्टींमुंचंतिपुष्पवृष्टिमुचः ॥ अथैनांतुष्टुवुरितिपाठेतुदेव्यागणैश्चतत्रभूमौमहासुरैःसमंयुद्धंकृतमथानंतरंपुष्पवृष्टिमुचोदेवाःदिविषदःएनांयुध्यमानांससिंहांसगणामंबिकांतु
ष्टुवुः ॥ अहोइदंनामाश्चर्ययोद्धारोमायाविनोममासुराःतैःसममेकाकिन्यबलायुध्यतेमहासुरसैन्यान्यप्यनेकानि दशशःशतशःसहस्रशःअयुतशःलक्षशःनियुतशःकोटिशःकोटि
कोटिश्चक्षयंतयैकयैवनीतानि तद्रणेकबंधाअपितयाऽबलयायुध्यंतेतेचतदबलारोषहुंकारज्वलज्ज्वलनज्वालावलीढाः क्षणेक्षणेभस्मीभवंति अथ च रणमंडलेतदबलाविखंडित
प्रचंडविक्रमोल्लासिमहायोद्धृमहासुरवपुर्विलसद्रुधिरौघामहानद्यःप्रवहंतीतितामित्थमद्भुताद्भुतचारितांलोकाभ्युदयैकफलोदयामंबिकांदिविषदःस्तुवंतीत्यर्थः ॥७०॥इति श्रीमार्कं
डेयमहाराजाधिराजश्रीमन्नामरान्वयश्रीमदुद्धरणात्मजश्रीशंतनुचक्रवर्तिविरचितायांशांतनव्यांचंडिकामाहात्म्यटीकायामेकोनाशीतितमोऽध्यायः ॥७९॥ ऋषिरुवाच ॥ अ

देव्यागणैश्चतैस्तत्रकृतंयुद्धंमहासुरैः ॥ यथैनांतुष्टुवुर्देवाःपुष्पवृष्टिमुचोदिवि ॥ ७० ॥ ॥ इतिश्रीमार्कण्डेयमहापुराणेसावर्णिकेमन्वन्तरेदेवीमाहा
त्म्यएकोनाशीतितमोऽध्यायः ॥ ७९ ॥ ऋषिरुवाच ॥ ॥ निहन्यमानंतत्सैन्यमवलोक्यमहासुरः ॥ सेनानीश्चिक्षुरः कोपाद्ययौयोद्धुमथांबि
काम् ॥ १ ॥ सदेवींशरवर्षेणववर्षसमरेऽसुरः ॥ यथामेरुगिरेःशृंगंतोयवर्षेणतोयदः ॥ २ ॥ तस्यच्छित्त्वाततोदेवीलीलयैवशरोत्करान् ॥ जघान
तुरगान्बाणैर्यंतारंचैववाजिनाम् ॥ ३ ॥ चिच्छेदचधनुःसद्योध्वजंचातिसमुच्छ्रितम् ॥ विव्याधचैनंगात्रेषुच्छिन्नधन्वानमाशुगैः ॥ ४ ॥

थमहिषासुरसेनानीःचिक्षुरसंज्ञःमहासुरःतत्सैन्यंतस्यमहिषासुरस्यसैन्यंदेव्यानिहन्यमानंनिरंतरंहन्यमानमवलोक्यवीक्ष्यकोपाद्योद्धुमंबिकांदेवींययौजगाम॥ निहन्यमानमिति
वर्तमानसामीप्येवर्तमानवद्वा भंतेलट्निहतामित्यर्थः॥१॥ सचिक्षुरनामाऽसुरःसमरेसंग्रामेशरवर्षेणनिरंतरप्रयुक्तबाणपातनेनदेवींववर्षछादयामास॥कःकेनकिमिवतोयदोमेघः
तोयवर्षेणसंततप्रवृद्धपाथःप्रथितपातनेनमेरुगिरेःशृंगमिव॥ नभिन्नेवचनेलिंगेनहीनाधिकतापिवा ॥ उपमादूषणायालंयत्रोद्वेगोनधीमताम् ॥ क्रियावाचित्वमाख्यातुमेकोत्रार्थः
प्रदर्शितः ॥ प्रयोगतोनुवर्त्तव्याअनेकार्थाहिधातवः ॥ यद्वा यथातथैवेदंसाम्यम् ॥ २ ॥ ततोनंतरंदेवीसंग्रामेलीलयैवक्रीडयैवअनायासेनैवबाणैस्तस्यचिक्षुरसंज्ञस्यशरोत्करान्
बाणगणान्छित्त्वाखंडयित्वातुरगान्घोटकान्बाणैर्जघान ॥ अथचबाणैरेववाजिनांघोटकानांयंतारंसारथिंजघान ॥ क्रीडालीलाचनर्मच ॥ स्त्रीणांविलासविब्बोकविभ्रमाललितं
तथा ॥ हेलालीलेत्यमीहावाःक्रियाःशृंगारभावजाः॥ नियंताप्राजितायंतासूतःक्षत्ताचसारथिः॥ ३॥सादेवीसद्यःसपदितत्क्षणेएवाशुगैर्बाणैःधनुःकोदंडंचचिच्छेदअच्छिनत् ॥

अतिसमुच्छ्रितमत्युच्चतरंध्वजंचकेतुंबाणैश्चिच्छेद ॥ छिन्नंधन्वधनुर्यस्यसतथोक्तःतांछिन्नधन्वानंचिक्षुरंमहासुरंगात्रेषुसर्वावयवेषुआशुगैर्विव्याधताडयामास ॥ व्यधताडनेलिटचभ्यासस्योभयेषामितिसंप्रसारणम् ॥ आशुगौवायुविशिखौ ॥ धनुर्धर्चादित्वान्नपुंसकेपि ॥ अन्यथाधनुश्चापौधन्वशरासनकोदण्डकार्मुकमित्यभिधानात् ॥ ४ ॥ सचिक्षुराख्योसुरःदेव्याछिन्नंधन्वधनुर्यस्य विच्छिन्नोरथोयस्यविरथः ॥ हताअश्वायस्यसः हतःसारथिर्यस्यसः ईदृगवस्थःखड्गचर्मधरःसंस्तांदेवींहंतुमभ्यधावतउपाद्रवत् ॥ सृगतौ सर्तेःवेगितायांगतौधावादेशोवक्तव्यः ॥ यद्येवंसर्त्तेःपरस्मैपदित्वादात्मनेपदंनस्यात ॥ स्यात्कर्तरिकर्मव्यतिहारइति । नस्यात् । नगतिहिंसार्थेभ्यइतिनिषेधात् ॥ अतश्चाभ्यधावत्तोदेवीमित्यपाठिषुः ॥ यद्वा ॥ धावुगतिशुद्ध्योरित्येतस्यस्वरितेत्वात्पाक्षिकस्यात्मनेपदमिति अस्त्वभ्यधावततांदेवीमित्यपिपाठपाटवंपठितॄणां फलकोस्त्रीफलं चर्म ॥ गात्रत्राणंचर्ममयत्वाच्चर्म ॥ धृञ्धारणे धरतेधरः ॥ खड्गश्चचर्मच सेनांगत्वादेकवद्भावः ॥ खड्गचर्मणोधरःखड्गचर्मधरः ॥ अन्यथाकर्मण्यणस्यात् ॥ ५ ॥ अतितरांवेगवानमचिक्षुरःसेनानीरसुरः तीक्ष्णातिग्माधारायस्यतेनखड्गेनमण्डलाग्रेणसिंहमूर्धनिआहत्यप्रहृत्यदेवीमपिसव्येवामेभुजेआजघानप्रजहार ॥ अकमकत्वात्परांग

सच्छिन्नधन्वाविरथोहताश्वोहतसारथिः ॥ अभ्यधावततांदेवींखड्गचर्मधरोसुरः ॥ ५ ॥ सिंहमाहत्यखड्गेनतीक्ष्णधारेणमूर्धनि ॥ आजघानभुजे सव्येदेवीमप्यतिवेगवान् ॥ ६ ॥ तस्याःखड्गोभुजंप्राप्यपफालनृपनंदन ॥ ततोजग्राहशूलंसकोपादरुणलोचनः ॥ ७ ॥ चिक्षेपचततस्तत्तुभद्रकाल्यांमहासुरः ॥ जाज्वल्यमानतेजोभीरविबिंबमिवांबरात् ॥ ८ ॥ दृष्ट्वातदापतच्छूलंदेवीशूलममुंचत ॥ तेनतच्छतधानीतंशूलंसचमहासुरः ॥ ९ ॥

कर्मकत्वाच्चाङोयमहनइत्यात्मनेपदाप्राप्तिः ॥ वामंशरीरेसव्यंस्यादपसव्यंतुदक्षिणे ॥ ६ ॥ हेनृपनंदनसुरथनिशामय ॥ तस्यादेव्यावामंभुजंप्राप्यचिक्षुराख्यमहासुरप्रयुक्तःखड्गःमण्डलाग्रःपफाल ॥ त्रिफलाविशरणेविशशार चूर्णीबभूव ॥ ततःखड्गभंगानंतरंकोपादरुणलोचनःरक्तलोचनःचिक्षुरःशूलंत्रिशूलमायुधंजग्राहअग्रहीत ॥ अस्त्रीशूलंरुगायुधम् ॥ ७ ॥ ततस्तुत्रिशूलग्रहानंतरंचिक्षुरोमहासुरःतत्प्राग्गृहीतंत्रिशूलंतमायुधंभद्रकाल्यांदेव्यांविषयेचिक्षेपअक्षैप्सीत् कीदृशंशूलम् अम्बरादाकाशात् अम्बरमाक्रम्यतेजोभीरविबिंबमिव जाज्वल्यमानंदेदीप्यमानमित्यर्थः ॥ अम्बरादितिकर्मणिल्यब्लोपेपंचमी । तेजोभीरविबिंबमित्यत्ररोरीतिरेफलोपेढ्रलोपेपूर्वस्यदीर्घोणः तेजोभिरविबिंबमित्यदीर्घपाठेअवेःसूर्यस्यबिंबमिवेत्यर्थः ॥ अवयःशैलमेषार्काइत्यभिधानात् ॥ अम्बरमततिअम्बरात् इतिप्रथमांतत्वेतुरविबिंबविशेषणंद्रष्टव्यम् ॥ भद्राचसाकालस्यकालाग्निरुद्रस्यस्त्रीकाली ॥ यद्वाकालीचण्डिका ॥ ८ ॥ तच्चिक्षुरप्रयुक्तमापतत्तदागच्छत्शूलंकर्मदृष्ट्वादेवीस्वकीयं शूलममुंचतप्रयुक्तवती तेनदेवीप्रयुक्तेनशूलेनतच्चिक्षुरप्रयुक्तशूलंशतधा शतप्रकारैःचूर्णतांनी

तंप्रापितम्॥नकेवलंत्रिशूलमेवअपितुचिक्षुरमहासुरश्चचूर्णतांनीतइत्यर्थः॥अमुंचतमुच्लृमोक्षणेस्वरितेत्‌ ॥९॥ महिषासुरस्यचमूपतौसेनापतौतस्मिन्‌चिक्षुराख्येमहावीर्ये,देव्या
हतेसतिचामरोनामत्रिदशार्दनःअमरहिंसकःमहासुरःगजारूढःसन्देव्यासहसंग्रामयितुमाजगामागतवान्‌ ॥ वीर्यंबलंप्रभावश्चमहद्यस्य। अर्द्दयतिहिनस्तिअर्दनःत्रिदशानामर्दनः
॥१०॥ अथसचामरनामापिमहादैत्यःदेव्याःप्रतिघातनायशक्तिमायुधविशेषंमुमोच।अथांबिकादेवीद्रुतंशीघ्रंसत्वरंहुंकाराभिहतामतएवनिःष्प्रभांतांचामरमहादैत्यप्रयुक्तांशक्तिं
भूमौपातयामास ॥११॥ चामराख्योमहासुरःआत्मीयांशक्तिमायुधंदेव्याभूमौनिपतितांप्रभ्रष्टांचदृष्ट्वाक्रोधसमन्वितः अप्रतिहतशक्तिः अयमदीयाहताईदृगकस्थमास्त्वादिति
क्रोधोर्मिमूर्छितःसन्देवींप्रतित्रिशूलंचिक्षेपमुमोच ॥ तदपिशूलंसादेवीअच्छिनतबाणैःकृत्वा ॥ छिदिर्द्वैधीकरणे। भूतानद्यतनेलङ्लिड्विषयेपिक्वचिदस्ति ॥ पुराकल्प
एतदासीदितिभाष्यकारप्रयोगादित्याहुः ॥ १२ ॥ ततोदेव्याचामरीयेशूलाग्रेचूर्णितेसत्यनंतरम्‌ ॥ सिंहःउच्चैःसमुत्पत्यगजस्यकुंभयोरंतरेमध्येविषयेस्थितःसन्‌तेनत्रिदशारि

हतेतस्मिन्महावीर्येमहिषस्यचमूपतौ ॥ आजगामगजारूढश्चामरस्त्रिदशार्दनः ॥ १० ॥ सोपिशक्तिंमुमोचाथदेव्यास्तामम्बिकाद्रुतम्‌ ॥ हुंका
राभिहतांभूमौपातयामासनिष्प्रभाम्‌ ॥ ११ ॥ भग्नांशक्तिंनिपतितांदृष्ट्वाक्रोधसमन्वितः ॥ चिक्षेपचामरःशूलंबाणैस्तदपिसाच्छिनत्‌ ॥ १२ ॥
ततः सिंहःसमुत्पत्यगजकुंभांतरेस्थितः ॥ बाहुयुद्धेनयुयुधेतेनोच्चैस्त्रिदशारिणा ॥ १३ ॥ युध्यमानौततस्तौतुतस्मान्नागान्महींगतौ ॥ युयुधाते
तिसंरब्धौप्रहारैरतिदारुणैः ॥ १४ ॥ ततोवेगात्खमुत्पत्यनिपत्यचमृगारिणा ॥ करप्रहारेणशिरश्चामरस्यपृथक्कृतम्‌ ॥ १५ ॥ उदग्रश्चरणेदेव्या
शिलावृक्षादिभिर्हतः ॥ दंतमुष्टितलैश्चैवकरालश्चनिपातितः ॥ १६ ॥

णासुरद्विषाचामरेणदैत्येनसममुच्चैरतितरांबाहुभ्यांप्रवर्तितेनयुद्धेनबाहुयुद्धेनयुयुधेसंप्रजह्रे ॥ युध्यतेरनुदात्तेत्वादात्मनेपदम्‌॥ कुंभौतुपिंडौशिरसःतयोर्मध्येविदुःपुमान्‌ ॥१३॥
ततोबाहुयुद्धवृत्तितस्तुपुनर्युध्यमानौतौसिंहचामरौतस्मान्नागाद्गजात्सकाशात्महींभूमिंगतौसंतावतिदारुणैर्भयंकरैःप्रहारैरतिसंरब्धौअतितरांक्रोधाविष्टौयुयुधाते ॥ संरब्धैरभिः
क्रोधार्थः युयुधातेअतिसंरब्धौइतिच्छेदः मणीवादित्वात्प्रगृह्यत्वाभावात्प्रकृतिभावाभावादेङःपदांतादितिपूर्वरूपत्वमेव ॥. अथवाशिष्टप्रयोगतःसंज्ञापूर्वकोविधिरनित्यःओर्गु
णादित्यतः स्वायंभुवप्रयोगवत्‌ ॥१४॥ ततोयुद्धरसावेशतोवेगाज्जगज्जयरयात्खमंतारिक्षमुत्पत्यउत्प्लुत्यचपुनर्वेगान्निपत्यचमृगारिणासिंहेनचामरनाम्नोमहासुरस्यशिरोमस्तकं
करप्रहारेण करकृतःप्रहारःताडनंतेनपृथक्कृतंदूरीकृतंछिन्नम्‌ । प्रहारजवयोर्वेगोविण्मूत्रातिप्रवर्त्तने ॥ १५ ॥ रणेदेव्याशिलादिभिःपाषाणैर्वृक्षैस्तरुभिः आदि

शब्दाद्धनुरादायुधैश्चउदग्राख्यमहासुरःहतः॥ करालोनाममहासुरःचशब्दात्ससैन्यःदंतमुष्टितलैःदंतमुष्टिभिःतलैःप्रतलैः चशब्दात् खड्गादैरायुधैः सिंहेनगणैःदेव्याचनिपातितः
न्यघातिव्यमूकृतः॥ पाणौचपेटप्रतलप्रहस्ताविस्तृतांगुलौ।दंतैःसहितामुष्टयःदंतमुष्टिभिःसहिताःतलाःतैःद्वंद्वेतुप्राण्यंगत्वादेकवद्भावः स्यात् ॥ दंतोगजदंतःतेनानिर्मितोमुष्टिःदन्त
मुष्टिःतस्यतलैर्भागदेशैःछुरिकाधाराविशेषैश्चनिपातितइत्यपिव्याख्यानम्॥केचिद्दत्तमुष्टितलैरीरितिक्रांतंपठंति॥दत्तमुष्टितलैर्यैर्गुणैःतेदत्तमुष्टितलाःतैर्निपातितइत्यपिव्याख्येयम्
॥ १६ ॥ रणेक्रुद्धादेवीउद्धतंनाममहासुरंचशब्दात् सैन्यंगदापातैश्चूर्णयामाससंपिपेष॥परासुमकार्षीत् ॥ त्रिनेत्रापरमेश्वरीचण्डिकादेवीरणेक्रुद्धासतीभिंदिपालेनहस्तक्षेप्ये
णलगुडेनबाष्कलंनाममहासुरंजघान ॥ भिंदिपालःसृगस्तुल्यौ ॥ तथापरमेश्वरीबाणैःताम्रन्नाममहासुरंजघान ॥ तथापरमेश्वरीबाणैरेवअंधकंनाममहासुरंजघान ॥ तथा
परमेश्वरी बाणैरेवउग्रमास्यंयस्यतमुग्रास्यंनाममहासुरंजघान ॥ तथापरमेश्वरीबाणैरेवउग्रंवीर्यंयस्यतमुग्रवीर्यंनाममहासुरंचजघान ॥ तथैवपरमेश्वरीबाणैरेवमहांतौहनूक

देवीक्रुद्धागदापातैश्चूर्णयामासचोद्धतम् ॥ बाष्कलंभिन्दिपालेनबाणैस्ताम्रंतथांधकम् ॥ १७ ॥ उग्रास्यमुग्रवीर्यंचतथैवचमहाहनुम् ॥ त्रिनेत्रा
चत्रिशूलेनजघानपरमेश्वरी ॥ १८ ॥ बिडालस्यासिनाकायात्पातयामासवैशिरः ॥ दुर्धरंदुर्मुखंचोभौशरैर्निन्येयमक्षयम् ॥ कालंचकालदंडेन
कालरात्रिरपातयत् ॥ ॥ १९ ॥ "उग्रदर्शनमत्युग्रैःखड्गपातैरताडयत् ॥ असिनैवासिलोमानमच्छिदत्सारणोत्सवे ॥ गणैःसिंहेनदेव्याचजय
क्ष्वेडाकृतोत्सवैः"॥ २० ॥ एवंसंक्षीयमाणेतुस्वसैन्येमहिषासुरः ॥ माहिषेणस्वरूपेणत्रासयामासतान्गणान् ॥ २१ ॥

पोलाधोभागौयस्यतंमहाहनुंनाममहासुरंजघान ॥ त्रिनेत्रंचेतितुपाठेत्रीणिनेत्राणियस्यतंत्रिनेत्रंमहासुरंत्रिशूलेन चशब्दात्ससैन्यम् ॥ परमाईश्वरीअश्नोतेरशुकर्मणि
वरट्चेद्वोपधायाः । यद्वापरमेश्वरस्यस्त्रीपरमेश्वरी ॥ १७ ॥ एकार्थवाचकौ ॥ १८ ॥ रणेदेवीअसिनाखड्गेनबिडालस्यमहासुरस्यशिरोमूर्द्धानंकायाच्छरी
रात् वैप्रख्यातितः पातयामास ॥ रणेदेवीशरैःदुर्धरंनामदुर्मुखंचोभौनाममहासुरौ कर्म यमक्षयंयमगृहंद्वितीयंकर्म निन्येप्रापयामास ॥ नयतिर्द्विकर्मकः ॥ क्षयोयक्ष्मणिक
ल्पांतेनिलयेपचयेपिच ॥ कालंचकालदंडेनकालरात्रिरपातयत ॥ कालंनाममहासुरंकालरात्रिरंबिकाकालदण्डेनापातयत् प्राभ्रंशयत् ॥ १९ ॥ उग्रदर्शनंनाममहासुर
मत्युग्रैःखड्गपातैः अताडयत् ॥ तडआघातेचुरादिः ॥ असिनैवअसिलोमानंमहासुरमच्छिदत् अच्छैत्सीत् ॥ गणैः सिंहेनदेव्याचजयक्ष्वेडाकृतोत्सवैः ॥ गणादिभिःउत्सवै
रणोत्सवैःजयसंबंधिनिक्ष्वेडाकृताजयसिंहनादःकृतइत्यर्थः ॥ क्ष्वेडातुसिंहनादःस्यात्॥ कालंचेत्यादिश्लोकद्वयं केचित्पठंतिकेचित्तुन ॥ २० ॥ [illegible]भंग्यास्वसैन्ये

स्वयंसंक्षीयमाणेसतिमहिषासुरस्तुतदसहमानःसन्माहिषेणमहिषसंबंधिनामहिषाकारेणस्वरूपेणतान्देवीगणान्त्रासयामासउद्वेजयामास ॥संक्षीयमाणइतिक्षिक्षयेभ्वादिरकर्मकः
परस्मैपदीइतितुप्रयोगतोंतर्भावितण्यर्थविवक्षायांनःभुक्तंक्षीयतेकर्मक्षीयंतेचास्यकर्माणीतिवत्सकर्मकत्वेसतिकर्मकर्त्तरिलटः शानचिकर्मवत्कर्मणातुल्यक्रियइतियक्यात्मनेपदेऽ
कृत्सार्वधातुकयोर्दीर्घेरूपम् ॥ २१ ॥ महिषासुरःतुंडप्रहारेणतुंडेनवक्त्रेणजनिताघातेनकांश्चिद्गणान्देवीरोषजनितान्पुरुषान्रणशूरान्भूतलेपातयामास ॥ तथाखुरक्षेपैर
परान्भूमौपातयामास॥शफंक्लीबेखुरःपुमान्॥सतथान्याँल्लांगूलताडितान्गणान्भूमौपातयामास ॥ पुच्छोस्त्रीलूमलांगूले॥ सतथान्यांश्चशृंगाभ्यांविदारितान्गणान्भूमौपातयामास
दारितेभिन्नभेदितौ ॥ सतथावेगेनजवेनकांश्चिदपरान्भूमौपातयामास ॥ सतथामहिषः नादेनध्वनिनाकंठगर्जितेनापरान्व्याकुलचित्तान्भूमौपातयामास ॥ अपरान्भ्रमणेनप
रितोभ्रतःपार्श्वतश्चभूतलेपातयामास ॥ महिषः अन्यान्निश्वासपवनेननिश्वासएवपवनोवायुःतेनभूतलेपातयामास ॥ २२ ॥ २३ ॥ इत्थंसमहिषासुरोमहादेव्याःअंबिका

कांश्चित्तुंडप्रहारेणखुरक्षेपैस्तथापरान्॥ लांगूलताडितांश्चान्याञ्छृंगाभ्यांचविदारितान्॥२२॥ वेगेनकांश्चिदपरान्नादेनभ्रमणेनच॥ निश्वासपवने
नान्यान्पातयामासभूतले॥२३॥ निपात्यप्रमथानीकमभ्यधावतसोसुरः॥सिंहंहंतुंमहादेव्याः कोपंचक्रेततोंबिका॥२४॥ सोपिकोपान्महावीर्यः खु
रक्षुण्णमहीतलः॥शृंगाभ्यांपर्वतानुच्चैश्चिक्षेपचननादच॥२५॥वेगभ्रमणविक्षुण्णामहीतस्यव्यशीर्यत॥ लांगूलेनाहतश्चाब्धिः प्लावयामाससर्वतः॥२६

याः प्रमथानांपार्षदानामनीकानिसैन्यानिप्रमथगणान्निपात्यभूमौनितरांपातयित्वातस्याःसिंहंहंतुमभ्यधावतआभिमुख्येनाधावत आद्रवत । धावुगतिशुद्ध्योःस्वरितेत्त्वादात्म
नेपदम् ॥ वरूथिनीबलंसैन्यंचक्रंचानीकमस्त्रियाम् ॥ ततःप्रमथगणमथनतःसिंहंहंतुमागमनंतस्यततश्चमहिषेमहासुरेविषयेंबिकाचंडिकाकोपंचक्रे ॥ २४॥ महावीर्यःसमहि
षासुरःखुरक्षुण्णमहीतलःसन्योद्धुंक्रोधादग्रैकपादशफनिष्पिष्टकृताग्रक्षोणिभागःसन्नुच्चैरभ्रंलिहाभ्यांशृंगाभ्यामुच्चैरभ्रंलिहान्पर्वतान्उच्चैरभ्रंलिहमुकुटमूर्द्धनिदेव्याउच्चैश्चिक्षेप उच्चै
रक्षैप्सीत् ॥ अथचोच्चैर्ननाद॥णदअव्यक्तेशब्दे॥गलगर्जनंचोच्चैश्चकार॥महावीर्यःवीर्यसंपन्नःसत्त्ववान्महिषोतितरामितियावत् ॥ २५ ॥ तस्यमहिषासुरस्यवेगेनजवेनयुक्तं
भ्रमणंतेनविक्षुण्णाविशेषेणसंपिष्टामहीव्यशीर्यतस्वयमेवविशीर्णाभवत् ॥ शॄहिंसायांक्र्यादिःपरस्मैपदीविपूर्वोकर्मकः ॥ इहतुअंतर्भावितण्यर्थविवक्षायाम् ॥ विशीर्यतेमेघःस्व
यमेवविशीर्यतेहेतुःस्वयमेवेतिवत्कर्मकर्त्तरिलङ्रूपम् ॥ किंचतस्यमहिषस्यलांगूलेनपुच्छेनआहतःताडितोब्धिःअर्णवःसर्वतःसर्वत्रपृथिव्यांसकलजनान्प्लावयामास ॥ वारि

पूरमग्रंविश्वंचकार ॥ तसिप्रकरणेआद्यादिभ्यउपसंख्यानमित्यधिकरणेतसिः ॥ यद्वा ॥ कर्मणिल्यब्लोपेपंचमी ॥ सर्वतःसर्वांपृथ्वींप्लावयामास । २६ ॥ घनाअभ्रमहांतोमेघाःतेनमहिषासुरेणधुताभ्यांशृंगाभ्यांविभिन्नाःविदारिताःसंतःखंडखंडंशकलंशकलंययुः ॥ महिषेणधुतशृंगविदारिताःमहांतोमेघाःखंडप्रकाराःखंडसदृशाःसंतःययुरित्यर्थः ॥ प्रकारेगुणवचनस्येत्यधिकस्याल्पसादृश्येगुणवचनस्यद्विर्भावः ॥खंडखंडययुरितितुपाठेकर्मधारयवदुत्तरेष्वितिविकल्पेनकर्मधारयत्वातिदेशाद्द्विरुक्तयोर्भागयोर्मध्येपूर्वभागसंबंधिन्याविभक्तेर्लुक् ॥ श्वासानिलास्ताविशीर्णाःश्वासानिलास्ताःशतशःश्वासानिलाहताःशीर्णानिपेतुर्नभसोचलाः ॥ अत्रपाठत्रयेतस्यमहिषस्यरोषजाःश्वासाएव अनिलाःवायवः तैरस्ताःक्षिप्ताः अतएवविशीर्णाः चूर्णीभूताःअचलाःपर्वताःनभसःसकाशान्निपेतुःनिपतिताः ॥ यद्वा ॥ श्वासानिलास्ताःशतशःशतंशतंशतशः ॥ संख्यैकवचनाच्चवीप्सायांशस्प्रत्ययः ॥ यद्वा ॥ श्वासानिलैराहताःताडिताइत्यनुसंधेयम् ॥ शीर्णाःचूर्णीभूताः ॥ २७ ॥ इतिप्रागुक्तरीत्याक्रोधसमाध्मातक्रोधाग्निसंयुक्तंक्रोधेनसमंतादाविष्टंविजृंभितंतमभ्यापतंतंमहिषंमहासुरंदृष्ट्वावीक्ष्यतदातद्वधायतंमहिषंहंतुंचंडिकादेवीकोपमकरोत् ॥ वधहिंसार्थःइतिवधिःप्रकृत्यंतरंजानिवध्योश्चेतिवधिग्रहणादवसी

धुतशृंगविभिन्नाश्चखंडंखंडंययुर्घनाः ॥ श्वासानिलास्ताःशतशोनिपेतुर्नभसोऽचलाः ॥२७॥ इतिक्रोधसमाध्मातमापतंतंमहासुरम् ॥दृष्ट्वासाचंडिकाकोपंतद्वधायतदाकरोत् ॥२८॥ साक्षिप्त्वातस्यवैपाशंतंबबंधमहासुरम् ॥तत्याजमाहिषंरूपंसोपिबद्धोमहामृधे॥२९॥ततःसिंहोभवत्सद्यो यावत्तस्यांबिकाशिरः ॥ छिनत्तितावत्पुरुषःखड्गपाणिरदृश्यत॥३०॥ ततएवाशुपुरुषंदेवीचिच्छेदसायकैः॥तंखड्गचर्मणासार्धंततःसोभून्महागजः॥३१॥

यते तद्वधायेतितस्यवधनंवधःतद्वधःभावेघञ् ॥ जनिवध्योश्चेत्यतउपधायावृद्ध्यभावः॥ क्रियार्थोपपदस्यचकर्मणिस्थानिनइतिचतुर्थी तद्वधंविधातुंकोपंक्रोधमकरोत् ॥ २८ ॥ म्रियंतेस्मिन्वीराःमृधंयुद्धंतत्रमहतिमृधेसादेवीतावत्तस्यमहिषासुरस्यवधाय वैप्रसिद्धंवरुणादवाप्तंपाशमायुधंक्षिप्त्वाप्रवर्त्यतंमहासुरंबबंध ॥ अथसपाशबंधमसहिष्णुःमाहिषंरूपंतत्याजअत्याक्षीत् ततोनुसंत्यक्तमाहिषाकारोमायावित्वादन्यएवपशुःशार्दूलःखड्गःपोत्रीवाप्रशस्तंप्रमथनेनक्षमगात्रोभूत् ॥ अथदेव्यापाशेनसोपिवाबद्धएवाभूत् ॥२९॥ततोमहिषादिरूपपरित्यागादनंतरंसमहासुरोमायावित्वात्सद्यःसपदिदेव्यासमंयोद्धुंसिंहोऽभवत्॥ततोंबिकादेवीतस्यमायामयसिंहस्यशिरःमूर्द्धानंयावद्यावताकालेनच्छिनत्तिछेत्स्यतितावत्तावत्येवकालेसमायावीमहासुरःखड्गपाणिःपुरुषःप्रादुर्भवन्नदृश्यतऐक्ष्यतदेव्येतिशेषः ॥ यावत्तावच्चसाकल्येवधौमानेवधारणे॥ खड्गःपाणौयस्यसतथोक्तःप्रहरणार्थेभ्यःपरेनिष्ठासप्तम्यौभवतइतिवक्तव्यम्॥ ३० ॥ततःखड्गपाणेःपुरुषस्यदर्शनानंतरमेवदेवीआशुसत्वरंसायकैःआशुगैःखड्गचर्मणासार्द्धंतंखड्गपाणिपुरुषंकंठेचिच्छेद॥खड्ग

चचर्मकचुरुषंचसायकैश्चिच्छेदेतिसूचयितुंसार्द्धमित्युक्तम् ॥खड्गश्चचर्मचखड्ग चर्मसेनांगत्वादेकवद्भावः ॥ तेनसार्द्धम् ॥ फलकोस्त्रीफलंचर्म ॥ चर्ममयंचर्मगात्रत्राणंहस्तग्राह्यंफलकम् ।। करेणचमहासिंहंतंचकर्षजगर्जच ॥ ततःपुरुषरूपतःसकाशात्समहासुरःमहागजोभूत् ॥३१॥ सचमहागजः करेणशुंडादंडेनतंप्रसिद्धंदेवीवाहनंसिंहंचकर्षआकृष्टवान् जगर्जचबृंहितंचचकार ॥ गर्जशब्दे भ्वादिःपरस्मैपदी ॥गजःसिंहंचकर्षेतिहिअसुरविनाशसूचकउत्पातोयंप्रसिद्धवैपरीत्यात् ॥३२॥ ततोदेवीतुपुनःसिंहंकर्षतःआक्षिपतःआहरतःतस्यमहागजस्यकरंशुंडादंडंखड्गेनचंद्रहासेननिरकृंततनिकृत्याच्छैत्सीत् ॥ कृतीछेदनेपरस्मैपदी ॥ यदाह्यधुः ॥ कृणत्तिकृंततीत्येतेवेष्टनेछेदनेक्रमादिति ॥ इहतुछांदसमात्मनेपदम् ॥ ऋषयश्छांदसंपदमनुकुर्वंति ॥अन्यथानिरकृंतदित्येवस्यात् ॥ कर्षतस्ततकरंदेवीतिपाठेकर्षतोगजस्यकरःप्रसिद्धः तत्करइतिव्याख्या ॥ इहसमहासुरः प्राङ्महाहवक्षमः महिषोभूत्ततोव्याघ्रःखड्गः पोत्रीहरिः पुमान् गजोथमहिषोभूयोमायावीसमहामृधे इत्येतदावेदयितुमाह ॥ ततोगजवपुस्त्यागानन्तरं भूयः पुनरपि समहासुरः माहिषंवपुराश्रितःप्राप्तवान्सन् तथैवपूर्ववदेवप्राग्वत्महिषःसन्तथैवत्रैलोक्यंक्षोभयामासक्षोभंप्रापयामास ॥ तथैवसचराचरंत्रैलोक्यंलोकत्रयंक्षोभयामास ॥ आश्रितइतिश्रिञ्सेवायाम् ॥

**करेणचमहासिंहंतंचकर्षजगर्जच ॥ कर्षतस्तुकरंदेवीखड्गेननिरकृंतत ॥ ३२ ॥ ततोमहासुरोभूयोमाहिषंवपुराश्रितः ॥ तथैवक्षोभयामासत्रैलोक्यं सचराचरम् ॥ ३३ ॥ ततः क्रुद्धाजगन्माताचंडिकापानमुत्तमम् ॥ पपौपुनःपुनश्चैवजहासारुणलोचना ॥ ३४॥**

प्रतिष्ठितप्रतिज्ञानार्थःसकर्मकः ॥ गत्यर्थाकर्मकश्लिषशीङ्स्थासेत्यादिनाकर्तरिक्तः ॥ वपुराश्रितःअंगीकृतवान्सन्त्रैलोक्यंक्षोभयामासेत्यर्थः ॥ आस्थितेत्यविसर्गपाठेतु आङःस्थःप्रतिज्ञानेइत्यात्मनेपदंकर्तरिलुङ्स्थाघ्वोरिच्चेत्यकारस्यइत्वंसिचःकित्त्वंच तेनगुणाभावः ॥ ह्रस्वादंगादितिसिचोलोपः ॥ सइतिच्छेदेतुमहासुरइत्यर्थः । चराश्चदेवाःअचराश्चपर्वतादयः चराचरं सर्वोद्वंद्वोविभाषैकवद्भवति ॥ चराचरात्मकंत्रैलोक्यंसमहासुरःक्षोभयामासेत्यर्थः ॥ यद्वा ॥ चराश्चाचराश्चचराचराःतैःसहितंत्रैलोक्यंसचराचरं संभवात्स्वरूपाख्यानतोविशेषणविशेष्यभावः॥ चारिर्गत्यर्थः ॥ चरिचलिपतिवदीनांवाद्वित्वमच्याक्चाभ्यासस्येतिपचाद्यचिद्विर्भावेभ्यासस्यचआगागमः ॥ आग्विधिसामर्थ्याद्धलादिशेषाभावः ॥ अन्यथाह्यागमादेशयोर्विशेषाभावादागमलिंगमपार्थकंस्यात् ॥ चरिष्णुजंगमचरंत्रसमिंगंचराचरम् ॥३३॥ ततस्त्रैलोक्यक्षोभणाज्जगन्मातांजगतां जननीजगद्धिताचण्डिकादेवीक्रुद्धासतीअतएवारुणलोचना अरुणेरक्तेलोचनेयस्याःसा उत्तममृतंपानंमधुपुनःपुनःपपौ ॥ पापानेकर्मणिल्युट् ॥ लीलयामध्वेवपपौ पुनःपुनश्चजहासैवयुद्धंतुनगणयामास ॥ हसेहसनेलिट्स्तिपोणल् ॥ पपावित्यातऔणलः ॥ वीरपानंचकारेत्यर्थः ॥ वीरपानंतुयत्पानंवृत्तेभाविनिवारणे ॥ वीराणांकर्त

एकैकवारतश्चण्डीपपावत्तरणोत्सवे ॥ ३४ ॥ बलेनसामर्थ्येनवीर्ये घटायुतायुतोन्मानंमधुमांसोपदंशकम् ॥ व्यंमद्यपानंवीरपानम् ॥ मुहुःपुनःपुनःशश्वदभीक्ष्णमसकृत्समाः ॥ चण्डिकांप्रतिभूधरान् गिरीन्विषाणाभ्यांशृं गप्रभावेणतेजसामदेनहर्षेणगर्वेणचोद्धतःअविनीतोनिर्मर्यादउत्कटःसमहिषासुरोपिननर्दचकण्ठगर्जनंचकार ॥ नर्दगर्दशब्दे ॥ साचण्डिकातेनमहिषासुरेणप्रहितान्क्षिप्तान् तान्भूधरा गाभ्यांचिक्षेपप्रक्षिप्तवान् । अविनीतःसमुद्धतः ॥ स्थैर्यंसामर्थ्यंसैन्येषुबलंनाकाकसीरिणोः वीर्यंबलंप्रभावश्च ॥३५॥ मदान्मधुपानजादुद्भवोमुखेरागःतेनाकुलान्यक्षरा न्गिरीन्शरोत्करैःशराणामुत्करैःउत्क्षेपैःचूर्णयंतीनिःशेषयंतीसतीतंमहिषासुरंमदोद्भूतमुखरागाकुलाक्षरंयथास्यात्उवाच ॥ णिवर्णायस्मिन्कर्मणिवचनेतन्मदोद्भूतमुखरागाकुलाक्षरंक्रियाविशेषणानांकर्मत्वंनपुंसकैकत्वंचवाच्यम् ॥ यद्वा ॥ मदोद्भूतमुखरागादेवीमदेनमधुपानजेनउद्भवोजातोमुखेरागः कषायभावोयस्याःसा आकुलाक्षरामितिक्रियाविशेषणम् ॥ आकुलानिव्यामिश्रितान्यस्पष्टाक्षराणियस्मिन्कर्मणितत् ॥ ३६ ॥ अत्रह्याकुलाक्षरमित्युक्त्वाद्गर्जगर्जइत्येवंप्र

ननर्दचासुरःसोपिबलवीर्यमदोद्धतः ॥ विषाणाभ्यांचचिक्षेपचंडिकांप्रतिभूधरान् ॥३५॥ साचतान्प्रहितांस्तेनचूर्णयंतीशरोत्करैः ॥ उवाचतंमदो द्भूतमुखरागाकुलाक्षरम् ॥ ३६ ॥ ॥ देव्युवाच ॥ ॥ गर्जगर्जक्षणंमूढमधुयावत्पिबाम्यहम् ॥ मयात्वयिहतेत्रैवगर्जिष्यंत्याशुदेवताः ॥ ३७ ॥ ऋषिरुवाच ॥ एवमुक्त्वासमुत्पत्यसारूढातंमहासुरम् ॥ पादेनाक्रम्यकंठेचशूलेनैनमताडयत् ॥३८॥ ततःसोपिपदाक्रांतस्तयानिजमुखात्ततः ॥ अर्द्धनिष्क्रांतएवासीद्देव्यावीर्येणसंवृतः ॥ ३९ ॥

हेमूढहेअज्ञत्वंक्षणंतावद्गर्जगर्जयावदहंमधुपिबामि ॥ यावताक्षणेनमधुपास्यामितावंतंक्षणंत्वमपिकण्ठग तिपदंव्यत्यस्ताक्षरंदेव्योक्तम् ॥ ऋषिणातुवत्सत्कृत्यार्थसंगत्याप्रणीतम् मयात्वयिहतेव्यसूक्तेसतिअत्रैवसंग्राममूमावेवअत्रैवअस्मिन्नेवक्षणेवाआशुअविलंबितंदेवताइन्द्रादयोदेवागर्जिष्यंत्यानन्द तो र्जनंकुरुकुरु ॥ तावदेवतवायुःततःक्षणांतरे गास्यंति ॥ गृजिशब्देलट् पिबामीतिपानाग्रेभविष्यतिकालेयावत्पुरानिपातयोर्लडितिलट् ॥ अत्रेमूढयथाजातमूर्खवैधेयबालिशाः ॥ ३७ ॥ सदेवीएवमुक्त्वासमुत्पत्य सम्यक्उत्पत्यतंमहिषासुरमारूढाआरूढवती एनंमहिषासुरंकण्ठेचकण्ठप्रदेशएवएकेनपादेनउचितेनाक्रम्यशूलेनाताडयत् ॥ तदआघातेचुरादिःआरूढा इहतुगत्यर्थाकर्म केत्यादिनाकर्त्तरिक्तः ॥ एनमित्यन्वादेशेरूपमिदमेतदोन्यतरस्याम् ॥ ३८ ॥ ततोनंतरंसमहिषासुरःतयादेव्यापदापादेनआक्रांतःसशूलेनताडितोपितस्मान्निजमुखादा त्मीयमुखात्सकाशादर्द्धनिष्क्रांतएवअर्द्धेनशरीरेणनिर्गतःदेव्यावीर्येणबलेनसामर्थ्येनसंवृतः संछादितःस्तंभितःआसीत्तथैवास ॥ नसंपूर्णोनिष्क्रांतःअर्धनिष्क्रान्तःअर्धेनवा

निष्क्रांतः अर्धनिष्क्रांतः॥ ३९॥ असौमहासुरोमहिषवक्त्रादर्द्धनिष्क्रांतःशरीरार्द्धेननिर्गतःयुध्यमानःयुद्धंकुर्वाणएवतयादेव्याभगवत्यामहासिनामण्डल [illegible] तस्यासुरस्य
उत्तमांगंछित्त्वाभूमौनिपातितः ॥ शरीरस्यार्द्धःनिष्क्रांतःविशेषणसमासः ॥ अर्द्धेनवानिष्क्रांतःकर्तृकरणेकृताबहुलमितिसमासः ॥ नबहुव्रीहिः ॥ अर्द्धोनिष्क्रांतोदेहभा
गोयस्येतिविग्रहप्रसंगात् ॥ ४० ॥ एवमुक्तरीत्यामहिषोनामप्रसिद्धःसमहासुरःसैन्यसहितः सुहृद्गणसहितः त्रैलोक्यंत्रींल्लोकान्मोहयित्वामोहंदुःखंप्रापय्यततोयुद्धंकुर्वाणः
तयादेव्यानाशंप्रापितः ॥ महाकाल्यानिपातितइतिपाठेमहान्कालःउग्रःतत्पत्नीमहतीकालीदुर्गातयावा ॥ ४१ ॥ तदातस्मिन्समयेदेव्यामहिषेमहासुरेविनिपातितेसतित्रै
लोक्यस्थैःसर्वैःपुरुषैःदेवींप्रतिजयलोकोत्कर्षेणवर्तस्वेत्युक्तम् ॥ कीदृशैःदेवाःस्वर्लोकसमानःइन्द्रादयःअसुराःपातालवासिनोबलिप्रभृतयःमानवाभूलोकसमानोब्राह्मणादयः
तैःसहितैः ॥ पुनःकीदृशैःतदाभूतैःतस्मान्महिषासुरादाभूताःपीडांप्राप्तवंतःतैः ॥ आभूःस्यात्कोपपीडयोः ॥ भूप्राप्तावात्मनेपदीचुरादिः ॥ आधृषाद्वेतिणिजभावपक्षेकर्त्तरि

अर्द्धनिष्क्रांतएवासौयुध्यमानोमहासुरः॥ तयामहासिनादेव्याशिरश्छित्त्वानिपातितः ॥ ४० ॥ एवंसमहिषोनामससैन्यःससुहृद्गणः ॥ त्रैलो
क्यंमोहयित्वातुतयादेव्याविनाशितः॥ ४१॥त्रैलोक्यस्थैस्तदाभूतैर्महिषेविनिपातिते ॥ जयेत्युक्तं ततः सर्वैः सदेवासुरमानवैः ॥ ४२ ॥ ततोहाहा
कृतंसर्वंदैत्यसैन्यंननाशयत् ॥ प्रहर्षंचपरंजग्मुः सकलादेवतागणाः ॥ ४३ ॥ तुष्टुवुस्तांसुरादेवींसहदिव्यैर्महर्षिभिः ॥ जगुर्गंधर्वपतयोननृतुश्चा
प्सरोगणाः ॥ ४४ ॥ इति श्रीमार्कं०दे० महिषासुरवधोनामाशीतितमोऽध्यायः ॥८०॥ ऋषिरुवाच ॥ ॥ ततःसुरगणाःसर्वे देव्याइंद्रपुरोगमाः ॥
स्तुतिमारेभिरेकर्तुंनिहतेमहिषासुरे ॥ १ ॥

केरूपम् ॥ योगविभागात्ममामः ॥ इत्थंभूतेतिनिर्देशाद्वा ॥ ४२ ॥ ततोमहिषमर्द्दनादनंतरंयत्किंचिद्दैत्यसैन्यमवशिष्टंस्वल्पंतदपिहाहाकृतंहाहाइतिससंभ्रमंदीनभावेनकृत
माहितंसतन्ननाश ॥ णशअदर्शने ॥ अदर्शनमभावः ॥ अदृष्टमभूत् ॥ किंचदेवतानांगणास्तुसकलाःसर्वेपिपरमुत्कृष्टंप्रहर्षंसंतोषंजग्मुश्चप्राप्तवन्तः ॥ हा विषादशुगार्तिषु ॥
चापलेद्वेभवतइतिवक्तव्यम् ॥ संभ्रमेणप्रवृत्तिश्चापलम् ॥ हाहाइतिसंभ्रमप्रवृत्यादीनत्वेनकृतमनाथंननाश दैत्यसैन्यमित्यर्थः॥ ४३॥ अथ तांदेवींसुराःइन्द्रादयःदिविभवैर्दि
व्यमहर्षिभिःसहससहितास्तुष्टुवुस्तुतवन्तः ॥ सुराश्चदिव्यामहर्षयश्चदेवींस्तुतवन्तइत्यर्थः ॥ अथगन्धर्वपतयश्चजगुःहाहाहूहूप्रभृतयोगन्धर्वाःगायमानाःतेषांपतयोगानविच
क्षणाःतुम्बुरुप्रभृतयःगीतवंतः ॥ गैशब्देलिट् ॥ अथअप्सरोगणाश्चननृतुःउर्वशीप्रभृतयःस्वर्गवारांगनाःतासांगणाःनर्तितवंतोदेवीविजयेमहोत्सवे ॥ नृतीगात्रविक्षेपेनाट्येलिट्
उस ॥ ४४ ॥ इतिम० श्रीतो० श्रीमदुद्ध० श्रीशंतनुचक्रवर्तिविरचितायांदेवीमाहात्म्यटीकायांमहिषासुरवधोनामाशीतितमोऽध्यायः ॥८०॥ ॥ महिषासुरेनिहतेसतितदा

नन्तरमिन्द्रपुरोगमाःशक्रप्रमुखाःसर्वेपिसुरगणाःस्तुतिंकर्तुमारेभिरेउपक्रांतवंतः ॥ रभगभस्ये ॥ आत्मनेपदेलिट् ॥ पुरोगच्छतीति पुरोगमः इन्द्रःपुरोगमःअग्रेसरो येषां ते ॥ १ ॥ रणे देव्याचंडिकया तस्मिन्नतिवीर्येसुरारिबलेमहिषासुरसैन्येचअतिवीर्यदुरात्मनिमहिषासुरेचहतेसति प्रणतिनम्रशिरोधरांसाः प्रहर्षपुलकोद्गमचारुदेहाःशक्रादयःसुरगणाः तांदेवींवाग्भिःतुष्टुवुःस्तुतवंतः ॥ वीर्यबलंप्रभावश्च ॥ प्रणतिभिर्नम्राःशिरोधराः कंधराग्रीवाअंसाःस्कंधाभुजशिरांसिच येषांते धरंतीतिधराः शिरसांधराःशिरोधराः प्रहर्षेप्रमोदे पुलकाःरोमांचाःतेषामुद्गमःप्रादुर्भावःतेनचारवोमनोहरादेहायेषांते ॥ वाग्भिरितिचतुर्विधाभिर्वाणीभिः ॥ यद्भाष्यं–चतुष्टयी शब्दानां प्रवृत्तिः–जातिशब्दाः गुणशब्दाः क्रियाशब्दा यदृच्छाशब्दाश्चतुर्थाइति ॥ अन्ये त्वाहुः ॥ द्रव्यंगुणांक्रियांजातिमाहुःशब्दाश्चतुर्विधाः । यदृच्छयाप्रयुक्ताःस्युः संज्ञाशब्दाश्चपंचमाः इति ॥ अपरे त्वाहुः ॥ वैखरी शब्दनिष्पत्तिर्मध्यमा श्रुतिगोचरा ॥ द्योतितार्थाचपश्यंती सूक्ष्माचा

शक्रादयःसुरगणानिहतेतिवीर्येतस्मिन्दुरात्मनिसुरारिबलेचदेव्या ॥ तांतुष्टुवुःप्रणतिनम्रशिरोधरांसावाग्भिःप्रहर्षपुलकोद्गमचारुदेहाः ॥ २ ॥ ॥ देवाऊचुः॥ देव्यायया ततमिदंजगदात्मशक्त्यानिःशेषदेवगणशक्तिसमूहमूर्त्या॥ तामंबिकामखिलदेवमहर्षिपूज्यांभक्त्यानताःस्मविदधातुशुभानिसानः ॥ ३ ॥ यस्याःप्रभावमतुलंभगवाननंतोब्रह्माहरश्चनहिवक्तुमलंबलंच ॥ साचंडिकाखिलजगत्परिपालनायनाशायचाशुभभयस्यमतिंकरोतु ॥ ४ ॥ या श्रीःस्वयंसुकृतिनांभवनेष्वलक्ष्मीःपापात्मनांकृतधियांहृदयेषुबुद्धिः ॥ श्रद्धासतांकुलजनप्रभवस्यलज्जातांत्वानताःस्मपरिपालयदेविविश्वम् ॥ ५ ॥

प्यनपायिनीचेतिचतुर्विधावागुच्यते ॥ शब्दानांनिष्पत्तिर्यस्याःसा घटाद्यर्थरूपावाक्वैखरीत्युच्यते ॥ श्रुतिगोचराश्रोत्रग्राह्यावाक्मध्यमेत्युच्यते ॥ द्योतितोर्थोययासाद्योतितार्थाज्ञानरूपावाक्पश्यंतीत्युच्यते ॥ अनपायिनीब्रह्मरूपावाक्सूक्ष्मेत्युच्यते ॥ २ ॥ ययादेव्याआत्मशक्त्यास्वशक्त्याइदंजगत् प्रपंचिततामखिलदेवमहर्षिपूज्यामम्बिकांदेवींभक्त्याआनताःस्मः॥सानोस्माकंशुभानिविदधातुकरोतु ॥ तुहिचस्महवैपादपूरणे ॥ निःशेषाःसर्वेदेवाःतेषांगणाःतेषांशक्तयःतासांसमूहाःतएवमूर्तयोयस्याःसा ॥ अखिलाःसर्वेदेवाःमहर्षयश्चतैस्तैःपूज्यांपूजनीयामानतावयंभक्तिश्रद्धाः ॥ ३ ॥ यस्याःदेव्याअतुलमनुपमंप्रभावबलवक्तुंसाकल्येनवर्णयितुंब्रह्माचतुर्मुखः भगवानैश्वर्यसम्पन्नःअनंतोविष्णुः हरश्चनालंनहिसमर्थः हिप्रसिद्धमेवतत् ॥ साचण्डिकादेवीअखिलजगत्परिपालनायअशुभभयस्यनाशायमतिंकरोतु ॥ अखिलंजगत्परिपालयितुमशुभेभ्योभयंनाशयितुंचस्वयंस्वांतंसदाऽवधानंकरोतु ॥ प्रभावःप्रभुत्वम् ॥ स्थौल्यसामर्थ्यसैन्येषुबलम् ॥ अशुभभयस्येतिपाठेभवउदयः ॥ ४ ॥ हेदेवि सुकृ[illegible]पुण्यवतांभवनेषुगेहे

षुयाश्रीःसंपत्तिरभूदस्भिभविष्यतिस्वयंतांत्वानताःप्रणतावयंस्म ॥ अतःत्वंसुकृत्यात्मकंविश्वंश्रीःसतीपरिपालय ॥ हेदेविपापात्मनांभवनेषुयाऽ[illegible]भूदस्तिभविष्यति
स्वयंतांत्वानताःप्रणताःवयम् ॥ अतस्त्वंपापात्मकंविश्वमलक्ष्मीःसतीपरिपालय ॥ हेदेविकृतधियांज्ञानिनांहृदयेषुयाबुद्धिःअभूदस्तिभविष्यतिस्वयंतांत्वांनताःप्रणतावयमतस्त्वं
कृतध्यात्मकंविश्वंबुद्धिःसतीपरिपालय ॥ हेदेविसतांसज्जनानांहृदयेषुयाश्रद्धासत्कर्मनिष्ठाऽभूदस्तिभविष्यतिस्वयंतांत्वांनतावयम्।अतःत्वंसदात्मकंविश्वंश्रद्धासतीपरिपालयहेदे
वित्वंकुलजनप्रभवस्यहृदयेयालज्जाभूदस्तिभविष्यातितांत्वांनतावयम् ॥ अतःत्वंसत्कुलाचारसंरक्षणंलज्जालज्जासतीसत्कुलजनप्रभवात्मकंविश्वंपरिपालय ॥ स्मशब्दःपाद
पूरणेम्वयमव्ययम्।सुष्ठुअयःशुभावहोविधिर्यस्मिन्कर्मणिनमनेपरिपालनेवसतत् ॥ ५ ॥ असुराश्चदेवाश्चअसुरदेवाःशाश्वतिकविरोधविविक्षायांत्वसुरदेवंतेषांगणाआदयोये
षांतेमनुष्यादीनांतेतथोक्ताः । तेषुअजाग्रदंतमित्यसुरशब्दस्यपूर्वप्रयोगः ॥ अजाग्रदंतत्वादभ्यर्हितत्वाच्च।अमरदैत्यगणादिकेष्वितितुपाठः साध्यः । हेदेवि सर्वेष्वसुरादिगणेषु
तवाद्भुतंरूपममचिंत्यंमनसापिचिंतयितुंस्मर्तुमप्यशक्यंतंत्तवमनोहरंरूपंवाचाकिंवर्णयाम ॥ वर्णवर्णक्रियायांचुरादिलोडंतम् ॥ यन्मनसापिस्मर्तुमशक्यंतद्वाचाकिंवर्णयितुंशक्यं

किंवर्णयामतवरूपमचिंत्यमेतत्किंचातिवीर्यमसुरक्षयकारिभूरि ॥ किंचाहवेषुचरितानितवाद्भुतानिसर्वेषुदेव्यसुरदेवगणादिकेषु ॥ ६ ॥ हेतुःसमस्त
जगतांत्रिगुणापिदोषैर्नज्ञायसेहरिहरादिभिरप्यपारा ॥ सर्वाश्रयाखिलमिदंजगदंशभूतमव्याकृताहिपरमाप्रकृतिस्त्वमाद्या ॥ ७ ॥

स्यादितिभावः ॥ हेदेवितवभूर्यधिकमसुरक्षयकारिअतिवीर्यंचाकिंवाचावर्णयामयन्मनसाप्यचिंत्यंस्यात् ॥ हेदेविसर्वेष्वसुरदेवगणादिकेष्वाहवेषुसंग्रामेषुतवाद्भुतानिचरितानिवी
र्याणिकिंवर्णयामवाचा । यानिमनसापिस्मर्तुमशक्यानि ॥ ६ ॥ हेदेवित्वांत्रिगुणापित्रयोगुणायस्यांसासत्त्वंरजस्तमइतित्रयोगुणाः ॥ सत्त्वगुणात्वंवैष्णवीशक्तिःसतीजगंतिरक्ष
सि । रजोगुणात्वंब्राह्मीशक्तिःसतीसृजसि । तमोगुणारौद्रीशक्तिःसतीसंहरसि । अतःसर्जनीयसंरक्षणीयसंहरणीयानिजगंतिस्वर्गभूपातालाख्यानियेषांत्वंहेतुरसि ॥ हेदेवित्वंहरि
हरादिभिरपिदेवैःतत्त्वतोनज्ञायसेमायारूपत्वात ॥ हेदेवित्वम्अपाराअनवधिरनंता ॥ त्वंसर्वाश्रयासर्वंआश्रयोयस्याःसा ॥ आश्रीयतेइत्याश्रयासर्वस्याश्रयासर्वाश्रया ॥
हेदेविइदमखिलंजगत्तवांशभूतंमायामयत्वात् ॥ जगतःअंशरूपेणनिष्पन्नमंशत्वंभूतप्रापदितिवांशभूतम् ॥ त्वमव्याकृता केनापिनव्याकृतासिपदेनवाक्येनवा ॥
यतोवाचोनिवर्त्ततेअप्राप्यमनसासहेति श्रुतेः ॥ त्वंच विद्यात्वेनपरब्रह्मत्वमेव ॥ यद्वा ॥ हेदेवित्वमव्याकृतासिनकेनापिप्रकाशितासि ॥ परप्रकाश्यत्वानभ्युप
गमाद्ब्रह्मस्वरूपस्यस्वयंप्रकाशत्वाभ्युपगमाच्च ॥ त्वंचपरब्रह्मतत्त्वमेवस्वयंप्रकाशमनतिशयानंदचिद्रूपमसीत्यर्थः ॥ यद्वा ॥ अव्याकृताऽव्याहताकेनापिनहिंसिता

कञ्‌हिंसायांस्वादिः ॥ त्वमेवतुयुद्धेऽहितान्व्याकृणोषिव्याहंसि ॥ यदाहुः ॥ हिंसाकरणयोःस्वादौकृणोतिकृणुतेकञः ॥ करोतिकुरुतेद्वेद्वेसंपद्येतेकमादि
ति ॥ अव्याकृताहिपरमेतिपाठेतुहियस्मात ॥ हेदेवित्वंपरमापराउत्कृष्टामालक्ष्मीःततःअःविष्णुःतेनव्याकृताउरसिस्थापितालोकेषुवा ॥ यद्वा ॥ हेदेविहियस्मा
त्तवरोमकूपेषुनिजरश्मीन्दिवाकरः ददौ ॥ अतःत्वमव्याकृतासिअविनासूर्येणआसमंतात्कृतातेजोभिर्निर्मितासि ॥ अतएवत्वंपरमापराश्रेष्ठामातेजोलक्ष्मीः ॥ अवयःशैलमे
षार्काः ॥ यद्वा ॥ हियतः त्वंजगतामाद्यामूलभूता ॥ अतःसृष्टेःप्राक्केवलेवेत्यव्याकृतासत्त्वरजस्तमोगुणानुदयाद्भेदप्रत्ययानुदयात्सत्त्वादिनाअपृथक्कृतासांख्यदर्शनप्रसिद्धा
परमाप्रकृतिः प्रधानाख्यासि ॥ इयं देवीसांख्यमतेप्रकृतिराख्याता । वेदांतिनस्तुतामनिर्वचनीयामात्ममायामनादिमविद्यामाहुः ॥ शाब्दिकास्तांवस्तुतत्त्वावसितिसिद्धिभेदा
माहुः ॥ शैवास्तांशिवशक्तिमंसक्तिमाहुः ॥ वैष्णवाःविष्णुमायांतामाहुः ॥ शाक्तास्तुतांमहामायामनादिमाहुः ॥ पौराणिकाःतांदेवीमाहुः ॥ ७ ॥ षुरऐश्वर्ये ॥ सुरंतीति
सुराःसुरगणांभावःसुरतासास्तियेषांतेसुरताःइंद्रादयः ॥ मत्वर्थेऽर्शआदित्वादच् समस्ताश्चतेसुरताश्च समस्तविबुधाइतियावत् ॥ हेदेविसावैप्रसिद्धा स्वाहात्वमेवासियस्याः

यस्याःसमस्तसुरताःसमुदीरणेनतृप्तिंप्रयांतिसकलेषुमखेषुदेवी ॥ स्वाहासिवैपितृगणस्यचतृप्तिहेतुरुच्चार्यसेत्वमतएवजनैःस्वधाच ॥ ८ ॥ यामु
क्तिहेतुरविचिंत्यमहाव्रतात्वमभ्यस्यसेसुनियतेंद्रियतत्त्वसारैः ॥ मोक्षार्थिभिर्मुनिभिरस्तसमस्तदोषैर्विद्यासिसाभगवतीपरमाहिदेवि ॥ ९ ॥

समुदीरणेनसकलेषुमखेषुयज्ञेषुसमस्तसुरताःयज्ञभुजःतृप्तिंप्रयांति ॥ किंचवैप्रसिद्धास्वाहाचत्वमेवासि । अतएवखलुपितृयज्ञेषुजनैः श्राद्धकृद्भिःपुरुषैःपितृगणस्यतृप्तिहेतुः ॥
स्वधेत्येवंरूपंमन्त्रात्मामतीत्वमेवोच्चार्यसे कथ्यसे दैवेश्राद्धेभवेत्स्वाहापित्र्येश्राद्धेस्वधोच्यते ॥ स्वाहादेवहविर्दानेश्रौषड्वौषड्वषट्स्वधेत्यभिधानेतुविभागोनाश्रितः ॥ ८ ॥ हेदेवि
हिनिश्चयेनयामुक्तिहेतुः अचिंत्यमहाव्रतापरमावेदांतोद्भवब्रह्मतत्त्वागवतिरूपसाक्षात्कारलक्षणाविद्यासिभवगतीसुनियतेंद्रियतत्त्वसारैर्मोक्षार्थिभिर्मुनिभिरस्तसमस्तदोषैरभ्यस्यसे
पुनःपुनरावर्त्यसेशिक्ष्यसेइत्यन्वयः ॥ मुक्तिरमृतं कैवल्यंज्ञानादेवतुकैवल्यमित्यभ्युपगमात ॥ मुक्तिहेतुर्विद्याअविचिंत्याचिंतयितुमशक्या ॥ दुस्तराणिमहांतिव्रतानिउपवासादीनि
यस्यांसाचिंत्यमहाव्रताअभ्यस्यसे । असुक्षेपणेऽभिपूर्वःकर्माणिलटःथासःसे । सुष्ठुनियतानिविषयेभ्योव्यावर्तितानींद्रियाणियैःतेचतेतत्त्वसाराश्चतत्त्वंतत्त्वज्ञानंसारंनान्यंयेषांतेत
त्त्वसाराः ॥ मन्यंतेमुनयःतैःमोक्षमर्थयंतेमोक्षार्थिनःअस्तःनष्टःसमस्तदोषःकामादिरूपोयेषांतेऽस्तसमस्तदोषाःतैःविद्यतेज्ञायतेनयाविद्याभगवतीसवैश्वर्यसंपन्नापरमाउत्कृष्टा ॥ ९ ॥

हेदेविभगवतीऐश्वर्यादिसंपन्नाशब्दात्मिकावर्णपदवाक्यरूपवाणीस्वरूपा ॥ सुविमलर्ग्यजुषामुद्गीथरम्यपदपाठवतांसाम्नांचनिधानंसर्वजगतामार्तिहंत्रीपरमाउत्तमाचतुर्वर्गदर्शि
नीवार्त्तावृत्तांतरूपात्रय्यसि वेदानांत्रयीभवसीत्यन्वयः॥अथवाभगवतीत्वंसर्वजगतांभवभावनायसंसृत्युत्पादनायपरंनिधानमाश्रयः स्थानमसि ॥ त्वमार्तिहंत्र्यसि॥त्वंवार्तासिकृ
षिगोरक्षादिवृत्तिरसि॥त्वंशब्दात्मिकानादरूपासि॥ यद्वा ॥वर्णपदवाक्यरूपासिगद्यपद्यात्मिकासि॥हेदेवित्वं सुविमलानिऋग्भिःसहितानियजूंषितेषाम् ऋचःऋग्वेदाःयजूंषि
यजुर्वेदाः तेषांमाम्नांसामवेदानांचत्रय्यसीत्यन्वयः ॥ वेदशाखानांबाहुल्याद्बहुवचनम्।उद्गीथउद्गीतम्।अतएवरम्यपदपाठवतामुद्गीथरम्याणिपदानितैःकृत्वापाठवताम् अन्यथा
पदानांपाठःपदपाठःउद्गीथेनरम्यःपदपाठोयेषांतानिउद्गीथरम्यपदपाठानिमामानीतिस्यात् ॥ उद्गीथःप्रणवइतिक्षीरतरंगिणीकारोव्याख्यत्॥उद्गीथःसामवेदइत्यौणादिकवृत्ति
कारः॥प्रणवपक्षेउद्गीथरम्यताऋग्यजुषाणामप्यस्ति॥ यद्वा॥उद्गीथउद्गीतंसाम्निप्रसिद्धम्।वार्त्तावृत्तौजनश्रुते॥वृत्तिःकुमीदपाशुपाल्यवाणिज्याख्या॥जनश्रुतिर्वृत्तांतः।स्त्रियामृक्
सामयजुषीइतिवेदास्त्रयस्त्रयी॥ऋचःयजूंषिचऋग्यजुषाणि अचतुरादिनासमासांतः॥इहतुसमासांतविध्यनित्यत्वमाश्रितम्॥सुविमलानिऋग्यजूंषियेषाम् ॥ यद्वा ॥ समासां

शब्दात्मिकासुविमलर्ग्यजुषांनिधानमुद्गीथरम्यपदपाठवतांचसाम्नाम् ॥ देवित्रयीभगवतीभवभावनायवार्त्तासिसर्वजगतांपरमार्त्तिहंत्री ॥ १० ॥
मेधासिदेविविदिताखिलशास्त्रसारादुर्गासिदुर्गभवसागरनौरसंगा ॥ श्रीःकैटभारिहृदयैककृताधिवासागौरीत्वमेवशशिमौलिकृतप्रतिष्ठा ॥ ११ ॥

तरमुक्तमेव ॥ भवभावनाय भवःशिवःपरमात्मायस्यभावनंध्यानंतस्मैप्रवृत्तात्रयीत्वमेवासीत्यर्थः ॥ उग्रेजन्मनिकल्याणेप्राप्तौसंमृतिसत्तयोःभवः ॥ आर्तिहंत्रीति जनिकर्तुः
प्रकृतिरितिनिर्देशात्समाससिद्धिः ॥ आर्तिःपीडाधनुःकोट्योः ॥ आङ्पूर्वताक्वचित् ॥ १० ॥ हेदेवि त्वं मेधासि अतएवत्वंविदिताखिलशास्त्रासि ॥ यद्वा ॥
हेदेवित्वंविदिताखिलशास्त्रसारामेधासि ॥ धीर्धारणावतीमेधा ॥ विदितान्यखिलानिशास्त्राणिसाराणिचतुर्वर्गतत्त्वपराणिन्याय्यानिययामेधयासात्वमेवासिप्रवृत्तिर्वानिवृत्तिर्वा
नित्येन कृतकेन वा ॥ पुंसांयेनोपदिश्येत तच्छास्त्रमभिधीयते ॥ हेदेवित्वमसंगासंत्यक्ताखिलबंधहेतुःअप्रतिबंधाऽनिवारितगतिः ॥ दुर्गादुष्प्रापादुःखेनगम्य
मानादुर्गा॥दुर्गभवसागरनौरसि दुर्गोदुस्तरोभवः संसारःसागरइवतत्रनौःतरणिरसि॥ यद्वा ॥दुर्गंदुस्तरंभवंस्यतिखण्डयतिदुर्गभवसा नविद्यतेगरोविषंदुःखंयत्रसाअगरा अगरा
चासौनौश्चेतिअगरनौःदुर्गभवसाचासौअगरनौश्च ॥ यद्वा ॥ त्वंदुर्गेदुर्गमेदुष्प्रापेभवेशंभौपरब्रह्मभूतेसागरेसामृतेविषयेअसंगारागादिरहितादुर्गादुष्प्रापानौरसि ॥ नौरिवनौर्दे
वीब्रह्मप्राप्तिसाधनविद्यारूपेत्यर्थः ॥ हेदेवित्वंकटभारिहृदयैककृताधिवासाश्रीरसि विष्णुवक्षःस्थलनिवासिनीलक्ष्मीःत्वमेवासि ॥ हेदेवित्वमेवशशिमौलिकृतप्रतिष्ठागौरीउमा

मि॥शशीचंद्रःमौलौकिरीटेयस्यसशंभुःतेनकृताप्रतिष्ठाऽवस्थितिरर्द्धशरीरभाक्त्वेनयस्याःसा ॥ चूडाकिरीटंकेशाश्चसंयतामौलयस्त्रयः ॥ ११ ॥ ईषत्सहासंमंदास्मितोपेतंरुचिरंपरिपूर्णचंद्रबिंबानुकारिपूर्णेंदुबिंबोपमंकनकेषुउत्तमंयत्कनकंतस्येवकांतिःशोभायस्यतत् । अतएवकांतंमनोहरम् । एवंभूतंतववक्त्रकमलंजगन्मोहनंजयति । तथापितद्विलोक्यसहसाऽतर्कितम्आत्तरुषाप्राप्तकोपेनमहिषासुरेणप्रहृतमत्यद्भुतमेतत् ॥ अहोईदृशंजगन्मोहनंजगत्संजीवनंवक्त्रंविलोक्यपुमानानंदमाप्नुयाततत्कथंमहासुरःसंजातकोपःप्राहार्षीदितिभावः ॥ अतर्कितेतुसहसाऽव्ययम् ॥ सहसाबलेनवा ॥ सहोबलंसहामागः सहनेसहः ॥ अनव्ययत्वेसहसाकृतमित्योजःसहोंभस्तमसस्तृतीयायाइत्यौपपदिकमलुग्विधानंचात्रगमकम्॥ अत्यद्भुतम् अदिभुवोड्डुतच् ॥अदित्याश्चर्येऽव्ययम्॥ आत्तारुट्क्रुधेनसतेन॥ १२॥हेदेविकुपितंक्रोधाविष्टंभ्रुकुटीकरालं भ्रुकुट्याकरालंविषमंभयंकरमतएवक्रोधताम्रमुद्यच्छशांकसदृशच्छवि उद्यनउदयंकुर्वन शशांकश्चंद्रःआरक्तः पूर्णश्चतेनसदृशीछविःप्रभायस्यतत् ॥ तदीयंसंग्रामोन्मुखंदृष्ट्वातुदृष्ट्वैवमहिषासुरःसद्यःसपदिदर्शनक्षणएवप्राणान्नमुमोचेन्नतन्यःजेनियतंतदतीवचित्रम ॥ युक्तोयमर्थः ॥ हिनिश्चयेन कुपितांतकदर्शनेन कुपितकृतांतदर्शनेनकैःजंतुभिःजीव्यतेनकैश्चिदपि॥जीवप्राणधारणे । अकर्म

ईषत्सहासममलंपरिपूर्णचंद्रबिंबानुकारिकनकोत्तमकांतिकांतम् ॥ अत्यद्भुतंप्रहृतमात्तरुषातथापिवक्त्रंविलोक्यसहसामहिषासुरेण ॥ १२ ॥ दृष्ट्वातु देविकुपितंभृकुटीकरालमुद्यच्छशांकसदृशच्छवियन्नसद्यः ॥ प्राणान्मुमोचमहिषस्तदतीवचित्रकजीव्यतेहिकुपितांतकदर्शनेन ॥ १३ ॥ देविप्रसीदपरमाभवतीभवायसद्योविनाशयसिकोपवतीकुलानि ॥ विज्ञातमेतदधुनैवयदस्तमेतन्नीतंबलंसुविपुलंमहिषासुरस्य ॥ १४ ॥

कत्वाद्धावेलटियगात्मनेपदप्रथमपुरुषैकवचनमेव।भावस्यैकत्वात । प्राणधारणंप्रकृतावंतर्भूतमितिजीवतेदेवदत्तइतिप्रयोगेपृथक्नप्राणपदंकर्मवाचिप्रयुज्यतेअनुच्यमानेपितास्मिन्प्राणान्धारयतीतिगम्यमानत्वादतश्चजीवतिरकर्मकः ॥ भ्रुवौकुटीवभ्रुकुटी ॥ इकोह्रस्वोङ्योगालवस्येत्युत्तरपदिकंह्रस्वत्वमत्वंचवा ॥ तेनभ्रुकुटीकरालंकुटिलम् ॥ बलवत्सुष्ठुकिमुतस्वत्यतीवचनिर्भरे ॥ करालोदंतुरेतुंगे ॥ क्रूणोतिहिनस्तिकरालम् ॥ १३ ॥ हेदेवित्वंप्रसीदप्रसन्नाभव ॥ परमापराउत्कृष्टामालक्ष्मीरसि ॥ हेदेविभवतीजगतांभवायसम्पदुद्भवायसद्यःसपदिभवति ॥ भवतीत्वंकोपवती अप्रसन्नास्तितर्हिसद्यःजगतांकुलानिवंशान्समूहान्वाविनाशयति ॥ इहभगवतीतिभवच्छब्दप्रयोगे युष्मदस्मच्छब्दान्यत्वेनशेषेप्रथमःपुरुषःविनाशयतीत्ययम्॥वंशेवृन्देगृहेकुलम्॥उक्तमर्थंप्रकृतेनदेवीचरितेनयोजयतिविज्ञातमित्यर्द्धेन । अधुनैवविज्ञातंविदितमस्माभिः। एतत्किंयत्त्वाम्आहतमेतंयोद्धुमागतम् सुविपुलंसुष्ठुबहुलंमहिषासुरस्यबलंसैन्यमस्तंविनाशंनीतंप्रापितमित्येतत् ॥ प्रसादपरमेतिपाठेप्रसादेनप्रसन्नत्वेनपरमाउत्कृष्टाचेत्तर्हिलोकानांभवायभूतयेसंपदुद

यायभवति ॥ अस्तमदर्शने । अस्तमितिमकारांतमव्ययमनुपलब्धेर्थेवर्त्तते ॥ असुक्षेपणइत्यतोनपुंसकेभावेक्तेतुअस्तंप्रेरणंदूरीकरणमन्यत्र क्षेपं नीतमित्यर्थः ॥ विनाशंनीतमित्यर्थस्तुनस्यात् ॥ अस्तमित्यव्ययत्वेविशिष्टसिद्धिः ॥ १४ ॥ हेदेविभवतीसदाऽभ्युदयदासतीयेषांप्रसन्नास्तितेएवलोकाजनपदेषुजीवत्सुदेशेषुमताःलब्धप्रतिष्ठाःस्युः तेषामेवधनानिस्युःतेषामेवयशांसिसत्कीर्तयःस्युः ॥ तेषांबंधुवर्गश्चनसीदति ॥ चकाराच्चतुष्पात्प्रभृतिश्चनसीदति ॥ तएवधन्याःधनेषुसाधवः ॥ यद्वा ॥ धनानिलब्धारःप्रापारःधन्याः धनगणंलब्धेतिसूत्रेणयत्प्रत्ययः ॥ सुकृतीपुण्यवान्धन्यः ॥ हेदेवियेषांभवतीप्रसन्नास्तितएवनिभृताःविनीताःशिक्षितकुलाचाराःअचपलाःआत्मजाःसुताःभृत्याःअनुच गःदाराः कुलस्त्रियश्चयेषांते ॥ निभृतविनीतप्रश्रिताःसमाः ॥ १५ ॥ हेदेविभवतीप्रसादाद्भवत्याप्रमादात्संभावितःसुकृतीपुण्यवान्जनःप्रतिदिनंसदैवअत्यादृतःअतितरामादृतःसन्समकलानि समस्तानिस्वशास्त्रोक्तान्यतएवधर्म्याणिधर्मेणप्राप्याणिधर्मादनपेतानियथायथंश्रौतानिस्मार्त्तानिचकरोति ॥ ज्योतिष्टोमादीनिहिस्वर्गकामःकरोतिततश्चस्वर्गंप्रयातितेनहेतुनाहे देविलोकद्वयेपिभुविदिव्यपित्वमेवफलदासि ॥ ननुइदमित्थमेव ॥ प्रश्नावधारणानुज्ञानुनयामंत्रणेननु ॥ नौवयोधर्मेतिधर्मेणप्राप्याणीत्यर्थेयत्प्रत्ययः ॥ यद्वा ॥ धर्मपत्यर्थन्यायादनपेतेय

तेसंमताजनपदेषुधनानितेषांतेषांयशांसिनचसीदतिबंधुवर्गः ॥ धन्यास्तएवनिभृतात्मजभृत्यदारायेषांसदाभ्युदयदाभवतीप्रसन्ना ॥ १५ ॥
धर्म्याणिदेविसकलानिसदैवकर्माण्यत्यादृतःप्रतिदिनंसुकृतीकरोति ॥ स्वर्गंप्रयातिचततोभवतीप्रसादाल्लोकत्रयेपिफलदाननुदेवितेन ॥ १६ ॥
दुर्गेस्मृताहरसिभीतिमशेषजतोःस्वस्थैःस्मृतामतिमतीवशुभांददासि ॥ दारिद्र्यदुःखभयहारिणिकात्वदन्यासर्वोपकारकरणायसदार्द्रचित्ता ॥ १७ ॥

त ॥ अत्यादृतौसादरार्चितौ ॥ ननुचभवतीप्रसादादित्यत्रसर्वनाम्नोवृत्तिमात्रेपूर्वपदस्यपुंवद्भावोभवतीतिभवत्प्रसादादितिस्यात्तत्राह ॥ पुंवदितियोगविभागसाध्यमिदंपुंवत्त्वंक्वचिदेव योगविभागादिष्टसिद्धिः ॥ ततश्चैकोहंभवतीसुतक्षयकरोमातःकियंतोरयइतिवत्पुंवद्भावाभावःक्वचिदस्त्येव ॥ भवतीतिछित्त्वाप्रमादात्प्रसन्नत्वाद्भवतीलोकद्वयेपिफलदास्तीति पुंवत्त्वशंकानिरासपरव्याख्यानेभवतीसुतक्षयकरइतिप्रयोगःकदर्थितःस्यात् ॥ १६ ॥ हेदुर्गेभीतस्याशेषजंतोःसर्वस्यापिप्राणिनःस्वांतेनस्मृतामतीत्वंभीतिंहरसिहेदुर्गेत्वंस्वस्थैरभी तैस्तुजंतुभिःस्मृतासतीअतीवशुभांमतिंचतुर्वर्गफलसाधनभूतांबुद्धिंददासि ॥ त्वन्मंत्रत्वद्ध्यानत्वद्भजनपरांमतिंवाददासि ॥ तदित्थं हेदारिद्र्यदुःखभयहारिणिसर्वोपकारकर णायसर्वोपकारान्कर्तुंसदाआर्द्रचित्ताकृपार्द्रहृदयापरादेवतात्वदन्याकास्तुनकापि ॥ अग्न्यादितोभयंहर्तुमतिंदातुमनुत्तमाम् ॥ हेदेवित्वदपराकास्तुसर्वोपकृतिकारिणी ॥ दुःखे नगंतुशक्यतेस्यांदुर्गा ॥ सुदुरोरधिकरणेचेतिडः ॥ बलवत्सुष्ठुकिमुतस्वत्यतीवचनिर्भरे ॥ स्वस्थैःस्वर्गस्थैर्देवैःस्मृतेतिवा । दारिद्र्याद्दुर्गतौ ॥ दरिद्रातिदुर्गतिंगच्छतिनिर्द्धनीभवतीतिद

रिद्रः ॥ दरिद्रस्यकर्मदारिद्र्यंतस्यदुःखंदारिद्र्यदुःखंतस्माद्भयंहरतीतितच्छीलातस्याःसंबुद्धिःहेदारिद्र्यदुःखभयहारिणिसर्वेषुभक्तेषुअभक्तेषुउदासीनेषुचउपकाराणांकरणं वि
धानंतस्मै ॥१७॥ यद्येषादेवीसर्वोपकारकरणायदयार्द्रचित्तास्याकिमितिहिदैत्यान्निहंति । तत्रोत्तरमाह उपैतु लोडंतःपाठः ॥ नांबइतिपाठे नअंबइतिछेदः हेअंब हेसर्वज
ननि त्वंसर्वोपकारायसदाकृपार्द्रचित्तासीतियत्तत्तथैवनान्यथा ॥ तथाहि॥एभिरहितैर्महिषासुरादिभिर्हतैरणेत्वद्धतैःजगत्लोकःसुखमुपैतु पीडकाभावात्सुखंप्राप्नोतु ॥ तथाएते
अहितालोकत्रयद्रुहोमहिषासुरादयःचिरायनरकायनरकंगंतुंपापंनकुर्वंतु किंतुसंग्रामेमृत्युंमरणमधिगम्यप्राप्यदिवंस्वर्गंप्रयांतुइतिमत्वाविचिंत्यानुग्रहबुद्ध्याएतान्दैत्यानविनिहंसि
न्यवधीः । यानपिदैत्यान्विनिहनिष्यसि । सिप्वर्तमानसामीप्येवर्तमानवद्वेतिलट् ॥ नूनमवश्यम् ॥ नूनमवश्यंनिश्चयेद्वयम् ॥ चिरायचिररात्रायचिरस्यायाश्चिरार्थकाः
अव्ययाख्याः ॥ अंबेतिअंबार्थनद्योर्ह्रस्वः ॥ नामेत्यत्रपाठे न आमनरकायकुष्ठादिमहाव्याधिप्रधाननरकायपापंनकुर्वंत्वित्यर्थः ॥ अथवानामप्राकाश्यसंभाव्यक्रोधोपगमकु
त्सने।।एभिरसुरैर्हतैर्जगत्सुखमुपैतुतथैतेऽसुराःयद्यपिपापंकृतवंतःकुर्वंतुनामचिरायचिरकालंतथावधेनोद्धरणीयाइत्यर्थः॥१८॥ हेदेविभवतीसर्वासुरान्सर्वेषामपिअमून्प्राण.नरां

एभिर्हतैर्जगदुपैतिसुखंतथैतेकुर्वंतुनामनरकायचिरायपापम् ॥ संग्राममृत्युमधिगम्यदिवंप्रयांतुमत्वेतिनूनमहितान्विनिहंसिदेवि ॥ १८ ॥ दृष्ट्वैव
किंनभवतीप्रकरोतिभस्मसर्वासुरानरिषुयत्प्रहिणोषिशस्त्रम् ॥ लोकान्प्रयांतुरिपवोपिहिशस्त्रपूताइत्थंमतिर्भवतितेष्वहितेषुसाध्वी ॥ १९ ॥खड्ग
प्रभानिकरविस्फुरणैस्तथोग्रैःशूलाग्रकांतिनिवहेनदृशोसुराणाम् ॥ यन्नागताविलयमंशुमदिंदुखंडयोग्याननंतवविलोकयतांतदेतत् ॥ २० ॥

निगृह्णंतितान्असुरान्दृष्ट्वैवक्रूरदृष्ट्यैवभस्मभस्मीभूतान्किंनप्रकरोति किंतुसामर्थ्यतःकरोत्येव ॥ अथापिहिहेदेवित्वमरिषुशत्रुषुशस्त्रमायुधंप्रहिणोषिप्रयुंक्षेइतियत्तत्रतवा
भिप्रायोन्यएवहिनिश्चयेनारिपवोपिशत्रवोपिशस्त्रपूताःशस्त्रहताःकृतप्रायश्चित्ताइवपूमितपापफलाःसंतोशलोकान्स्वर्गादीन्प्रयांत्विति तदित्थं हेदेवि तवतेष्वहितेष्वपिसाध्वी
मतिरनुग्रहबुद्धिर्भवतिकिंपुनःसाधुषुस्वधर्मनिरतेषुसाध्वीतवमतिर्भवतीतिकिंब्रूम इतिभावः ॥ भवतीशब्दप्रयोगेप्रकरोतीतिप्रथमपुरुषःभस्मत्वस्यविधेयत्वादेकत्वेपिनविरो
धोवेदाःप्रमाणमितिवत् ॥ प्रहिणोतीति हिगतौ ॥ स्वादिभ्य श्नुः । हिनुमीनाइतिणत्वम् ॥ लोकस्तुभुवनेजने ॥ साध्वीवोतोगुणवचनान्ङीष् ॥ १९ ॥ हेदेविरणे
तवउग्रैःखड्गप्रभानिकरैर्विस्फुरणैःतथाउग्रेणशूलाग्रकांतिनिवहेनिवा असुराणांदृष्टयःविलयंविनाशंनागताःनअगमन्इतियत्तदेतदन्यदेवास्तिकारणम् । किम् ॥ अंशुमदिंदुखंड
योगिआननंसुधांशखंडयुक्तंतववक्त्रंविलोकयतामितिहेतुगर्भविशेषणमसुराणाम् ॥ [illegible]

रणैः शूलाग्रकांतिनिवहेनचविलयंगतद्दशःसंपद्येरन्निति भावः ॥ अत्रक्रियातिपत्तिर्वर्त्तते ॥ यथा ॥ हेदेवियद्यसुराः तवामृतांशुखंडयुक्तंमुखंव्यलोकयिष्यन्तर्हिंउग्रैः
खड्ग प्रभानिकरविस्फुरणैःशूलाग्रकांतिनिवहेनचविलीनदृशःसमपत्स्यंत ॥ नच तदेतत्समपत्स्यंत ॥ यद्यस्मान्मुखंव्यलोकयिष्यन्‌तस्मादसुराविलीन
दृशोनसमपत्स्यंतेति ॥ खड्गस्य प्रभाः तासां निकरः स्तोमः तस्य विस्फुरणानि संवलयनानि तैः शूलस्याग्राणित्रीणियेषांतेषांकांतयःतासांनिवहःसमूहः
तेन ॥ अंशवःकिरणाः इंदुरमृतमयूखःतस्यखंडःशकलःतेनयोगःसंबंधःतद्वत्‌ ॥ अंशुमदिंदुखंडेनयोक्तुमर्हंयोग्यमाननमित्यपिशब्दः । सवर्णदीर्घः ॥ २० ॥
हेदेवितवशीलंसद्वृत्तंकर्तृदुर्वृत्तवृत्तशमनंदुष्टंवृत्तंयेषांतेदुर्वृत्ताः तेषांशमंसंशमयितृनिवारकंवर्त्ततेयद्वादुष्टेनवृत्तेनवृत्तंनिष्पन्नंफलंदुर्वृत्तवृत्तंदुष्टंफलंनरकलक्षणंतस्यशमनंतवशीलम्‌ ॥
तथाहेदेवितवैतत्सर्वसौभाग्यसौंदर्यभाजनंरूपमचिंत्यंमनसापिविचारयितुमशक्यमविचार्यंसत्‌अन्यैर्मनोहरैरतुल्यमसदृशमसाधारणमसमानंवर्त्तते ॥ च तथाहेदेवितववीर्यंचहृतदे
पराक्रमाणांदैत्यानांहंतृघातकंवर्त्तते ॥ तथाहेदेवित्थंप्रागुक्तभणित्यात्वयास्वकीयादयावैरिष्वपिप्रगटितैवप्रकाशितैव ॥ वृत्तंपद्येचारित्रेत्रिष्वतीतेदृढनिस्तले ॥ शीलंस्वभावे

दुर्वृत्तवृत्तशमनंतवदेविशीलंरूपंतथैतदविचिंत्यमतुल्यमन्यैः॥ वीर्यंचहंतृहृतदेवपराक्रमाणांवैरिष्वपिप्रकटितैवदयात्वयेत्थम्‌ ॥२१॥ केनोपमाभव
तुतेस्यपराक्रमस्यरूपंचशत्रुभयकार्यतिहारिकुत्र ॥ चित्तेकृपासमरनिष्ठुरताचदृष्टात्वय्येवदेविवरदेभुवनत्रयेपि ॥२२॥ त्रैलोक्यमेतदखिलंरिपुना
शनेनत्रातंत्वयासमरमूर्द्धनितेपिहत्वा ॥ नीतादिवंरिपुगणाभयमप्यपास्तमस्माकमुन्मदसुरारिभवंनमस्ते ॥ २३ ॥

सद्वृत्ते॥ रूपंगुणेस्वभावेच ॥२१॥ हेदेविवरदेभुवनत्रयेपितेतवास्यपराक्रमस्यकेनसहउपमाभवतुनकेनापि ॥ निरुपमत्वात्तेपराक्रमस्य ॥ नन्वतुलोपमाभ्यामितिनिषेधात्तृतीया
नस्यात्‌ ॥ सहविवक्षायांतृतीयास्त्येव ॥ सूत्रंतुषष्ठ्यर्थंसहभावाविवक्षार्थंच ॥ हेदेविरूपंचशत्रुभयकारिशत्रूणांभयोत्पादनशीलंततोन्येषांतुअतिहारिअतिमनोहारितवैवा
स्तिनत्वन्यस्य ॥ त्वदीयचित्तेकृपाचसमरनिष्ठुरताचत्वय्येवदृष्टा नान्यत्रदृष्टेत्यर्थः ॥ भवत्वितिलोट्‌ । दृष्टेतिनिष्ठा ॥ दृष्टाइतिक्कांतोपपाठः ॥ कृपासमरनिष्ठुरताइतिचप्रथ
मानतुद्वितीया ॥ समरे निष्ठुरायाः भावः ॥ त्वतलोर्गुणवचनस्यपुंवद्भावः ॥ २२॥ हेदेवित्वयाएतत्त्रैलोक्यंरिपुनाशनेनातुलंयथाभवतितथात्रातंरक्षितम्‌ ॥ त्रैङ्पालने नुद
विदोन्दत्राघ्राह्रीभ्योन्यतरस्यामितिवानिष्ठानत्वम्‌। त्वयासमरमूर्द्धनिरिपुगणान्हत्वातेरिपुगणाःदिवंस्वर्गंनीताः। हेदेवित्वयाऽस्माकंदेवानामुन्मदसुरारिभवंभयमप्यपास्तमपक्षि
प्तंदूरीकृतम्‌ ॥ हेसर्वजननि नमस्ते ॥ लोकेखलुहिताःनतिमर्हंति ॥ त्रयोलोकाःत्रैलोक्यंचातुर्वर्ण्यादित्वात्स्वार्थेष्यञ्‌॥ अखिलंत्रैलोक्यमितिपाठेपौनरुक्त्यभियानवियतेखि

लंयत्रेतिक्रियाविशेषणम् ॥ संभवेव्यभिचारेचस्याद्विशेषणमर्थवत्॥ रिपूणांनाशनेनसमरस्यमूर्द्धेवमूर्द्धायुद्धाग्रभूमिःतथाचोच्छ्रितमदेभ्यःसुराणामरिभ्योदैत्येभ्यःभवंसंभवम् ॥ वमःस्वस्तीतिचतुर्थी ॥२३॥ हेदेविअंबिकेत्वंशूलेनायुधेनशत्रुभ्योनोस्मान्पाहिरक्ष ॥ पारक्षणे ॥ सेर्ह्यपिच ॥ अस्त्रीशूलंरुगायुधम् ॥ त्वंघंटायाःस्वनेननःशत्रुतःपापतश्चपाहि ॥ हेदेवित्वंचापज्यानिःस्वनेनचापारोपिताकृष्टमौर्वीजनितनिःस्वनेननोस्मान्पाहिपापतःशत्रुभ्यश्चेतिशेषः ॥२४॥ हेदेविईश्वरिईश्वरस्यपत्नि ॥ यद्वा ॥हेईश्वरिजगद्व्यापिनि ॥ अश्नोतेराशुकर्मणिवरट्चेच्चोपधायाः ॥ हेचंडिकेत्वमात्मनःशूलस्यायुधस्यभ्रामणेनपारितोभितश्चक्राकारेणपरिवर्त्तनेननोस्मान्प्राच्यांदिशिरक्षशत्रुतः ॥ त्वंप्रतीच्यांपश्चिमायांदिशिआत्मशूलस्यभ्रामणेनरक्ष ॥ त्वमात्मशूलस्यभ्रामणेनदक्षिणेदिग्विभागे तथाउत्तरस्यांदिशिरक्ष ॥ भ्रमणमपेदंभ्रामणंप्रदाक्षिणीकरणपारितोमंडलीकरणम ॥ अन्यथाचलनमात्रंशूलसमंताक्रियास्यात ॥ अतश्चप्रदक्षिणाकृतिपारिभ्रमणंविवक्षितमितिसूचयितुंप्राच्यांप्रतीच्यांदक्षिणेउत्तरस्यामित्युक्तम॥चकाराद्विदिग्ग्रहणम् ॥ २५ ॥

शूलेनपाहिनोदेविपाहिखड्गेनचांबिके ॥ घंटास्वनेननःपाहिचापज्यानिःस्वनेनच ॥ २४ ॥ प्राच्यांरक्षप्रतीच्यांचचंडिकेरक्षदक्षिणे ॥ भ्रामणेनात्मशूलस्यउत्तरस्यांतथेश्वरि ॥ २५ ॥ सौम्यानियानिरूपाणित्रैलोक्येविचरंतिते ॥ यानिचात्यंतघोराणितैरक्षास्मांस्तथाभुवम् ॥ २६ ॥ खड्गशूलगदादीनियानिचास्त्राणितेंबिके ॥ करपल्लवसंगीनितैरस्मान्रक्षसर्वतः ॥ २७ ॥ ॥ ऋषिरुवाच ॥ ॥ एवंस्तुतासुरैर्दिव्यैःकुसुमैर्नंदनोद्भवैः ॥ अर्चिताजगतांधात्रीतथागंधानुलेपनैः ॥ २८ ॥

हेदेवित्रैलोक्येत्रिषुलोकेषुतेतवयानिसौम्यानिसुंदराणिप्रसन्नानिरूपाणिभयंकराणिविचरंतिविहरंति ॥ यानिचात्यंतघोराणिभयंकराणिरूपाणिविचरंति ॥ तैस्तैश्चरूपैरुपलक्षितात्वंतैस्तैःकरणैर्वाऽस्मानरक्ष ॥ तथातैरेवद्विविधैरूपैर्भुवंरक्ष ॥ चकारात्पाताललोकंरक्ष ॥ सौम्यंतुसुन्दरेसोमदैवते ॥ सोमादृचणि सौम्यंसुन्दरेतूषचारतः ॥ अनुगृह्णातियान्देवीतेषांसौमीजगन्मयी ॥ नानुगृह्णातियान्देवीतेषांघोराजगन्मयी ॥ २६ ॥ हेदेविखड्गशूलगदादीनियान्यायुधानितैः यानिचास्त्राणिधनुरादीनितैश्चत्वंसर्वतःसमंततःअस्मान्त्वदेकशरणानरक्ष दुःखतःशत्रुतश्चपालय ॥ हस्तिशुंडांशुवाहाग्रबलिषूक्तःकरःपुमान् ॥ करोहस्तः अंगुल्यःकरशाखाःकरपल्लवाःतैःसंगःतद्वंतिकरपल्लवसङ्गीनि ॥ करपल्लवइवकरपल्लवःतेनसंगःतद्वंतिवाहस्तस्थितानीत्यर्थः ॥ समंततस्तुपरितःसर्वतोविष्वगित्यपि ॥ खड्गश्चशूलंचगदाचखड्गशूलगदंसेनांगत्वादेकवत्त्वंतदादिर्येषांतानिधनुरादीनि ॥ २७ ॥ एवमुक्तभणित्याजगतांधात्रीपोषयित्रीदेवासुरैस्तुतातत्तोदिव्यैर्दिविभवैः नंदनोद्भवैःनंदनंस्वस्तनवनंततउद्भवैःकुसुमैः तथादिव्यैः

गंधानुलेपनैश्चार्चितापूजिता ॥ गंधैरनुलेपनानि गंधाः कुंकुमादयः ॥ कुंकुमागरुकस्तूरीकर्पूरंचंदनंतथा ॥ महासुगंधमित्युक्तंनाम्नास्यायक्षकर्दमः ॥ अनुलेपनमंगरागः ॥
॥ २८ ॥ समस्तैरखिलैः त्रिदशैर्देवैः भक्त्यादिविभवैर्धूपराजैः सुधूपितासुपूजिता ॥ देवीप्रसादसुमुखीसतीतान्प्रणतान्समस्तान्सुरानिंद्रादीन्वाक्यंप्राहउवाच ॥ उपसर्ग
प्रतिरूपकः प्रशब्दोऽव्ययाख्यः ॥ अहेतिनिपातस्तिङंतप्रतिरूपः कालसामान्यवचनः ॥ शोभनंमुखमस्त्यस्याः सुमुखी ॥ स्वांगाच्चोपसर्जनादसंयोगोपधादितिचातङ्ङी
ष्च् टाप्च ॥ नखमुखात्संज्ञायामितिङीषोनिषेधस्तुसंज्ञायामेव ॥ २९ ॥ हेत्रिदशाः युष्मत्कृतैरेभिः स्तवैः प्रपूजिताअहंअतिप्रीतास्मि ॥ युष्माभिरस्मत्तः सकाशाद्य
दभिवांछितमभिलषितंवर्ततेतद्वस्तुव्रियतांप्रार्थ्यतामहंददामिदास्यामि॥इहप्रीतापीत्येतिपाठद्वयम् ।यत्तन्मत्तोभिवांछितमितिपाठः मध्यः ॥ यदस्मत्तोभिवांछितमितिपाठेअस्म
द्देवीभ्यः व्रीयतामहंदास्यामीतिवचनचातुर्यम्॥कीदृक्स्याद्वहुत्वेनोपक्रम्यैकत्वेनोपसंहाराद्वाचोयुक्तिरियंयुक्तिमतामुद्वेगंजनयतीत्यर्थः॥ ३० ॥ हेदेविअपरंयुष्माभिः कर्तव्यंसत्

भक्त्यासमस्तैस्त्रिदशैर्दिव्यधूपैः सुधूपिता ॥ प्राहप्रसादसुमुखीसमस्तान्प्रणतान्सुरान् ॥२९॥ ॥ श्रीदेव्युवाच ॥ ॥ व्रियतांत्रिदशाः सर्वेयदस्मत्तो
भिवांछितम् ॥ ददाम्यहमतिप्रीत्यास्तवैरेभिः सुपूजिता ॥ ३० ॥ कर्त्तव्यमपरंयच्चदुष्करंतन्नविद्महे ॥ इत्याकर्ण्यवचोदेव्याः प्रत्यूचुस्तेदिवौकसः
॥३१॥ ॥ देवाऊचुः ॥ ॥ भगवत्याकृतंसर्वंनकिंचिदवशिष्यते ॥ यदयंनिहतः शत्रुरस्माकंमहिषासुरः ॥३२॥ यदिचापिवरोदेयस्त्वयास्माकंमहे
श्वरि ॥ संस्मृतासंस्मृतात्वंनोहिंसीथाः परमापदः ॥३३॥ यश्चमर्त्यः स्तवैरेभिस्त्वांस्तोष्यत्यमलानने ॥तस्यवित्तर्द्धिविभवैर्धनदारादिसंपदाम्॥ वृद्ध
येस्मत्प्रसन्नात्वंभवेथाः सर्वदांबिके ॥ ३४ ॥

दुःसाध्यंयत्तच्चमदग्रेमह्यंनिवेद्यतांज्ञाप्यतांतदप्यपरंमहिषासुरवधापेक्षयाद्वितीयंकार्यंसाधयामि इतिभावः ॥ इतिइत्थंदेव्यावचः आकर्ण्यश्रुत्वातेसर्वेदिवौकसः इंद्रादयः प्रत्यूचुः
प्रतिवाक्यमुक्तवंतः दिविओकोनिवासोयेषां तेदिवौकसः॥पृषोदरादित्वात्साधुः ॥ ३१ ॥ हेदेवियद्यस्मात्त्वयास्माकंशत्रुरयंमहिषासुरोनामनिहतः अतः त्वयासर्वमस्माकंप्रयो
जनंकृतमेव ॥ नकिंचिदवशिष्यते ॥ नकश्चिदपिशत्रुरवशिष्टः ॥ ३२ ॥ हेमहेश्वरिदेवियदिपक्षांतरेत्वयास्माकंत्वदनुग्रहजीविनांवरः देयोनुमतः स्यात्तर्हिवरः प्रार्थ्यते
ऽस्माभिः कोसौ हेदेवित्वंपरमापत्सुअस्माभिः त्वदेकशरणैः संस्मृतासंस्मृतासतीवारंवारंध्यातानोस्माकंपरमापदः ॥यद्वा॥परमाअत्यर्थाआपदः येभ्यस्तेपरमापदः शत्रवः तन्म
हासुरान्हिंसीथाः हिंस्याः । हिसिहिंसायांरुधादेः प्रार्थनेलिङ्चपरस्मैपदस्थानेव्यत्ययोवहुलमित्यात्मनेपदस्यथासःसीयुट् ॥अस्माकमितिदानप्रतिग्रहभावात्संबंधेषष्ठ्येव ॥रज
कस्यांशुकंदनेस्वामीभृत्यस्यवेतनमितिवत् ॥ पक्षांतरेचेयदिच ॥३३॥ देवाः द्वितीयंवरंप्रार्थयंते ॥ हेदेविहेअंबिकेअमलाननेप्रसन्नवदनेत्वमस्माभिः प्रसन्नाप्रणतासेवितासती

लंयत्रेतिक्रियाविशेषणम् ॥ संभवेव्यभिचारेचस्याद्विशेषणमर्थवत् ॥ रिपूणांनाशनेनसमरस्यमूर्द्धेवमूर्द्धायुद्धाग्रभूमिःतथाचोच्छ्रितमदेभ्यःसुराणामरिभ्योदैत्येभ्यःभवंसंभवम् ॥ नमःस्वस्तीतिचतुर्थी ॥२३॥ हेदेविअंबिकेत्वंशूलेनायुधेनशत्रुभ्योनोस्मान्पाहिरक्ष ॥ पारक्षणे ॥ सेर्ह्यपिच ॥ अस्त्रीशूलंरुगायुधम् ॥ त्वंघंटायाःस्वनेननःशत्रुतःपापतश्चपाहि ॥ हेदेवित्वंचापज्यानिःस्वनेनचापारोपिताकृष्टमौर्वीजनितनिःस्वनेननोस्मान्पाहिपापतःशत्रुभ्यश्चेतिशेषः ॥२४॥ हेदेविईश्वरिईश्वरस्यपत्नि ॥ यद्वा ॥हेईश्वरिजगद्व्यापिनि ॥ अश्वोनेराशुकर्मणिवरट्चेच्चोपधायाः ॥ हेचंडिकेत्वमात्मनःशूलस्यायुधस्यभ्रामणेनपारितोभितश्चक्राकारेणपरिवर्त्तनेननोस्मान्प्राच्यांदिशिरक्षशत्रुतः ॥ त्वंप्रतीच्यां पश्चिमायांदिशिआत्मशूलस्यभ्रामणेनरक्ष ॥ त्वमात्मशूलस्यभ्रामणेनदक्षिणेदिग्विभागे तथाउत्तरस्यांदिशिरक्ष ॥ भ्रमणम्येदंभ्रामणंप्रदाक्षिणीकरणपारितोमंडलीकरणम् ॥ अन्यथाचलनमात्रंशूलसमंताक्रियास्यात् ॥ अतश्चप्रदक्षिणाकृतिपारिभ्रमणंविवक्षितमितिमूचयितुंप्राच्यांप्रतीच्यांदक्षिणेउत्तरस्यामित्युक्तम् ॥ चकाराद्विदिग्ग्रहणम् ॥ २५॥

शूलेनपाहिनोदेविपाहिखड्गेनचांबिके ॥ घंटास्वनेननःपाहिचापज्यानिःस्वनेनच ॥ २४ ॥ प्राच्यांरक्षप्रतीच्यांचचंडिकेरक्षदक्षिणे ॥ भ्रामणेनात्मशूलस्यउत्तरस्यांतथेश्वरि ॥ २५ ॥ सौम्यानियानिरूपाणित्रैलोक्येविचरंतिते ॥ यानिचात्यंतघोराणितैरक्षास्मांस्तथाभुवम् ॥ २६ ॥ खड्गशूलगदादीनियानिचास्त्राणितेंबिके ॥ करपल्लवसंगीनितैरस्मान्रक्षसर्वतः ॥ २७ ॥ ॥ ऋषिरुवाच ॥ ॥ एवंस्तुतासुरैर्दिव्यैःकुसुमैर्नंदनोद्भवैः ॥ अर्चिताजगतांधात्रीतथागंधानुलेपनैः ॥ २८ ॥

हेदेवित्रैलोक्येत्रिषुलोकेषुतेतवयानिसौम्यानिसुंदराणिप्रसन्नानिरूपाणिभयंकराणिविचरंतिविहरंति ॥ यानिचात्यंतघोराणिभयंकराणिरूपाणिविचरंति ॥ तैस्तैश्चरूपैरुपलक्षितात्वंतैस्तैःकरणैर्वाऽस्मानरक्ष ॥ तथातैरेवद्विविधैरूपैर्भुवंरक्ष ॥ चकारात्पाताललोकंरक्ष ॥ सौम्यंतुसुन्दरेसोमदैवते ॥ सोमाट्ट्यणि सौम्यंसुन्दरेतूपचारतः ॥ अनुगृह्णातियान्देवीतेषांसौमीजगन्मयी ॥ नानुगृह्णातियान्देवीतेषांघोराजगन्मयी ॥ २६ ॥ हेदेविखड्गशूलगदादीनियान्यायुधानितैः यानिचास्त्राणिधनुरादीनितैश्चत्वंसर्वतः समंततःअस्मान्त्वदेकशरणान्रक्ष दुःखतःशत्रुतश्चपालय ॥ हस्तिशुंडांशुवाहाग्रवलिपूक्तःकरःपुमान् ॥ करोहस्तः अंगुल्यःकरशाखाःकरपल्लवाःतैःसंगःतद्वंतिकरपल्लवसङ्गीनि ॥ करपल्लवइवकरपल्लवःतेनसंगःतद्वंतिवाहस्तस्थितानीत्यर्थः ॥ समंततस्तुपरितःसर्वतोविष्वगित्यपि ॥ खड्गश्चशूलंचगदाचखड्गशूलगदंसेनांगत्वादेकवत्त्वंतदादिर्येषांतानिधनुरादीनि ॥ २७ ॥ एवमुक्तभणित्याजगतांधात्रीपोषयित्रीदेवासुरैस्तुताततोदिव्यैर्दिविभवैः नंदनोद्भवैःनंदनंस्वर्गस्तनवनंततउद्भवैःकुसुमैः तथादिव्यैः

गंधानुलेपनैश्चार्चितापूजिता ॥ गंधैरनुलेपनानि गंधाः कुंकुमादयः ॥ कुंकुमागरुकस्तूरीकर्पूरंचंदनंतथा ॥ महासुगंधमित्युक्तंनाम्नास्यायक्षकर्दमः ॥ अनुलेपनमंगरागः ॥
॥ २८ ॥ समस्तैरखिलैः त्रिदशैर्देवैः भक्त्यादिविभवैर्धूपराजैः सुधूपितासुपूजिता ॥ देवीप्रसादसुमुखीसतीतान्प्रणतान्समस्तान्सुरानिंद्रादीन्वाक्यंप्राहउवाच ॥ उपसर्ग
प्रतिरूपकः प्रशब्दोऽव्ययाख्यः ॥ अहेतिनिपातस्तिङंतप्रतिरूपः कालसामान्यवचनः ॥ शोभनंमुखमस्त्यस्याः सुमुखी ॥ स्वांगाच्चोपसर्जनादसंयोगोपधादितिचात्ङी
ष् च् टाप् च ॥ नखमुखात्संज्ञायामितिङीषोनिषेधस्तुसंज्ञायामेव ॥ २९ ॥ हेत्रिदशाः युष्मत्कृतैरेभिः स्तवैः प्रपूजिताअहंअतिप्रीतास्मि ॥ युष्माभिरस्मत्तः सकाशात्
दभिवांछितमभिलषितंवर्त्तनेतद्वस्तुव्रियतांप्रार्थ्यतामहंददामिदास्यामि ॥ इहप्रीताप्रीत्येतिपाठद्वयम् । यत्तन्मत्तोभिवांछितमितिपाठः साध्यः ॥ यदस्मत्तोभिवांछितमितिपाठेअस्म
द्देवीभ्यः प्रीयतामहंदास्यामीतिवचनचातुर्यम् ॥ कीदृक्स्याद्वहुत्वेनोपक्रम्यैकत्वेनोपसंहाराद्वाचोयुक्तिरियंयुक्तिमतामुद्वेगंजनयतीत्यर्थः ॥ ३० ॥ हेदेविअपरंयुष्माभिः कर्तव्यंसत्

भक्त्यासमस्तैस्त्रिदशैर्दिव्यधूपैः सुधूपिता ॥ प्राहप्रसादसुमुखीसमस्तान्प्रणतान्सुरान् ॥२९॥ ॥ श्रीदेव्युवाच ॥ ॥ व्रियतांत्रिदशाः सर्वेयदस्मत्तो
भिवांछितम् ॥ ददाम्यहमतिप्रीत्यास्तवैरेभिः सुपूजिता ॥ ३० ॥ कर्त्तव्यमपरंयच्चदुष्करंतन्नविद्महे ॥ इत्याकर्ण्यवचोदेव्याः प्रत्यूचुस्तेदिवौकसः
॥३१॥ ॥ देवाऊचुः ॥ ॥ भगवत्याकृतंसर्वंनकिंचिदवशिष्यते ॥ यदयंनिहतः शत्रुरस्माकंमहिषासुरः ॥३२॥ यदिचापिवरोदेयस्त्वयास्माकंमहे
श्वरि ॥ संस्मृतासंस्मृतात्वंनोहिंसीथाः परमापदः ॥३३॥ यश्चमर्त्यः स्तवैरेभिस्त्वांस्तोष्यत्यमलानने ॥ तस्यवित्तर्द्धिविभवैर्धनदारादिसंपदाम् ॥ वृद्ध
येस्मत्प्रसन्नात्वंभवेथाः सर्वदांबिके ॥ ३४ ॥

दुःसाध्यंयत्तच्चमदग्रेमह्यंनिवेद्यतांज्ञात्वातांतदप्यपरंमहिषासुरवधापेक्षयाद्वितीयंकार्यंसाधयामि इतिभावः ॥ इतिइत्थंदेव्यावचः आकर्ण्यश्रुत्वातेसर्वेदिवौकसः इंद्रादयः प्रत्यूचुः
प्रतिवाक्यमुक्तवंतः दिविओकोनिवासोयेषां तेदिवौकसः ॥ पृषोदरादित्वात्साधुः ॥ ३१ ॥ हेदेवियस्मात्त्वयास्माकंशत्रुरयंमहिषासुरोनामनिहतः अतः त्वयासर्वमस्माकंप्रयो
जनंकृतमेव ॥ नकिंचिदवशिष्यते ॥ नकश्चिदपिशत्रुरवशिष्टः ॥ ३२ ॥ हेमहेश्वरिदेवियदिपक्षांतरेत्वयाऽस्माकंत्वदनुग्रहजीविनांवरः देयोनुमतः स्यात्तर्हिवरः प्रार्थ्यते
ऽस्माभिः कोसौ हेदेवित्वंपरमापत्सुअस्माभिः त्वदेकशरणैः संस्मृतासंस्मृतासतीवारंवारंध्यातानोस्माकंपरमापदः ॥ यद्वा ॥ परमाअत्यर्थाआपदः येभ्यस्तेपरमापदः शत्रवः तन्म
हासुरान्हिंसीथाः हिंस्याः । हिसिर्हिंसायांरुधादेः प्रार्थनेलिङ् चपरस्मैपदस्थानेव्यत्ययोबहुलमित्यात्मनेपदस्यथासः सीयुट् ॥ अस्माकमितिदानप्रतिग्रहभावात्संबंधेषष्ठ्येव ॥ रज
कस्यांशुकंददातेस्वामीभृत्यस्यवेतनमितिवत् ॥ पक्षांतरेचेयदिच ॥ ३३ ॥ देवाः द्वितीयंवरंप्रार्थयंते ॥ हेदेविहेअंबिकेअमलाननेप्रसन्नवदनेत्वमस्माभिः प्रसन्नाप्रणतासेवितासती

वरंददासिअतोयश्चमर्त्यः एभिस्त्वद्विषयैरस्माभिर्देवैः कृतैस्तवैः त्वांदेवींस्तोष्यतिभक्तितः स्तविष्यतितस्यमर्त्यस्यमनुष्यस्यवित्तर्द्धिविभवैः सहधनदारादिसम्पदांसदावृद्धयेभवेथाः
सर्वदावित्तस्यऋद्धेः समृद्धेः विभवैरुद्भवैः सहधनस्यगोमहिषस्याश्वादेर्दाराणांपत्नीनाम्। आदिशब्दात्सेवकानांसम्पदांक्षेत्रारामधान्यपुत्रमित्रादिसम्पत्तीनांचवृद्धयेभवेथाः॥ प्रार्थने
लिङ्व्यत्ययोबहुलमित्यात्मनेपदम् ॥ यद्यपिवित्तंधनमितिपर्यायस्तथाप्युपचाराद्गवाश्वादिकंधनशब्देनविवक्षितंवित्तर्द्धयश्चविभवाश्चऐश्वर्याणितैः सहितंधनंगवादिदारादिपत्न्या
दियेषांसम्पदः तासाम् ॥ ३४॥ हेनृपसुरथइतिप्रागुक्तरीत्यादेवैर्जगतोर्थे त्रैलोक्यसंरक्षणप्रयोजनायतथात्मनोर्थेस्वार्थेदेवकार्यार्थे चविषयेप्रसादिताप्रसादसुमुखीकृताभद्रकाली
भद्रासर्वमंगलाकाली रुद्रपत्नी । कर्मधारयः ॥ हेदेवाः तथास्तुयुष्मद्वांछितंवस्तुसिध्यत्वित्युक्त्वांतर्हिताऽभवत् अदृश्याबभूव ॥ ३५ ॥ हेभूपजगत्त्रयहिताषणीसादेवीदे
वशरीरेभ्योयथापुरापूर्वं तेजोरूपासंभूतामहिषासुरवधायप्रादुरभूदित्येतत्सर्वंतेतुभ्यंमयाकथितम् ॥ श्लोकद्वयमेकान्वयम् ॥३६ ॥३७॥ शृणुष्वेतिपदद्वयम् ॥ हेस्वआत्मी

ऋषिरुवाच ॥ इतिप्रसादितादेवैर्जगतोर्थेतथात्मनः ॥ तथेत्युक्त्वाभद्रकालीबभूवांतर्हितानृप ॥ ३५ ॥ इत्येतत्कथितंभूपसंभूतासायथापुरा ॥
देवीदेवशरीरेभ्योजगत्त्रयहितैषिणी ॥ ३६ ॥ पुनश्चगौरीदेहात्सासमुद्भूतायथाभवत् ॥ वधायदुष्टदैत्यानांतथाशुंभनिशुंभयोः ॥ ३७ ॥ रक्षणाय
चलोकानांदेवानामुपकारिणी ॥ तच्छृणुष्वमयाख्यातंयथावत्कथयामिते ॥३८॥ इति श्रीमार्कंडेयमहापुराणेदेवीमाहात्म्यएकाशीतितमोऽध्यायः
॥ ८१ ॥ छ ॥ ॥ ऋषिरुवाच ॥ पुराशुंभनिशुंभाभ्यामसुराभ्यांशचीपतेः ॥ त्रैलोक्यंयज्ञभागाश्चहृतामदबलाश्रयात् ॥ १ ॥ तावेवसूर्यतांतद्व
दधिकारंतथैंदवम् ॥ कौबेरमथयाम्यंचचक्रातेवरुणस्यच ॥ २ ॥

यसुरथसाप्रसिद्धादेवानामुपकारिणीदेवीपुनश्चदुष्टदैत्यानांधूम्रलोचनचण्डमुण्डादीनांवधायच तथाशुंभनिशुंभयोर्वधायलोकानांरक्षणायचगौर्या देहात्समुद्भूताऽभवदासीत् तत्सर्वं
यथावद्यथार्थंयावत्तेतुभ्यंकथयाम्यहंयथावद्यावत्प्रकारेणाख्यातंमयाकथितंशृणु ॥ शृणुष्वेतिपाठेव्यत्ययोबहुलमित्यात्मनेमदम् ॥ शुंभभाषणेहिंसायांचभ्वादिः ॥ शुंभति
भाषतेहिनस्तिवाशुंभः दंत्यादिरयम् ( ? ) ॥तालव्यादिपाठेतुशुभशुंभशोभार्थेतुदादिः ॥ शुंभतिशोभतेरणेष्विवतिशुंभः यथाप्रकारवद्यथावत्क्रियाविशेषणम् ॥३८॥ इतिश्री
मद्राजाधिराजतोमरान्वयश्रीमदुद्धरणात्मजशंतनुविरचितायांशांतनव्यांदेवीमाहात्म्यटीकायांशक्रादिस्तुतिर्नामैकाशीतितमोऽध्यायः ॥ ८१ ॥ ॥ हेराजन्पुरापूर्वस्मिन्
कल्पेशुंभनिशुंभाभ्यामसुराभ्यांद्वाभ्यांकर्मभ्यांमदबलाश्रयात्मदेनगर्वेणसहितंबलंसामर्थ्यंयस्याश्रयणंतस्माद्धेतोः॥शचीपतेरिंद्रस्यइन्द्राद्वासकाशात्त्रैलोक्यंहृतंगृहीतं यज्ञभागा
श्चहृताःयज्ञविधिविहितिद्वारा ॥ हर्षेगर्वेमदेक्षब्येगजदानेचकीर्त्तितः ॥ स्थौल्यसामर्थ्यसैन्येषुबलंनाकाकसीरिणोः ॥ १ ॥ तौशुंभनिशुंभावेवकामरूपत्वात्सूर्यरूपतांचक्राते

सूर्याधिकारहरणात्सूर्यभावमिवऐंद्रवमिन्दुसंबंधिनमधिकारमाधिपत्यंतावेवचक्राते ॥ तथातावेवकौबेरसंबंधिनमधिकारंचक्राते ॥ तावेवयाम्यंयमाधिकारं तथातावेववरुण स्याधिकारंचक्राते ॥ याम्यमितिदित्यदित्यादित्यपत्युत्तरपदाण्ण्यइत्यत्रप्राग्दीव्यतीयेष्वर्थेषुयमाच्चेतिवक्तव्यमितिण्यः ॥ सूर्याद्यधिकारान्तावेवाग्रहीष्टामित्यर्थः ॥ २ ॥ तावेवासुरौपवनस्यवायोर्ऋद्धिमस्खलितगतिमैश्वर्यंचक्रतुः ॥ तथातावेववह्नेः कर्मव्यापारंचक्रतुः ॥ तावेवान्येषांदिवौकसांदेवानामधिकारानग्रहीष्टाम् ॥ इदमर्धं क्वाप्येवदृश्य ते ॥ ततःताभ्यामसुराभ्यांसकाशतःपराजिताः प्राप्तपराभवाः अतएवभ्रष्टराज्याःभ्रष्टाधिकारादेवाविनिर्धूताःस्वर्गाद्दूरीकृताआसन् ॥ ताभ्यामसुराभ्यांविनिर्धूताः त्यक्ताइ तिभावः ॥ ३ ॥ ताभ्यांशुंभनिशुंभाभ्यांहृताधिकाराअथहृतराज्यानिराकृताःनिरस्ताःसर्वेत्रिदशाःदेवाःतांप्रसिद्धामपराजितांकैरप्यपराभूतांदेवींस्मरंतिस्मस्मृतवंतः ॥ स्मेत्य ध्याहृत्य लट्स्मेइतिलट् । प्रत्यादिष्टोनिरस्तःस्यात्प्रत्याख्यातोनिराकृतः ॥ ४ ॥ अपराजितांनामदेशंगताइत्याह ॥ यथाप्रागुक्तप्रकारेणापत्सुस्मृतासतीतत्क्षणा देव भवतामखिलाः परमापदः नाशयिष्यामीति तयादेव्याऽस्माकंदेवानांवरोदत्तोस्तीतिमतिंकृत्वा चेतसिनिधाय देवाः हिमवंतंनगेश्वरं जग्मुः ययुः ॥ ततः तत्रवि

तावेवपवनर्द्धिंचचक्रतुर्वह्निकर्मच ॥ अन्येषांचाधिकारान्सस्वयमेवाधितिष्ठति ॥ ततोदेवाविनिर्धूताभ्रष्टराज्याःपराजिताः ॥ ३ ॥ हृताधिकारा स्त्रिदशास्ताभ्यांसर्वेनिराकृताः ॥ महासुराभ्यांतांदेवींसंस्मरंत्यपराजिताम् ॥४॥ तयास्माकंवरोदत्तोयथापत्सुस्मृताखिलाः ॥ भवतांनाशयिष्यामि तत्क्षणात्परमापदः ॥५॥ इतिकृत्वामतिंदेवाहिमवंतंनगेश्वरम् ॥ जग्मुस्तत्रततोदेवींविष्णुमायांप्रतुष्टुवुः ॥६॥ ॥देवाऊचुः ॥ ॥ नमोदेव्यैमहादेव्यैशि वायैसततंनमः ॥नमःप्रकृत्यैभद्रायैनियताःप्रणताःस्मताम् ॥७॥ रौद्रायैनमोनित्यायैगौर्यैधात्र्यैनमोनमः ॥नमोजगत्प्रतिष्ठायैदेव्यैकृत्यैनमोनमः ८

ष्णुमायांदेवींप्रतुष्टुवुः प्रकर्षेणभक्तिपूर्वंस्तुतवंतः ॥ विष्णुमायामहामायेतिपर्यायौ ॥ अथवा ॥ वेवेष्टिविष्णुःमानंमायः विष्णुर्मायोमानंपरिमाणंयस्याः सामर्वव्यापिकेत्यर्थः। ॥५॥६॥ शिवायैमंगलहेतवेभवान्यैनमः ॥ पुंयोगेतुशिवस्यस्त्रीशिवा ॥ प्रकृतिःजगत्कारणंसत्त्वरजस्तमसांसाम्यावस्था ॥ यद्वा ॥ अंगमंत्रापेक्षयामूलमंत्रमात्रात्मिकादेव ताप्रकृतिः ॥ यद्वा ॥ प्रत्ययात्पूर्वा प्रकृतिः॥ यदाहुः ॥प्रकृतिःपार्वतीसाक्षात्प्रत्ययस्तुमहेश्वरः॥अर्द्धनारीश्वरःशब्दःकामधुग्वःप्रसीदत्वितितस्यैनमः ॥ भद्रायैनमः ॥ भद्रा सर्वमंगलाभद्ररूपेत्यर्थः ॥ तांप्रसिद्धामस्मद्वरदामंबांनियताजितेंद्रियाःप्रणतानम्रीभवामः ॥ स्मशब्दःपूरणेऽव्ययम् ॥ नियत्यैप्रणतात्मनामितिपाठेभक्तिप्रह्वस्वभावानांपुंसांनि यत्यैदिष्ट्यैनमःभाग्यरूपायैइत्यर्थः ॥ दैवंदिष्टंभागधेयंभाग्यंस्त्रीनियतिर्विधिः ॥ ७ ॥ रुद्रस्येवरौद्रमुग्ररूपमस्त्यस्याःरौद्रातस्यैनमः ॥ रौद्रशब्दादर्शआदित्वादच् ॥ नेर्ध्रुवे त्यप् ॥ नित्यायैकालावस्थितायै ॥ गुरीउद्यमेतुदादिरनुदात्तेत्।गुरतेगुरइगुपधत्वात्कः ॥ गुरएवगौरःस्वार्थेण् ॥ स्त्रियांङीप्॥यद्वावर्णवाचित्वेनरूढत्वात् षिद्गौरादिभ्यश्चेतिनि

पतनात्साधुत्वेङीष् ॥ गौर्य्यैपार्वत्यैनमः॥गौरीगौरवर्णयोगात् ॥ यद्वा ॥ गुङ्अव्यक्तेशब्देअतःउणादौकज्रेन्द्राग्रेत्यादिसूत्रेणरनिवृद्धौनिपातितायांगवतेगौरः॥गौरोरुणेसिते पीते ॥ धात्र्यैधरण्यैनमः ॥ उपमात्र्यैवा ॥ धात्रीस्यादुपमातापिक्षितिरप्यामलक्यपि ॥ ८ ॥ ज्योतिःशास्त्रविशेषेस्यात् ज्योतिरक्षरतेजसोः ॥ ज्योतिर्नाभास्करेक्लीबमग्नि खद्योतदृष्टिषु ॥ ज्योतिरस्त्यस्यांतस्यैज्योत्स्नायैनमः ॥ चदिआह्लादने ॥ चन्दतिचन्द्रः॥रूपरूपक्रियायाम् । रूपरूपदर्शनेच । चुरादिः॥ चंद्ररूपयतितच्छीलाचंद्ररूपिणी तस्यैनमः ॥ चंद्रस्यरूपंकरोतिचंद्ररूपिणीतिचव्युत्पत्तिः । सुखदुःखतत्क्रियायांचुरादिः ॥ सुखयतिसुखा पचादित्वादच्तस्यै । कलासुसाधुः कल्या शुभात्मिकावाणी ॥ कल्यामणतिकल्यंनिरुक्तंवाअणतिकथयतिकल्याणीतस्यैनमः ॥ अणधातोःकर्मण्यण् ॥ किंचजगद्भिःऋद्ध्यैमिद्ध्यैचप्रणतांवंदितांजगज्जननींदेवींप्रतिनमःनार्तिकुर्मः कुर्म इतिपाठे प्रणमंतीतिप्रणंतःतेषांप्रणतामितिषष्ठीबहुवचनांतंबोध्यम् ॥ तथाचप्रणतांप्रणमतामृद्ध्यैसिद्ध्यैचनमइत्यलवेश्वरभट्टाः ॥ कूर्म्यैइतिपाठेकूर्मसंबंधिन्यैशक्त्यैनमः ॥ ९ ॥ निष्कांताकृतेःसन्मार्गान्निर्ऋतिःअलक्ष्मीःअन्यायोपार्जितालक्ष्मीः ॥ स्यादलक्ष्मीस्तुनिर्ऋतिः॥ निर्ऋतेःउपमाकृतिर्नैर्ऋतीतस्यैअलक्ष्मीरूपायैशर्वाण्यैशंभुपत्न्यैनमो

ज्योत्स्नायैचंद्ररूपिण्यैसुखायैसततंनमः॥ कल्याण्यैप्रणतामृद्ध्यैसिद्ध्यैकूर्म्यैनमोनमः ॥९॥नैर्ऋत्यैभूभृतांलक्ष्म्यैशर्वाण्यैतेनमोनमः॥ दुर्गायैदुर्गपारायैसारायैसर्वकारिणि ॥ ख्यात्यैतथैवकृष्णायैधूम्रायैसततंनमः॥१०॥ अतिसौम्यातिरौद्रायैनमस्तस्यैनमोनमः ॥ नमोजगत्प्रतिष्ठायैदेव्यैकृत्यैनमोनमः ॥ ११ ॥

नमः ॥ यद्वा ॥ निश्चिताकृतिःसत्यतायेनसनिर्ऋतिः ॥ निर्ऋतेर्दिक्पालस्येयंनैर्ऋतीतस्यैनिर्ऋत्युपार्जितलक्ष्मीरूपायैनमः ॥ अथचभुवंबिभ्रतीतिभूभृतआदिमंडूकादिनागादि कुलपर्वतादिमनुप्रभृतिराजानःतेषांलक्ष्मीरूपायैनमः ॥ शर्वस्यस्त्रीशर्वाणी ॥ इंद्रवरुणेत्यादिनापुंयोगेङीषानुकौ ॥ हेसर्वकारिणिदेवितुभ्यंदुर्गायैसततंनमः ॥ दुःखेनगम्यते दुर्गा ॥ यद्वा ॥ दुःखेनगच्छत्यस्यांदुर्गा ॥ सुदुरोरधिकरणेड्ःइतिवक्तव्यंगमेर्डः ॥ तथाहेदेवितुभ्यंदुर्गपारायै दुर्गपारंयस्याःमहामायाख्यासिंधोःसादुर्गपारा ॥ यद्वा पिपर्त्तिपारा ॥ पृपालनपूरणयोः ॥ यद्वा ॥ दुर्गाःपाराःपारयंतोगणायस्याःतस्यै ॥ हेदेवितुभ्यंसारायै संसारसागरेवरायैश्रेष्ठायैसततंनमः ॥ तुभ्यंख्यात्यैविख्यातिरूपायैसततंनमः ॥ तुभ्यंकृष्णायैकृष्णवर्णायैकालरात्र्यैनमः ॥ हेदेवितुभ्यंधूम्रायैधूम्रवर्णायैनमः॥सर्वंकरोतिसर्वकारिणिसंबुद्धिः ॥ १० ॥सोमाट्ट्यण् ॥ सौम्यंसोमदेवताकंसुंदरंचरूप मत्यर्थंसौम्यंयस्याःसाऽतिसौम्या॥रौद्रदेवताकंरुद्रसंबंधिवारूपंरौद्रमत्यर्थंरौद्रंयस्याःसाऽतिरौद्रा ॥ततश्चभजतामभजतांचयथाक्रममतिसौम्याचासावतिरौद्राचेतिकर्मधारयः ॥ तस्यैवाङ्मोमारूपायैत्रिशक्त्यात्मिकायैनमोनमःइतिशक्तित्रयापेक्षंनमस्त्रयम्॥सोमस्यभावःसौम्यं भावेष्यञ् ॥ रुद्रस्यभावःरौद्रंयुवादित्वाद्भावेअण्॥ अतिक्रांतंसौम्यंययासाऽ

तिसौम्या ॥ अतिक्रांतंरौद्रंययासाऽतिरौद्रा ॥ ततःकर्मधारयेसतितस्यैनमइत्यप्यनुसंधेयम् ॥ जगतांप्राणभृतांप्रतिष्ठाआस्पदमाधारशक्तिःस्थानंतस्यैजगत्प्रतिष्ठारूपायैनमः॥
प्राणिनांप्राणधारणार्थं यत्स्थानंमूलाधारसंज्ञंतत्प्रतिष्ठेत्युच्यते ॥ आस्पदंप्रतिष्ठायामित्यास्पदशब्दपर्यायःप्रतिष्ठाशब्दः॥ दिवुक्रीडादौ ॥ दीव्यतीतिदेवीतस्यैक्रीडाविजिगीषा
पर्थक्रियाकारिण्यैनमः ॥ करणंकृतिःप्रयत्नःसर्गस्थितिप्रत्यवहारविषयःप्रयत्नोत्रविवक्षितः॥तस्यैप्रयत्नरूपायैनमः॥नमस्यानांत्रित्वादित्वादिहनमस्त्रित्वम् । कर्त्र्यैइतिपाठेतृ
न्नंतत्वाज्जगदितिकर्मविवक्षितम् ॥ जगत्करणशीलायैनमइत्यर्थः ॥ ११ ॥ यादेवीवाङ्मनोमात्मिकासर्वकालेषुकालत्रयात्मिकासर्वभूतेषुभूतात्मिका ॥ अनात्मन्यात्मबुद्धिं
जनयंत्यात्मनिवाऽनात्मबुद्धिंजनयंतीममतावशंवदाँल्लोकान्प्रसूयमानाप्रसर्वजननीमहामायाभगवतीविष्णुमायेतिशब्दिताकथितातस्यैत्रिगुणरूपायैप्रत्येकंकायवाङ्मनोभिः एकस्यै
चैववादेव्यै भक्तिश्रद्धातिशयद्योतनायनमःशब्दोनमस्येनचसहाम्रेडितः ॥ आम्रेडितंद्विस्त्रिरुक्तम्॥चापलेद्विर्वचनम् । संभ्रमेणवृत्तिश्चापलम् । इत्थंहिनपौनरुक्त्यंदोषावहम् ॥
यदुक्तम्॥ प्रहर्षहर्षशोकेषुस्वप्नदैन्यभयेषुच ॥ स्तुत्यभ्यासानुवादेषुपौनरुक्त्यंनदुष्यति॥ सर्वाणिपृथिव्यादीनिभूतानिदेहानि॥इतिप्रथमादेवीविष्णुमाया ॥१२॥ अभिधीय

यादेवीसर्वभूतेषुविष्णुमायेतिशब्दिता॥नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः॥१२॥यादेवीसर्वभूतेषुचेतनेत्यभिधीयते॥ नमस्तस्यैनमस्तस्यैन
मस्तस्यैनमोनमः॥ १३ ॥ यादेवीसर्वभूतेषुबुद्धिरूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥१४॥ यादेवीसर्वभूतेषुनिद्रारूपेणसं
स्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः १५ ॥ यादेवीसर्वभूतेषुक्षुधारूपेणसंस्थिता॥नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥१६॥

तेकथ्यते ॥ चुरादावात्मनेपदंचितसंचेतनेसंवेदनेवा ॥ चेतनंचेतनाबुद्धिरेवेतिकथनंपौनरुक्त्यंयद्यपिवैशेषिकादौदर्शनेतथापिसांख्येबुद्धिधर्मश्चित्तवृत्तिविशेषविजृंभितशक्तिश्चे
तनाइत्याश्रयणादपौनरुक्त्यम्॥ अन्येतुचेतनाचित्तवृत्तिविशेषशक्तिःसंज्ञानंवाबुद्धिस्तुस्वप्रकाशज्ञानस्वभावेत्याहुः ॥ अन्येतुनिर्विकल्पज्ञानंचेतनाबुद्धिस्तद्विशेषावगतिःसवि
कल्पकज्ञानमित्यस्तितयोर्भेदइत्याहुः॥इतिद्वितीयादेवीचेतना ॥१३॥ बुद्धिरित्येवंरूपेणसम्यक्स्थिता॥यदभ्यधुःसंधारणेस्थितौभृत्यौबुद्धिः॥इतितृतीयादेवीबुद्धिः ॥१४॥
निद्रेतिरूपंतस्यैनमः ॥ द्राकुत्सायांनियतंद्रांत्यस्यांनिद्रा संवेशः ॥ भुक्तान्नादिपरिपाकादिहेतुर्निरिंद्रियप्रदेशमलकोशेमनसोवस्थानंनिद्रा ॥ सर्वेंद्रियव्यापारविरतप्राणनंसुखनं
निद्रेत्यन्ये ॥ इतिचतुर्थीदेवीनिद्रा ॥१५॥ क्षुधबुभुक्षायाम् ॥ संपदादित्वाद्भावेस्त्रियांक्विप् ॥ क्षुध्प्रातिपदिकम् ॥ भोक्तुमिच्छाक्षुत् ॥ अशनायाबुभुक्षाक्षुत्तयाक्षुधा ॥
रूपेणेतिपृथक्पदम् ॥ यद्वा ॥ वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोः ॥ हलंतादपिटापंचयथावाचानिशादिशा॥ ततश्चक्षुधेतिरूपंतेनक्षुधारूपेण क्षुधांविनाप्राणिनांसुखंनास्ति

इतिपंचमीदेवीक्षुधा ॥ १६ ॥ छायाप्रतिबिंबरूपासर्वभूतेषुतिष्ठति ॥ नष्टच्छायोमध्याह्नतइत्यत्रतुत्वातपाभावाभावोविवक्षितः ॥ छायासूर्यप्रियाकांतिःप्रतिबिंबमनातपः ॥ प्रतिबिंबेयथामंक्कांतच्छायआदर्शः ॥ छयतिछिनत्तिसंतापंछाया ॥ इतिषष्ठीदेवीच्छाया ॥ १७ ॥ शक्लृशक्तौ शकनंशक्तिःसामर्थ्य वस्तुगतःस्वभावसिद्धोधर्मःशक्तिरितिरूपं तेन ॥ शक्तिः प्रतिवस्तुप्रतिनियतार्थक्रियाकारित्वम् । वस्तुधर्मइत्येके।वस्तुरूपमेवशक्तिर्नतुवस्तुनोन्योधर्मःशक्तिरित्यन्येऽभ्युपजग्मुः ॥ इहतुसर्वभूतेष्वित्याधाराधेयभावानुवादाच्छक्तिर्वस्तुधर्मइत्येषपक्षोऽभ्युपगतः ॥ इतिसप्तमीदेवीशक्तिः ॥ १८ ॥ सर्वाणिभूतानिपृथिव्यादीनियेषांदेहानामारंभकत्वेनसंतितानिसर्वभूतानिदेहाःतेषु ॥ ञितृषापिपासायाम् तृषिशुषिरसिभ्यःकितइतिनः ॥ तृष्णाउपभोगनिमित्तकाभिलाषः ॥ तृष्णाभिलषणंभोगेतृष्णावनपिशाचिका ॥ तृष्णास्पृहापिपासेद्वेतद्रूपेहांविकास्मृता ॥ तर्षणं तृष्णास्पृहानिरूढलक्षणत्वात ॥ इत्यष्टमीदेवीतृष्णा ॥ १९ ॥ क्षमूषसहने षित्वात्स्त्रियांक्षमा ॥ बाहुलकात्तुक्तिनिक्षांतिः ॥ अनुनासिकस्यक्विझलोःक्ङितीतिदीर्घः ॥

यादेवीसर्वभूतेषुच्छायारूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥१७॥ यादेवीसर्वभूतेषुशक्तिरूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥ १८ ॥ यादेवीसर्वभूतेषुतृष्णारूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥ १९ ॥ यादेवीसर्वभूतेषुक्षांतिरूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥ २० ॥ यादेवीसर्वभूतेषुजातिरूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥२१॥ यादेवीसर्वभूतेषुलज्जारूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥ २२ ॥ यादेवीसर्वभूतेषुशांतिरूपेणसंस्थिता ॥नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः॥२३॥यादेवीसर्वभूतेषुश्रद्धारूपेणसंस्थिता॥नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः॥२४॥

क्षांतिःक्षमातितिक्षामर्षामहार्थकाः ॥ शांतिस्तृष्णाविरोधनीपरप्रयुक्तापकारंप्रत्युपेक्षाप्रतिकूलवेदनांप्रत्युपेक्षा ॥ इतिनवमीदेवीक्षांतिः ॥ २० ॥ नित्यैकानुगतप्रत्ययहेतुरनेकसमवायिनीजातिः ॥ इतिदशमी ॥ २१ ॥ ओलस्जीव्रीडायाम् । स्त्रियां गुरोश्चहलइत्यप्रत्ययः ॥ झलांजशझशीतिजश्त्वं दःश्चुत्वं स्त्रियामजाद्यतष्टाप् ॥ कर्तव्याकरणनिमित्तमकारणनिमित्तमन्यतःस्वतोवाजनितंलज्जनंसंकोचनंलज्जा ॥ इत्येकादशी लज्जा ॥ २२ ॥ शमउपशमे ॥ स्त्रियांक्तिन् ॥ क्षांतिवद्दीर्घः ॥ शमथुस्तुशमःशांतिः ॥ काममक्रोधाद्यभावः ॥ विकृतेंद्रियनिवृत्तिःशांतिरित्यन्ये ॥ विषयव्यावृत्तात्मतेत्यपरे ॥ इतिद्वादशीशांतिः ॥ २३ ॥ डुधाञ्धारणपोषणयोः ॥ श्रच्छब्दस्योपसंख्यानमित्युपसर्गसंज्ञा ॥ आतश्चोपसर्गेइतिकः स्त्रियांटाप् ॥ श्रद्धनम् श्रद्धा । सम्प्रत्ययःस्पृहा । संप्रत्ययोभक्त्यतिशयःश्रद्धयापरयोपेतइतिवत् ॥ शास्त्रोक्तार्थाविपरीत

बुद्धिः श्रद्धेत्यन्य ॥ आदरेणानु[illegible]कः श्रद्धात्वास्तिक्यबुद्धिरित्यपरे ॥ इतित्रयोदशीश्रद्धा ॥ २४ ॥ कमुकांतौ ॥ कमेर्णिङ् ॥ आयादयआर्धधातुकेवा ॥ [illegible] ॥
अनुनासिकस्यक्विझलोःक्ङितीतिदीर्घः ॥ शोभाकांतिः ज्योतिःस्वरूपोज्ज्वलतेत्याहुः ॥ इतिचतुर्दशीकान्तिः ॥ २५ ॥ लक्षदर्शनांकनयोःचुरादिः ॥ लक्षेर्मुट्चेतिईर्मुडागमश्च ॥ नेड्व
शिकृति ॥ णेरनिटीतिणिलोपः ॥ लक्ष्मीःसाविभूतिश्वकायशोभाच ॥ इतिपंचदशीलक्ष्मीः ॥ २६ ॥ धृञ्धारणेभ्वादिःस्त्रियांक्तिन् ॥ धृतिःस्याद्धारणेधैर्येसौख्यसंतोषयोरपिइतिषोड
शीधृतिः ॥ २७ ॥ वृतुवर्त्तनेस्त्रियांक्तिन् ॥ वर्त्तनंवृत्तिः वर्त्ततेऽनयावृत्तिः ॥ आजीवोजीविकावार्त्तावृत्तिर्वर्तनजीवने ॥ वृत्तिर्जीवनोपायः ॥ युक्तेक्ष्मादावृतेभूतंप्राण्यतीतसमेत्रिषु ॥ भूतं
क्लीबेग्रहेयुक्तेपृथिव्यादावृतेपिच ॥ इतिसप्तदशीवृत्तिः ॥ २८ ॥ स्याचिंतास्मृतिराध्यानम् ॥ अनुभूतस्यभावनाख्यसंस्कारहेतुकोज्ञानविशेषःस्मृतिः ॥ इत्यष्टादशीस्मृतिः ॥ २९ ॥

यादेवीसर्वभूतेषुकांतिरूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥ २५ ॥ यादेवीसर्वभूतेषुलक्ष्मीरूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥ २६ ॥ यादेवीसर्वभूतेषुधृतिरूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥ २७ ॥ यादेवीसर्वभूतेषुवृत्तिरूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥ २८ ॥ यादेवीसर्वभूतेषुस्मृतिरूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥ २९ ॥ यादेवीसर्वभूतेषुदयारूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥ ३० ॥ यादेवीसर्वभूतेषुनीतिरूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥ ३१ ॥ यादेवीसर्वभूतेषुतुष्टिरूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥ ३२ ॥ यादेवीसर्वभूतेषुपुष्टिरूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥ ३३ ॥ यादेवीसर्वभूतेषुमातृरूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥ ३४ ॥ यादेवीसर्वभूतेषुभ्रांतिरूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥ ३५ ॥ इन्द्रियाणामधिष्ठात्रीभूतानामखिलेषुया ॥ भूतेषुसततंव्याप्त्यैतस्यैदेव्यैनमोनमः ॥ ३६ ॥

दयरक्षणे ॥ षिद्भिदादिभ्योङ् ॥ दय्यतेऽनयादया ॥ परदुःखप्रहाणेच्छापरदुःखसमभागकत्वंवादया ॥ इत्येकोनविंशीदया ॥ ३० ॥ नीतिर्नयःइतिविंशीदेवीनीतिः ॥ ३१ ॥
तुषप्रीतौ ॥ तुष्टिःप्रीतिरानन्दः ॥ विषयभोगमवाप्यतदभिलाषोपरमःतुष्टिरित्यपरे ॥ अन्येतुविषयोपभोगंप्राप्यतदभिलाषतस्तदवाप्यप्रानंपरमंसुखमित्याहुः ॥ इत्येकविं
शीतुष्टिः ॥ ३२ ॥ पुषपुष्टौ ॥ पुष्टिरवयवोपचयः ॥ इतिद्वाविंशीपुष्टिः ॥ ३३ ॥ मात्यस्यांगर्भइतिमाता ॥ जनयित्रीप्रसूर्माता ॥ यद्वा ॥ मानपूजायाम् ॥ मान्यतेपूज्यतेमाता ॥
उणादौ नप्तृनेष्टृत्वष्टृ इत्यादिसूत्रेणनिपात्यते ॥ यद्वा ॥ अष्टौमातृनाम्न्यआद्याःशक्तयः ॥ याःविनाभूतसृष्टिरेवनघटते ॥ ब्राह्मीमाहेश्वरीचैंद्रीवाराहीवैष्णवीतथा ॥ कौमारीच
र्मचामुण्डाचकालीसंकर्षणीतिच ॥ इतित्रयोविंशीमाता ॥ ३४ ॥ भ्रांतिर्मिथ्यामतिर्भ्रमः ॥ अतस्मिंस्तदितिज्ञानंभ्रांतिः ॥ इतिचतुर्विंशीदेवीभ्रांतिः ॥ ३५ ॥ इत्थंविष्णुमाया

दिमूर्त्तयोदेव्याःसर्वभूतेषुवर्त्तमानाभ्रांत्यंताःचतुर्विंशतिःप्रदर्शिताः॥ यादेवीभूतानांपृथिव्यादीनांपंचानामधिष्ठात्रीआधारशक्तिःस्वामिनीईश्वरीव्यापिनीयाचदेवीअपरेष्वखिले
षुभूतेषुविशिष्टेषुप्राणिषुवर्त्तमानानांभूतानांप्राणिनामिन्द्रियाणांमनोनेत्ररसनघ्राणश्रोत्रत्वक्कर्मणांवाधिष्ठात्रीतस्यैव्याप्तिरूपायैसततंनमोनमः ॥ एतेनसर्वगतत्वमुक्तंदेव्याः ॥
॥ ३६ ॥ चिञ्चयने ॥ चयनंचितिरविकारताकूटरूपतातद्रूपेण ॥ यद्वा ॥ चितीसंज्ञाने॥स्त्रियामिकृकृष्यादिभ्यइतिइक्प्रत्ययः ॥ चेतनंचितिः।संज्ञानरूपेण यादेवीएतत्
कृत्स्नमखिलंजगद्व्याप्यस्थिता तस्यैनमोनमः॥ पुनःपुनर्नतेरनेककर्तृकत्वादनेकस्तोतृकत्वाच्चनपौनरुक्त्यंयमार्थशाब्दंवाशंकनीयम् ॥ ३७ ॥ पूर्वपुराकल्पेसुरैःस्तुतातथाभीष्ट
संश्रयादभीष्टस्यवस्तुनः संश्रयात्कारणात् सुरेंद्रःशक्रःईशःशंकरःदिनेशःसूर्यःतैःसेविता ॥ अतएवभद्रमणतिभद्राणीअस्तुभद्रमितिकथयती ॥ अतएवशुभहेतुः साई
श्वरीनोस्माकंदेवानांशुभानिमंगलानिकरोतु ॥ किंच नःअस्माकमापदश्चविरोधिजनितदुःखानिचाभिहंतु ॥ सुरेंद्रेणदिनेषुसेवितेतिपाठेसुरेंद्रेणशक्रेणदिनेषुप्रत्यहंसेविता ॥

चितिरूपेणयाकृत्स्नमेतद्व्याप्यस्थिताजगत् ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥ ३७ ॥ स्तुतासुरैःपूर्वमभीष्टसंश्रयात्तथासुरेन्द्रेणदिने
शसेविता ॥ करोतुसानःशुभहेतुरीश्वरीशुभानिभद्राण्यभिहंतुचापदः ॥ ३८ ॥ यासांप्रतंचोद्धतदैत्यतापितैरस्माभिरीशाचसुरैर्नमस्यते ॥ याच
स्मृतातत्क्षणमेवहंतिनःसर्वापदोभक्तिविनम्रमूर्तिभिः ॥३९॥ ॥ ऋषिरुवाच ॥ ॥ एवंस्तवाभियुक्तानांदेवानांतत्रपार्वती॥स्नातुमभ्याययौतोयेजाह्न
व्यानृपनंदन॥ ४० ॥ साऽब्रवीत्तान्सुरान्सुभ्रूर्भवद्भिःस्तूयतेत्रका ॥ शरीरकोशतश्चास्याःसमुद्भूताब्रवीच्छिवा ॥ ४१॥

शुभानिभद्राणीतिच्छेदे यानिनःशुभानिजगद्धितानिकर्माणिप्रार्थनीयानितानिभद्राण्यनुकूलानिअबाधानिअविघ्नानिकरोत्वित्यर्थः ॥ अभीष्टसंश्रयेतिपाठे ॥ अभीष्टःवांछितं
संश्रियमाणःसंश्रयइत्यर्थोयस्याःसकाशाद्भवतिसा ॥ ३८ ॥ सादेवीनःशुभहेतुरित्युक्तंसाकेत्याह ॥ यादेवीसांप्रतमिदानीमुद्धतदैत्यतापितैः निर्मर्यादैर्बलोल्बणैःदैत्यैःशुंभा
दिभिःतापितैःसंतापितैरस्माभिःसुरैरीशास्वामिनीनमस्यतेसेव्यते॥यादेवीभक्तिनम्रमूर्तिभिःसुरैःस्मृताचस्मृतैवसतीतत्क्षणएवनोस्माकंसर्वाआपदःहंति॥ सर्वापदोयतःस्युःतान्स
र्वापदःशत्रून्वा॥ईशापचाद्यचइगुपधज्ञाप्रीकिरःकोवा॥ सांप्रतमव्ययम्॥भक्त्याविनम्रामूर्त्तयःकायायेषांतैः॥नमस्यतइतिनमोवरिवश्चित्रङःक्यच्॥ नमसःपूजायांभावकर्मणोः
सार्वधातुकेयक् यस्यहलःक्यस्यविभाषेतियलोपः ॥३९॥हेनृपनन्दनहेसुरथएवमित्थंस्तवाभियुक्तानांस्तुतिपराणांदेवानामग्रतः तत्रहिमाद्रौपार्वतीदेवीजाह्नव्यागंगायाःतोये
स्नातुंजलक्रीडांकर्त्तुमभ्याययौ ॥ ४० ॥ सादेवानामग्रतःकिंकृतवतीत्याह ॥ सासुभ्रूःपार्वतीतान्देवान्पृष्टवती। किं हेसुराःअत्रहिमवतिपर्वतेभवद्भिःकास्तूयतेइति॥शोभनेभ्रु

वौयस्याःसा ततःतांपार्वतींप्रतितावद्देवैरेवोत्तरदानमुचितम्।किंतुततःप्रागेवतस्याःशरीराद्विनिर्गत्यशिवामायादेवींपार्वतींप्रत्याह ॥ इयंब्रह्मादिसर्वदेवमयीशिवानामायाशक्तिरव
सेया ॥ तथाहि ॥ अस्याःपार्वत्याःशरीरंकोशःइवशरीरकोशःततउद्भूताशिवादेवीपार्वतींप्रत्यब्रवीत् ॥ कोशोस्त्रीकुड्मलेखड्गपिधानेर्थौघदिव्ययोः ॥ ४१ ॥ ४२ ॥ किम
ब्रवीत्तदाह ॥ शुंभेनप्रत्यादिष्टैःसमस्तैर्देवैःममएतत्स्तोत्रंक्रियतेइत्यब्रवीत् ॥ यद्यस्मात्तस्याःपार्वत्याःशरीरकोशादंबिकानिःसृतानिर्गता ततःकारणात्समस्तलोकेषुकौशि
कीतिगीयतेकथ्यते ॥ कोशेनव्यतिनिर्गमनात्कौशिकी ॥ तेनदीव्यतीतिठक् ॥ यद्वा ॥ कोशाद्यानिर्गतासाकोशेनिर्वृत्तैवेति निर्वृत्तेक्षद्यूतादिभ्यइतिठक् ॥ ४३ ॥ साभगव
तीपार्वत्यपिस्वशरीरकोशात्तस्यांसर्वदेवतेजोमय्यांकौशिक्यांविनिर्गतायांसत्यांकृष्णाभूत्कृष्णवर्णासमजनिष्ट । ततश्चसापार्वतीकालिकेतिसमाख्यातासतीहिमाचलेकृताश्रयाकृ
तनिलयाभूत् ॥ कृष्णवर्णार्थात्कालशब्दात्तद्वतिवर्तमानात्संज्ञायांजानपदसूत्रेणङीष् ॥ संज्ञायांकन् ॥ केणइतिह्रस्वः ॥ कालीहैमवतीश्वरी॥ इहमहामायादेवकार्यार्थं

स्तोत्रंममैतत्क्रियतेशुंभदैत्यनिराकृतैः॥देवैःसमस्तैःसमरेनिशुंभेनपराजितैः ॥४२॥ शरीरकोशाद्यत्तस्याःपार्वत्यानिःसृतांबिका॥कौशिकीतिसम
स्तेषुततोलोकेषुगीयते ॥४३॥तस्यांविनिर्गतायांतुकृष्णाभूत्सापिपार्वती ॥ कालिकेतिसमाख्याताहिमाचलकृताश्रया ॥४४॥ततोंबिकांपरंरूपंबि
भ्राणांसुमनोहरम् ॥ ददर्शचंडोमुंडश्चभृत्यौशुंभनिशुंभयोः ॥ ४५ ॥ताभ्यांशुंभायचाख्याताअतीवसुमनोहरा ॥ काप्यास्तेस्त्रीमहाराजभासयंती
हिमाचलम् ॥ ४६ ॥

विष्णुयोगनिद्राभूत् । ततःपार्वत्यभूत्ततःकौशिक्यभूत्तस्मादेवकृतस्तुतिमंगीकर्तुंततःकालिकाभूत्सैवांबिकानामेत्याह ॥ ४४ ॥ ततोनंतरम् ॥यद्वा ॥ ततःतत्रहिमाचले आया
दित्वात्तसिः ॥ शुंभनिशुंभयोःभृत्यौसेवकौचंडोमुंडश्चतौपरमतितरांसुमनोहरंरूपंबिभ्राणामंबिकांकालिकाख्यांपार्वतींददर्श ॥ सुमनोहरामितिपाठेदेवीविशेषणम् ॥ चडिकोपे
चंडतेचंडः ॥ मुडिखंडने मुंडतेमुंडयतिमुंडः ॥ ४५ ॥ सारूपवतीकालिकादेवीताभ्यांचंडमुंडाभ्यांशुंभायआख्याताचशुंभसमक्षमुक्ता ॥ किं हेमहाराज शुंभदैत्येश्वरसमधि
गतसर्वैश्वर्य सावधानोभव ॥ अतीवसुमनोहराकापिस्त्रीआस्ते किंकुर्वती हिमाचलंभासयंती स्वयंश्यामाश्यामाभिःशोभाभिरदभ्रशुभ्रशोभाढ्यंहिमाद्रिंपार्वतीआस्ते ॥ आख्या
ताअतीवेत्यत्रवैवक्षिकंसंधिकार्यम् ॥शुंभायेतिक्रियाग्रहणंकर्तव्यमितिसंप्रदानत्वंपत्येशेतेइतिवत्॥सुष्ठुमनोहरतिसुमनोहरा॥हरतेरनुद्यमनेच्॥यद्वा॥इःकामःवसुनिधनेयेषांतेइव
सवः कामधनाःतेषांमनःहरतिइतिइवसुमनोहरा अत्यर्थमृइवसुमनोहराइत्यंबिकांप्रत्यनिष्टोर्थःतस्याःपातिव्रत्यभंगप्रसंगात्॥ इष्टोर्थस्त्वेषःशोभनंमनोयस्यसुमनाःशंभुस्तंहरति

अर्धांगहरत्वात्सुमनोहरा॥अतितरांसुमनोहरा ॥ यद्वा॥पैओवै शोषणे। इंकामं वायतिशोषयतिइवःशिवः॥यद्वा॥इंकामंवातिगच्छतिइवःशिवः॥आतोनुपपसर्गेकः॥इवस्यसुम
नोहरा अत्यधिकंसुमनोहराअतीवसुमनोहरा ॥ यद्वा ॥ इश्चकामःईचलक्ष्मीःवसवश्चाष्टौईवसवः अतिक्रांतईवमून्अतीवसुःशंभुःतस्यमनोहरा ॥ ध्रुवोधरश्चसोमश्चह्यापश्चैवा
निलोनलः ॥ प्रत्यूषश्चप्रभासश्चवसवोष्टौध्रुवादयः ॥ ४६ ॥ हेअसुरेश्वरशुंभक्वचिदपिभुवनेकेनाचिदपिपुंसाताहक्त्वाहशमुत्तममतिसुंदररूपमाकरःनैवालोकि ॥ असौकापिदे
वस्त्री ॥ यद्वा ॥ कापिकृताभिषेकाराज्ञीइति त्वयाज्ञायताम् ॥ अथत्वयासौ गृह्यतामुपादीयतांचेतिअंबिकांप्रतिअनिष्टोन्वयः ॥ इष्टस्त्वेषः—ताहगुत्तमंक्वचिद्रू
पंज्ञानरूपंकापि केनचिद्दृष्टं न तस्मादसौदेवीकापिपरदेवताइतित्वया ज्ञायताम् ॥ असौकापिस्त्रीअबलास्तीतिनैवज्ञायताम् ॥ अपित्वसौदेवीगृह्यतांचात्मसंरक्षणार्थम्
आश्रीयतामिति हितोपदेशः शुंभंप्रतिताटस्थ्येन ॥ ४७ ॥ हेदैत्येंद्र त्विषादीप्त्यादिशःदशापिककुभःद्योतयंतीअंगकांत्या भासयंती ॥ अतिचार्वंगी अत्यंतंचा
रुमनोहरमंगं यस्याः सा ॥ स्त्रीरत्नं रत्नंहि मनोहरत्वेनोत्कृष्टंसापुनरुत्कृष्टातिष्ठतितांभवान्द्रष्टुमर्हतीत्ययमंबिकांप्रत्यनिष्टोन्वयः ॥ इष्टस्त्वेषः—हेदैत्येंद्रसानूनस्त्री

नैवताहक्क्वचिद्रूपंदृष्टंकेनचिदुत्तमम् ॥ ज्ञायतांकाप्यसौदेवीगृह्यतांचासुरेश्वर ॥ ४७ ॥ स्त्रीरत्नमतिचार्वंगीद्योतयंतीदिशस्त्विषा ॥ सातुतिष्ठतिदै
त्येंद्रतांभवान्द्रष्टुमर्हति ॥ ४८ ॥ यानिरत्नानिमणयोगजाश्वादीनिवैप्रभो ॥ त्रैलोक्येतुसमस्तानिसांप्रतंतानितेगृहे ॥ ४९ ॥ ऐरावतःसमानीतोगज
रत्नंपुरंदरात् ॥ पारिजाततरुश्चायंतथैवोच्चैःश्रवाहयः ॥ ५० ॥

रत्नंसानूनमतिचार्वंगीकिंतया तेकृतंस्यात् तांभवान् द्रष्टुमर्हति ॥ यः तांदोषबुद्ध्यापश्येन्नश्येत्सतदैवतस्मात्तांद्रष्टुंभवान्मायततामितिशुंभंप्रतिताटस्थ्येनहितोपदेशः ॥
रमंतेस्मिन्नरारत्नंरत्नमितिप्रख्यातमणावेवनकेवलम् ॥ जातौजातौयदुत्कृष्टंतद्रत्नमभिधीयते ॥ ४८ ॥ हेप्रभोशुंभयानित्रैलोक्येगजाश्वादीनितत्तज्जातिप्रधानान्युत्कृ
ष्टानिरत्नानितथापद्मरागादयोमणयः रत्नानितानिसमस्तानिसांप्रतमधुनातेतवगृहेवर्त्ततेवैप्रसिद्धमेवैतत् ॥ ताटस्थ्येपिप्रायेणैषोन्वयः ॥ हेप्रभोत्वंदूतवचनात्तामानयितुंयते
थाश्चेत्तर्हियानित्रैलोक्येगजाश्वादीनिवैप्रसिद्धानिमणयश्चरत्नानिसंप्रतितेगृहेसंतितद्दर्शनोत्तरकालंतु न स्युः ।किंतु त्रैलोक्ये एव तानि यथास्थानंस्युरितिहितोपदेशः ॥
गजाश्वादिशब्दविवक्षितरत्नजातानिनामतोनिर्दिशति ॥ ४९ ॥गजोरत्नमितिपाठःउत्तरत्ररत्नप्राधान्यसूचनार्थः ॥ गजरत्नमित्यपिपाठे रत्नानीतिवक्ष्यमाणरत्नोपसंहारव
शात्सर्वत्ररत्नोपक्रमोप्यवगंतव्यः ॥ यःपुरंदरादैरावतोगजःसमानीतःतद्गजरत्नं तेगृहेवर्ततेनिर्दिश्यमानप्रतिनिर्दिश्यमानयोरेकत्वमापादयंतिसर्वनामानिपर्यायेण तल्लिंगभांजिभ

वंतिएतिभ्राम्यत्यनयेतीरातद्वान्इरावान्सुरासमुद्रः तत्रजातऐरावतः ॥ पुराण्यरीणांदारयतिपुरंदरः ॥ गजइतिरत्नंगजरत्नम् ॥ अयंचयः पुरंदरा [illegible]
तेगृहेवर्त्तते ॥ पारिणःपारवतोअब्धेर्जातः पारिजाताख्यस्तरुः ॥ तथापुरंदरादेवयः उच्चैःश्रवाहयः समानीतः तद्धयरत्नंतेगृहे ॥ उच्चैःश्रवसीयस्यसउच्चैश्रवाः ॥ ५० ॥ हेप्रभो
यत्वेधसः ब्रह्मणः अद्भुतमाश्चर्यकारिविमानमासीत हंसयुक्तंरत्नभूतंरत्नत्वंप्राप्तंविमानमिहानीतंतत्तेगृहेतेंगणेतिष्ठति ॥ विविक्तंमांतिवर्त्ततेयत्रदेवाः विमानम् ॥ व्योमयानंविमा
नोस्त्री ॥ ५१ ॥ धनेश्वरात्कुबेरायएषमहापद्मोनामानिधिः समानीतः तदेतन्निधिरत्नं तेगृहेवर्तते ॥ हेप्रभोतुभ्यमब्धिः समुद्रःकिंजल्किनीमविशीर्णकेसराम् अवयवगतधर्मः
केसरवत्त्वंमालयाअपिपंकजारब्धत्वादवयवावयव्यभेदोपचारात्प्राप्नुवंतीकर्णस्थकुंडलेनकुंडलीतिवत्किंजल्किनीत्युक्तम् सर्वदाऽम्लानपंकजामशुष्ककमलां मालां ददौ ॥
उपचारतः किंचिज्जलतिजडीभवतिकिंजल्कः ॥ ५२ ॥ हे प्रभो यद्वारुणंवरुणसंबंधिकांचनस्राविछत्रंछत्ररत्नंतवगेहेतिष्ठतिनान्यत्र ॥ कांचनंसुवर्णंस्रवतिकांच
नस्रावीतिव्याख्यानमुत्कर्षाभावादुपेक्षणीयम् ॥ यस्यगेहेनिधयःसंतितस्यस्वर्णस्राविणाछत्रेणार्किंस्यात् ॥ कस्तर्हिविग्रहः ॥ कांत्याकांचनंस्वर्णंस्रवतीववर्षतीव ॥ यद्वा ॥

विमानंहंससंयुक्तमेतत्तिष्ठतितेंगणे ॥ रत्नभूतमिहानीतंयदासीद्वेधसोद्भुतम् ॥ ५१ ॥ निधिरेषमहापद्मःसमानीतोधनेश्वरात् ॥ किंजल्किनींददौ
चाब्धिर्मालामम्लानपंकजाम् ॥ ५२ ॥ छत्रंतेवारुणंगेहेकांचनस्रावितिष्ठति ॥ तथायंस्यंदनवरोयःपुरासीत्प्रजापतेः ॥ ५३ ॥

कांत्याकांचनवर्षीकल्पवृक्षः ॥ यद्वा ॥ कांचनकांतिमिवकांतिंस्रवति ॥ यद्वा ॥ कांचनस्येवकांतिंस्रवतिकांचनस्रावि ॥ पृषोदरादित्वादीप्सितसिद्ध्याकांति
शब्दलोपः ॥ यद्वा ॥ काचिदीप्तिबंधनयोः कंचनंदीप्तिः प्रभा ॥ कंचनमेवकांचनम् कांचनंदीप्तिःप्रभा ॥ अन्येषामपिदृश्यतइतिदीर्घःपूरुषवत् कांचनंदीप्तिंस्रवतित
च्छीलम् ॥ लावण्यस्राविमुखमितिवदुत्प्रेक्षितमेतत ॥ कांचनंनामवैदिकनिघंटुनःस्वार्णिकमंभःस्रवतीतितुव्याख्यानंकुशकाशाक्लंबनम् ॥ अथद्वितीयोन्वयः ॥ हेप्रभो
यद्वारुणंछत्ररत्नंकांचनस्रावितेगृहेस्ति ॥ कांचनस्रावीति सप्तम्येकवचनं गृहेइत्यस्यविशेषणम् ॥ स्रुगतौहेतुमतिचेतिणिच्ण्यंतात्क्विप्ण्यल्लोपावियङ्यण्गुणवृ
द्धिदीर्घेभ्यःपूर्वविप्रतिषेधेनेतिअकृत्वावृद्ध्यावादेशौणिलोपः ॥ ततःप्रत्ययलोपेप्रत्ययलक्षणमितिवृद्धिः । आवादेशस्तुवर्णाश्रयविधौप्रत्ययलक्षणान्नेष्यते ॥ पुंसि कांचना
नांस्त्रौःकांचनानांप्रापयिता नपुंसकेतु ह्रस्वोनपुंसकेप्रातिपदिकस्य एचइग्घ्रस्वादेशेकांचनस्रुत्रपुशब्दवद्रूपं तृतीयादिषुभाषितपुंस्कंपुंवद्गालवस्येतिङौह्रस्वश्चनुम्नभवति ॥
आवादेशः ॥ कांचनस्रावि ॥ पक्षेकांचनस्रुणिगृहे ॥ हेप्रभोस्यंदनवरः अयमितिकोनु यः पुराकल्पेप्रजापतेर्ब्रह्मणःआसीत्तदिदंनामरथरत्नंत्वयासमानीतंस्यं

दनेषुवरःश्रेष्ठः ॥ यानेचक्रिणियुद्धार्थेशतांगःस्यंदनोरथः ॥ ५३ ॥ हेईशस्वामिन्मृत्योरंतकस्ययाशक्तिरुत्क्रांतिदानामत्वयाहृता ॥ भुजिमृङ्भ्यांयुक्त्युकौ ॥ मृत्युःस्त्रीपुंसयोरंते ॥ म्रियंतेस्मिन्नुपस्थितेतेप्राणिनइतिमृत्युः ॥ प्राणिनामायुषांतेयाप्राणाकर्षिणीशक्तिःसाउत्क्रांतिदोत्क्रांतिर्लिंगकायविनिर्गतिः ॥ उत्क्रमणमुत्क्रांतिः तांददाति उत्क्रांतिदा ॥ कामूसामर्थ्ययोःशक्तिर्देवतायामृषावपि ॥ हेशुंभतवभ्रातुः निशुंभस्यापिपरिग्रहेपरिजनेविषयेसलिलराजस्यवरुणस्यपाशःआयुधंवर्तते ॥ पत्नीपरिजनादानमूलशापाःपरिग्रहाः ॥ पाशोबंधनशस्त्रयोः ॥ ५४ ॥ किंचनेतवभ्रातुर्निशुंभस्यगृहेऽब्धिजातारत्नाकरसमुद्भूताः समस्तारत्नजातयश्चउत्तमरत्नीप्रकाराःतिष्ठंति ॥ जातिःसामान्यजन्मनोः ॥ मुक्ताफलविद्रुमहारिन्मणिवज्रपद्मरागाद्यारत्नजातयः ॥ हेशुंभतुभ्यंवह्निश्चापिदेवः अग्निशौचेनामवाससीवसनेददौ ॥ अग्नौनिःक्षेपतःशौचंनिर्मलीकरणंययोस्ते ॥ कल्पवृक्षोपकल्पितं स्वर्णमयमग्निदेवताकमग्निनिक्षेपेणविमलात्मकंवासोयुग्ममग्निशौचंवासः ॥ ५५ ॥

मृत्योरुत्क्रांतिदानामशक्तिरीशत्वयाहृता ॥ पाशःसलिलराजस्यभ्रातुस्तवपरिग्रहे ॥ ५४ ॥ निशुंभस्याब्धिजाताश्चसमस्तारत्नजातयः ॥ वह्निश्चापिददौतुभ्यमग्निशौचेचवाससी ॥ ५५ ॥ एवंदैत्येंद्ररत्नानिसमस्तान्याहृतानिते ॥ स्त्रीरत्नमेषाकल्याणीत्वयाकस्मान्नगृह्यते ॥ ५६ ॥ ऋषिरुवाच ॥ निशम्येतिवचःशुंभःसतदाचण्डमुण्डयोः ॥ प्रेषयामाससुग्रीवंदूतंदेव्यामहासुरः ॥ ५७॥ शुंभउवाच ॥ इतिचेतिचवक्तव्यासागत्वावचनान्मम ॥ यथाचाभ्येतिसंप्रीत्यातथाकार्यंत्वयालघु ॥ ५८ ॥

एवमुक्तरीत्याऐरावतःसमानीत इत्याद्यया हेदैत्येंद्रयद्वा हेदैत्य इंद्ररत्नानिइंद्रादिदेवानामैरावतादीनिरत्नानितुभ्यमाहृतानिउपढौकितानिउपहारीकृतानि ॥एषाचकल्याण्यंविकास्त्रीरत्नंवर्ततेतत्कस्मात्कारणान्नगृह्यते॥ अयंत्वम्बिकांप्रत्यनिष्टोर्थः॥अयंत्विष्टोर्थस्तदस्थोक्तिसमाधिना॥हेदैत्येंद्रयद्यप्येवमैरावतादीनिरत्नानितुभ्यमाहृतानिदेवैःतथाप्येषांविकातवकल्याणीशुभकारिणी न ॥ कुतःयतएषाभगवती ॥ त्वम् अन्यंयातीतित्वया ॥ आतोनुपसर्गेकः॥अन्यगामिनीतिगृह्यतेज्ञायते॥त्वशब्दोन्यवाचीसर्वादिषुपठ्यते॥त्वम्अन्यंमहेश्वरंयातित्वयाऽन्ययाऽन्यपत्नीमहेशपत्नीदैत्यसंहारिणी अतःशुम्भस्यशुभकारिणी न तस्मात्तांर्चिंवात्यजेतिहितोपदेशः ॥ ५६ ॥ महासुरःशुंभःतदाचण्डमुण्डयोरीतिप्रागुपन्यस्तंवचःनिशम्यश्रुत्वासुग्रीवंनामदूतंसंदेशहरंदेव्याःदेवीमुद्दिश्यप्रेषयामास ॥ शाम्यतिर्निपूर्वःश्रवणार्थः ॥ इषगतौ प्रपूर्वःआद्गुणः ॥ देव्याइतिकर्मणिल्यब्लोपेपञ्चमी ॥ दूयतेऽनेनयथोक्तवादित्वात्परिताप्यतेपरइतिदूतः॥५७॥ हेसुग्रीवहेदूतत्वयातत्रगत्वासात्वीममवचनादितिचेतिचइत्थंचेत्थंचसाम्नाभेदेनचोपायेनवक्तव्या ॥

तथैवसासंप्रीत्याहर्षेणलघुक्षिप्रमविलंबमभ्येतिआभिमुख्येनागच्छति तथाकार्यत्वयाविधेयम् ॥ अयंत्वंबिकायामानष्टायः ॥ इष्टत्वयम्—
रूयायतेर्थः ॥ हेदूतत्वयालघुक्षिप्रंतथाकार्यं मदभिप्रायादन्यत्वेनकर्तव्यम्॥तत्कथं यथामयिविषयेऽभियमानंवचनं निंदायेषांतेअवचनाअसुराःतानात्तिउपसं
असुरसंहारिणीत्यर्थः।पुनःकिंभूतांबिका एतिगच्छतिविनश्यतिइततस्मिन्निति शुम्भेनिशुम्भेचविषये ॥ वक्तव्यासावक्तव्यप्रतिक्षेपा।।असुक्षेपणे असनमासः ॥ वक्तव्योवच
नीयःआसःप्रतिक्षेपोन्यक्कारोययासावक्तव्यासा॥पुनःकिंभूता॥मम—ममेत्यव्ययम्।ममशब्दोत्रमायावचनःनिर्ममोयोगीसममःसंसारीतिवत् । मायारूपेत्यर्थः॥पुनःकिंभूता ॥
संप्रीत्याप्रीङ्प्रीतौदिवादिःप्रीतिःप्रीःस्त्रियांसम्पदादित्वाद्भावेक्विप्॥समीचीनाप्रीःप्रीतिर्येषांतेसंप्रियोबुधाः॥ईयतेवश्यंप्राप्यतेतयोरुपासकैरित्यासंप्राप्या॥आदंतरूपम् ॥५८॥
ससुग्रीवोनामदूतः यत्रयस्मिन्नतिशोभनेशैलोद्देशेपर्वतप्रदेशेअसौदेव्यास्तेतिष्ठतितत्रगत्वाततःनदनंतरंतांदेवीं श्लक्ष्णंसमुचितंसंगतंसुकुमारंयथास्यात्तथामधुरयाश्राव्याक्षरपदया
गिरावाचाप्राहच शुम्भोदितसंदेशाभिप्रायगर्भसंदर्भमकथयत ॥ प्राहेतिप्रशब्दउपसर्गप्रतिरूपकोनिपातः॥आहेतितिङन्तप्रतिरूपकमव्ययम् ॥ मामावृत्ति॥श्लक्ष्णमिति।श्लि

सतत्रगत्वायत्रास्तेशैलोद्देशेतिशोभने ॥ तांचदेवींततःप्राहश्लक्ष्णंमधुरयगिरा ॥५९॥ ॥ दूतउवाच ॥ ॥ देविदैत्येश्वरःशुंभस्त्रैलोक्येपरमेश्वरः ॥
दूतोहंप्रेपितस्तेनत्वत्सकाशमिहागतः ॥ ६० ॥ अव्याहताज्ञःसर्वासुयःसदादेवयोनिषु ॥ निर्जिताखिलदैत्यारिःसयदाहशृणुष्वतत् ॥ ६१ ॥
ममत्रैलोक्यमखिलंममदेवावशानुगाः ॥ यज्ञभागानहंसर्वानुपाश्नामिपृथक्पृथक् ॥ ६२ ॥

षआलिंगने ॥ श्लिषेरच्चोपधायाइतिक्सः ॥ कत्वषत्वे ॥ ५९ ॥ हेदेविसावधानाभव ॥ अस्तिखलुदैत्येश्वरःलोकत्रयेपरमउत्कृष्टईश्वरःस्वामीतेनशुम्भेनत्वत्सकाशंप्रतिप्रे
षितःदूतःसंदेशहरोऽहमिहागतोस्मि ॥ दैत्यग्रहणंजातिख्यापनाय ॥ त्रैलोक्यग्रहणं देव्याःप्ररोचनार्थम् ॥ दूतग्रहणंतन्निग्रहपरीहाराय ॥ दूतोकंसदसद्वापिश्रुत्वाकार्यं
हिवाहितम्॥दूतोननिग्रहीतव्यइतिनीतिविदोविदुः॥आदौदेवीत्युक्त्वाद्देव्याएवजयःसूच्यते॥यतःदीव्यतिविजिगीषतेदेवी ॥ हेदेवि तेनशुम्भेनदूतःप्रेषितस्त्वत्तदेवीतःसशुम्भः
काशंतृणंगतःस्यान्नतुजयमित्यपिदेवीपारिषदोक्तिलेशोनुसंधेयः ॥६०॥ हेदेवि यःसदासर्वदासर्वासुदेवयोनिषुविषयेषुअव्याहताज्ञःअप्रतिहतशासनःनिर्जिताखिलदैत्यारिःनि
र्जिताअभिभूताअखिलाःदैत्यारयःदेवायेनशुंभोयदाहतद्वचनंशृणुष्वाकर्णय॥व्यत्ययोबहुलमित्यात्मनेपदम् ॥ ऊर्णुञ्संवरणे॥संवरणमाच्छादनंक्विप् ॥ अंविष्णुंव्ययतिसंवृणोति
आच्छादयतिव्याप्नोत्यविद्यात्वेनेतिअवीर्विष्णुमायातयाअव्ययादेव्य आहताआज्ञास्यशुम्भस्यस अव्याहताज्ञोभविष्यति ॥ निर्निश्चयनिषेधयोः ॥ निर्जिताअजिताअखिला
देवायेनसतथोक्तोभविष्यतीत्यपिदेवीपार्षदोक्तिलेशोप्यनुसंधेयः ॥ ६१ ॥ शुंभआहेदम् ॥ पटैकदेशेदग्धेपटोदग्धइत्यवयवेएकदेशेप्यवयवीसमुदायोवर्ततेकचिदवयवावय

विनोऽरभेदोपचारागप्रयोगेषु तद्वत्रैलोक्यंममस्ववर्त्तेइत्युक्तेकित्रैलोक्यमेकदेशवृत्त्याविवक्षितमिहेतिकस्यचिच्छंकास्यादतस्तामपनेतुमखिलमिति । अखिलमित्येवोक्तेएकैको
पिलोकोखिलोभवन्यखण्डवृत्तित्वाद्भुवनस्येत्यतस्त्रैलोक्यमित्युक्तम् ॥ इहमनेतिविभक्तिप्रतिरूपकमव्ययं मायावाचि निर्ममोयोगीतिवत् ॥ ममप्रायादेव्याः त्रैलोक्यमित्यु
क्तम् ॥ मायायाअखिलंस्ववर्ततेतनकुतःशुंभस्येत्यपिदेवीपार्षदोक्तिलेशोप्यनुसंधेयः देवाःममशुंभस्यवशानुगाः ॥ वशःकांतिरिच्छा॥ मदिच्छाम्मनुवर्ततेनतुशुंभस्येत्यपि
देवीपार्षदोक्तिलेशोनुसंधेयः॥ तत्तद्देवतोद्देशेनपृथक्पृथक्विहितांस्तानमवान्यज्ञभागानाहुतिरूपान्यज्ञांशानहमेवशुंभःपृथक्पृथगिंद्रियादितत्तद्देवताकायव्यूहमुपाश्रित्यउपाश्ना
म्युपभुंजे ॥ अशभोजनेव्रयादिः ॥ अहमितिविभक्तिप्रतिरूपकमव्ययमवियावाचिअवियाचाऽतस्मिंस्तद्बुद्धिःसाचदेव्येवयज्ञभागानुपाश्नातीतिकुतःशुम्भस्ययज्ञभागोपभोग
इत्यपिदेवीपार्षदोक्तिलेशोनुसंधेयः ॥ ६२ ॥ त्रिष्वपिलोकेषुवराणिश्रेष्ठानिरत्नानिस्त्रीरत्नानिममवश्यानिविधेयानि ॥ वशंकांतिमिच्छांगतानीत्यर्थः ॥ वशंगतइतियत्प्र
त्ययः ॥ तथैवतद्देवबलवत्त्वएव ॥ गजरत्नं देवेंद्रवाहनम् ॥ वाहनमाहितादितिणत्वंनात्रभवति ॥ आहितत्वस्याविवक्षितत्वात् ॥ अत्रहिदेवेंद्रस्यवाहनमित्येतस्यस्वस्वामि

त्रैलोक्येवररत्नानिममवश्यान्यशेषतः ॥ तथैवगजरत्नंचहृतंदेवेंद्रवाहनम् ॥ ६३ ॥ क्षीरोदमथनोद्भूतमश्वरत्नंममामरैः॥उच्चैःश्रवससंज्ञंतुप्रणिप
त्यसमर्पितम् ॥ ६४ ॥ यानिचान्यानिदेवेषुगन्धर्वेषूरगेषुच ॥ रत्नभूतानिभूतानितानिमय्येवशोभने॥ ६५ ॥

भावसम्बंधमात्रंविवक्षितम् ॥ यद्वाहनेआरोपितंयतोखिलंतदाहितमुच्यते ॥ इक्षुवाहणमित्यत्रइक्षवोवाहनेआरोपिताइतिकृत्वाणत्वंभवति ॥ ६३ ॥क्षीराण्युदकानियस्यसक्षी
रोदःक्षीराब्धिः उत्तरपदेउदकस्योदःसंज्ञायामित्यत्रसंज्ञायामुत्तरपदस्योदकशब्दस्योदादेशोवक्तव्यः॥क्षीरोदस्यमथनंततउद्भूतमुच्चैःश्रवससंज्ञम्॥श्रुगतौश्रुश्रवणे ॥ उच्चैःशृणोति
गच्छतिउच्चैःश्रवःपचाद्यच् ॥ सहसंज्ञयाचेतनयानाम्नाचवर्ततेसंज्ञः ॥ सहस्यसःसंज्ञायांवोपसर्जनस्येति । ततःकर्मधारयः ॥ उच्चैःश्रवश्चासौससंज्ञश्चउच्चैःश्रवससंज्ञः ॥
अश्वविशेषणत्वेपुंल्लिंगः ॥ अश्वरत्नविशेषणत्वेतुनपुंसकलिंगमुच्चैःश्रवससंज्ञम् ॥ अथवाप्रशस्तेश्रवसीयस्यसः श्रवसःमत्वर्थेअर्शआदित्वादच् ॥ जवेनमानेनचउत्कृष्टत्वादु
च्चैरित्युच्यते ॥ उच्चैश्चासौश्रवसउच्चैःश्रवसइतिसंज्ञायस्यसः ॥ अश्वरत्नविशेषणत्वेउच्चैःश्रवससंज्ञंतुमद्भीतैरमरैःप्रणिपत्यमत्पादपद्मेऽर्पितमुपायनीकृतम् ॥ उपायनमु
पग्राह्यउपहारस्तथोपदा ॥ अत्रापिमायावाचिममेत्यव्ययम् ॥ मायादेव्यैअमरैर्भक्तिनम्रैरश्वरत्नंप्रणिपत्यसमर्पितंतत्त्रैलोक्येगृहेयस्यार्थेत्रकाप्यस्तुअयंतुशुंभोन्यदीयंममेद
मितिमुधाभिमन्यते इतिदेवीपार्षदोक्तिः ॥ ६४ ॥ हेशोभनेदेविदेवेषुवागंधर्वेषुदेवगायनेषुवाउरगेषुनागेषुवायानिचान्यानिरत्नत्वमुत्कृष्टत्वंप्राप्तानिभूतानिशरीरभांजिमनो

हराणिस्त्रीरूपाणिसंति तानि सर्वाणिमय्येवविषयेवर्तंते ॥ आःसखिशोभनेगर्वस्थोसावित्थमभूतवादीशुंभःशांभवीयंदेव्येवभूतमयीभूतमित्थमाचष्टयानिदेवेषुगंधर्वेषूरगेषुवारत्न भूतानिरत्नतांप्राप्तानिभूवानिकृतानिसत्यानितत्स्थानिसन्तितानिमय्येवदेव्यामेववर्तमानानिनान्यत्र ॥ अथवाइतोऽन्यानिचयानिचरत्नभूतानिपृथिव्यादीनिसंतितानिसर्वाणि विश्वरूपत्वेनविश्वमातृत्वेनमय्येवदेव्यांवर्त्ततेनशुंभइतिदेवीसखीजनोक्तिलेशोप्यनुसंधेयः॥ ६५ ॥ हेदेविलोकेस्मिन्रत्नभूतांभूलोकेऽहिमालयनिवासनींमानिनींत्वांस्त्रीरत्नभूतां स्त्रीरत्नजातांस्त्रीजात्युत्कृष्टांतांप्राप्तवतींवयंशुंभनामानोमन्यामहे ॥ साएवंविधात्वमस्मानुपागच्छप्राप्नुहि ॥ कुतइत्यतआह ॥ यतोवयंरत्नभुजोराजानः ॥ यदुक्तं—स्वराष्ट्रम न्यतोरक्षत्यन्यदीयंक्षिणोतिच ॥ वर्द्धेतोपायवान्नित्यंरत्नहारीसपार्थिवः ॥ देवीष्टार्थस्त्वेषः—उपागच्छेत्यत्र उ पा गच्छेतिविच्छेदः ॥ तत्र—उसंबुद्धौरुषोक्तेचशिववाचित्व नव्ययम् ॥ पानेपिबतिरक्षायांपातिः पायतिशोषणे।क्विप् ॥ पायतिशत्रूनूशोषयतिपाः।उरिवरुद्रइवपाउपाः॥हेदेविकालाग्निरुद्रइवपायंतीशत्रूनूशोषयन्तीसतीअस्मानितिशु म्भादीन्त्वामाकारयमाणानूशत्रूनूशोषयितुंगच्छयाहीतिदेवीपार्षदोक्तिलेशोप्यनुसंधेयः ॥ यद्वा ॥ असुक्षेपणेदिवादिःक्विप् ॥ अस्यत्यरीनूक्षिपत्यधिक्षिपतिन्यक्करोतिअः

स्त्रीरत्नभूतांत्वांदेविलोकेमन्यामहेवयम् ॥ सात्वमस्मानुपागच्छयतोरत्नभुजोवयम् ॥ ६६ ॥
मांवाममानुजंवापिनिशुंभमुरुविक्रमम् ॥ भजत्वंचंचलापांगिरत्नभूताऽसिवैयतः ॥ ६७ ॥

अत्वसंतस्यचेतिउपधादीर्घः अधावोरीतिप्रतिषेधान्नभवति । पैओवैशोषणे पायंतिशोषयंतिलोकानितिपाःतेषांपाशुंभादीनां दैत्यानामः आसिकाक्षेपिकाअधिक्षेपिकान्य क्कारिकेतिपाः ॥ पाः । उ इतिसंबुद्धावव्ययम् ॥ उ हेदेवित्वमस्मानुपागच्छेतिशुंभादिभिःरत्नमुक्तिःदैत्यैराकारितासि ॥ सात्वंपाःसतीगच्छ । पायतांजगंतीशोषयतः शुंभादीनस्यंती अधिक्षिपंतीगच्छयाहि ॥ कुत इत्यतआह ॥ यतस्तेरत्नभुजः ॥ भुजोकौटिल्ये तुदादिः क्विप् ॥ भुजंति कौटिल्येनवर्त्ततेभुजःरत्नेषूत्कृष्टेपु विषयेषुभुजः कौटिल्येनान्यायेनवर्त्तमानाःरत्नभुजः । अतःतेषांशुंभादीनांकुटिलानांन्यक्करणायगमनंयुक्तमुत्पश्यामइतीतिदेवीपार्षदोक्तिः ॥ ६६ ॥ चलाचलःस्याच्चर लश्चंचलश्चपलश्चलः ॥ चंचलौनेत्रांतनिरीक्षणेनतरलौअपांगौनेत्रांतौयस्याःसाचंचलापांगी ॥ हेचंचलापांगिहेवरारोहेत्वंयतोरत्नभूतासिसौंदर्येणउत्कृष्टतांप्राप्तासिततोवैअनु वीयसे नरत्नमन्विष्यतिमृग्यतेहितदितिन्यायतःप्रार्थ्यसे । ततश्चमांनिशुंभंवाभजआश्रय ॥उरुर्विक्रमःशौर्यलक्षणोयस्य तंममअनुजंकनिष्ठंभ्रातरंनिशुंभंवापिभजसंश्रय॥ त्वंहि रत्नम् । रत्नभाजश्चराजानएववयंचराजानः । तस्मात्त्वमस्मानेवभजनान्यानितिशुंभानुकूलोभिप्रायोयम् ॥ वैस्यात्संबोधनेपादपूरणेऽनुनयेपिच ॥ देव्यनुकूलार्थस्त्वेषः—

सप्तम्यांजनेर्डअन्येष्वपिदृश्यतेइत्यत्रसूत्रेअपिशब्दःसर्वोपाधिव्यभिचारार्थः॥ तेनधात्वंतरादपिडोभवतिकारकांतरेषूपपदेचेतिवचनात्पिष्लृसंचूर्णनइत्यस्मादाङ्पूर्वाच्चचलोपपदा त्डःटिलोपःसाचंचलान्न्यायादपभ्रष्टान्दैत्यानासमंतादभिव्याप्यपिनष्टिसंचूर्णयतिइतिचंचलापमंगंगात्रंयस्याःसाचंचलापांगी॥अंगगात्रकंठेभ्यश्चोपसंख्यानाद्वाङीष्॥हेचंच लापांगि हेदुष्टदैत्योपसंचूर्णनसन्नद्धगात्रेएवं विधात्वंशुंभेनआकारितासिकिंमितिमांवाअनुजंनिशुंभंवाभजेत्याहूतासि यतश्चत्वंरत्नभूतासिवैअनुनीयसेप्रार्थ्यसेच।ततःत्वं मांवेतिशुं भमूअमगच्छयाहि।अनुजंवापीति।निशुंभमूअमगच्छयाहिअमइत्येतदमगतावित्यतोभ्वादेर्लोटिरूपम्।तच्चमांवा॥ अम अमा अनुजंइतिपदच्छेदात्क्रियतेकिंविशिष्टात्वंमा-मः शिवोवारमायांचमानिषेधेव्ययंमतम्॥ मंशिवंशंभुंयसतिगच्छतिशंभुनासहदीप्यतिचेतिविगृह्यअसगतिदीप्त्यादानेष्वित्यसतेःपूर्ववदपिशब्दविहितोडःडितिटेरसशब्दस्यलोपःस्त्रि यांमाइतिरूपम्॥ ततश्चतादृशीशांभवीचंचलापांगीदुष्टदैत्यसंहारसज्जांगी॥ सतीत्वमुरुविपुलंयथास्यात्तथाशुंभादिषुविषयेषुविक्रमंभजशौर्यसमाश्रयेतिदेवीपार्षदोक्तिलेशोप्यनुसं धेयः ॥ यद्वा ॥ चंचलापांगि रत्नभूतासि वा ऐ यतः इतिच्छेदः ॥ एकारउच्यतेविष्णुरैकारःस्यान्महेश्वरः॥ममेतिमायावाच्यव्ययम्॥ यतीप्रयत्नेयतनंयत्स्त्रियांभावेसंप दादित्वाद्वाक्किप्॥ ऐमहेश्वरस्येवकालाग्निरुद्रस्येवयतंयत्नंप्राप्यहेममहेमायेदेविमांहंतुंनिशुंभंचहंतुमहांतंविक्रमंपादविक्षेपंपराक्रमंवाभजेतिदेवीपार्षदोक्तिः ॥ चंचलानन्यायाद

परमैश्वर्यमतुलंप्राप्स्यसेमत्परिग्रहात् ॥ एतद्बुद्ध्यासमालोच्यमत्परिग्रहतांव्रज ॥ ६८ ॥

पभ्रष्टानपकर्तुंहिंसितुंक्ष्मंगातिंप्राप्नोतितच्छीलाचंचलापांगी । अगिर्गत्यर्थः ॥ रत्नभूतश्चासावसिश्चेतिरत्नभूतासिः ॥ चंचलापांगि रत्नभूतासि वा । वागतिगंधनयोःआतोनुपस र्गेकः ॥६७॥ हेदेवित्वंममशुंभस्यपरिग्रहात्पत्नीत्वेनस्वीकारादतुलमनुपमंपरंश्रेष्ठमैश्वर्यंपरमेषुश्रेष्ठेषुस्वामितांचप्राप्स्यसि ॥ व्यत्ययेनात्मनेपदम् ॥ यद्वा ॥ नयाशुंभेनत्वंपर मैश्वर्यंप्राप्स्यसेप्रापयतेः कर्मणिलुट्थासःसेरूपम् ॥ हेदेविएतत्सर्वंप्रागुक्तंशुंभाभिप्रायगर्भंबुद्ध्यासमालोच्यविचार्यमत्परिग्रहतांव्रजप्राप्नुहि ॥ परिग्रहः परिजनेपत्न्यांस्वीकार मूलयोः ॥ यदाहुः ॥ पत्नीपरिजनादानमूलशापाःपरिग्रहाः ॥ इतिशुंभानुकूलोर्थः ॥ देव्यनुकूलोर्थस्त्वेषः ॥ हेदेवित्वंपरमासर्वोत्कृष्टा ॥ यद्वा ॥ पराउत्कृष्टामालक्ष्मीः त्वमेवेतिअतुलमैश्वर्यंप्राप्स्यसीतियत्सत्यमेवैतत् ॥ किंचित्रम् ॥ किंचमत्परिग्रहात् ॥ मदीहर्षे मायतिक्किप् ॥ यःमद्मायन्परिग्रहः मातृमुख्यःपरिवारःतंप्राप्यपरमैश्वर्यं प्राप्स्यसेइत्येतदपिसिद्धमेवैतत् ॥ मत्परिग्रहादितिकर्मणिल्यब्लोपेपंचमी ॥ हेदेवित्वमूएतद्बुद्ध्यासमालोच्यमायत्परिग्रहोमातृमुख्यःपरिजनोयस्याःसामत्परिग्रहातस्याःभाव मत्परिग्रहतातांव्रजप्राप्नुहि ॥ यःखल्विमाश्चित्रागावोमेसंतीत्यादौबुद्ध्यासमालोचतेसएवचित्रगुतांप्राप्नोतितद्वदियमपिदेवीप्रेमतःआत्मनोमन्मायन्परिग्रहोस्तीतिबुद्ध्यासमालो

व्यपश्चान्मायत्पारिग्रहत्वांव्रजतीतिदेवीपार्षदोक्तिः ॥ त्वतलोर्गुणवचनस्यपुंवद्भावोवक्तव्यः ॥ ६८ ॥ ततःसंदेशश्रवणसमयइत्येवंशुंभेनदूतद्वाराउक्ताकथिता ॥ देवीगंभीरा
अगाधाभिप्रायादैत्यान्हंतुकामाअतएवांतःस्मिता ॥ शुंभोदुरात्मामांप्रतिदेवतामित्थमाहेतिसोत्प्रासमंतःस्तंभितहासातंहंतुमनाः सतीजगौ ॥ दूतंवाचमुचितामूचेऽकथयत् ॥
दुर्गादुरवगाहा ॥ भगवतीसमग्रैश्वर्यरूपा ॥ भद्राक्षेमरूपा ययाइदंजगद्धार्यते गैशब्दे आत औणलः ॥ अयंभावःइतिदूतेनव्यभिचारिभावेनउक्तापिदेवीनसाअसातादृशी
नाभूत् अतिपतिव्रताशुंभादिभिःसहरंतुकामानाभूत् ॥ किंतुअतदाकालांतरेहंतुकामैवाभूत् ॥ ६९ ॥ अत्रशुंभेपिविषयेसत्यमुक्तंहेदूतअत्रत्वयामिथ्यापदंकिंचिन्नउदितंन
उक्तम् ॥ तथाहि ॥ शुंभस्त्रैलोक्याधिपतिर्भवतिनिशुंभोपिचतादृशःशुंभसदृशएव ॥ मिथ्येत्यव्ययम् ॥ इदंहिसोल्लुंठनंवचः ॥ अनितिजीवतिअनःपचाद्यच् ॥ अयेनशुभावहविधि
नाअनःअयानःहेअयान दूत त्वयात्रास्यांपतिव्रतायांदेव्यांविषयेयदसंभावितंकिंचिन्मिथ्योदितमुक्तंशुंभंनिशुंभंवाभजेतितत्तुसत्यमुक्तंहीनम् ॥ त्रैलोक्याधिपतिःशुंभइतियत्
एतत्सत्यंयतःशुंभः त्रैलोक्यस्याधेर्मानसपीडायाःपतिःउत्पादकत्वेनस्वामीयतश्चसतादृशएवनिशुंभोपि ॥ पुंस्याधिर्मानसीव्यथा ॥ त्रैलोक्यस्यत्वधिपतीरियंदेव्येवेतिदेवीपार्ष

ऋषिरुवाच॥इत्युक्तासातदादेवीगंभीरांतःस्मिताजगौ॥ दुर्गाभगवतीभद्राययेदंधार्यतेजगत् ॥६९॥ सत्यमुक्तंत्वयानात्रमिथ्याकिंचित्त्वयोदितम् ॥
त्रैलोक्याधिपतिःशुंभोनिशुंभश्चापितादृशः॥७०॥ किंत्वत्रयत्प्रतिज्ञातंमिथ्यातत्क्रियतेकथम् ॥ श्रूयतामल्पबुद्धित्वात्प्रतिज्ञायाकृतापुरा ॥ ७१ ॥
योमांजयतिसंग्रामेयोमेदर्पंव्यपोहति ॥ योमेप्रतिबलोलोकेसमेभर्ताभविष्यति ॥ ७२ ॥

दाभिप्रायतः सोत्प्रासतावसेया ॥ ७० ॥ किंवितर्केपरिप्रश्नेक्षेपेनिंदाप्रकारयोः ॥ किमव्ययंवितर्केतुस्याद्धेदेवधारणे ॥ शुम्भःत्रैलोक्याधिपतिःसत्यंकिंत्वत्रास्मिन्शुंभेप
त्याबाश्रयितव्येविषयेममविचारोस्तिपृथक्प्रातिनियतः ॥ मयायत्प्राक्प्रतिज्ञातंतत्किंमिथ्याक्रियते ॥ मयादेव्याऽल्पबुद्धित्वादनालोच्यपुराबाल्यकालेयाप्रतिज्ञाकृतासात्वया
दूतेनश्रूयताम् ॥ कृतामयेतिवापाठः ॥ अतसातत्यगमने ॥ अल्पबुद्धित्वमततिसततंगच्छतिसदाप्नोतीति अल्पबुद्धित्वात् क्विपिरूपम् ॥ संबुद्धौ हेअल्पबुद्धित्वात्हेस्वल्पधि
षणहेदूतत्वयोक्तंशुम्भंनिशुंभंवाभजेति तत्रयाप्रतिज्ञाभर्त्तरिविषयेकृतासाश्रूयतां साचेत्घटतेमेभर्त्ता ॥ अन्यथायन्मयाप्रतिज्ञातंतन्नस्यात् ॥ मानिनोनिरयंयांतियावदाभूतसं
प्लवम् ॥ ७१ ॥ कासौप्रतिज्ञा ॥ जिअभिभवे जिजयेइत्ययंत्वकर्मकः ॥ योमेदर्पंगर्वंव्यपोहतिद्रावयतिदूरीकरोति ॥ दृपहर्षमोहनयोः ॥ गर्वोभिमानोऽहंकारोदर्पोहंकार
सूर्ययोः ॥ ऊहवितर्केआत्मनेपदीउपसर्गादस्यत्यूह्योर्वावचनमितिपरस्मैपदम् ॥ योमेदेव्याःप्रतिबलोलोकेअधिबलःसबलःस्यात्प्रतिबलःविपक्षःप्रतियोगीवास्यात्समेभर्त्ता

भविष्यतीतिप्रतिज्ञास्वरूपम् ॥ लोकेजयंतीअभिभवित्रीशक्तिरियमेवनैतांकोपिनेतुंशक्नोति ॥ लोकेदर्पात्माऽहंकाररूपाशक्तिरियमेवनैतांकोपिप्रच्यावयितुंशक्नोति॥ लोकेबल रूपाशक्तिरियमेवनैतांकोपिप्रच्यावयितुंशक्नोति इत्यभिप्रायेणप्रतिज्ञातमित्थंदेव्या ॥ यःसंग्रामेतुल्येसंसारग्रामेमांलक्ष्मींसंपदंजयतिपरमवैराग्ययोगादभिभवति . ॥ योऽस्मेऽ लक्ष्मीकेदैत्यवर्गेदर्पंहर्षणंगर्वंचव्यपोहति ॥ योलोकेमेदेव्याअप्रतिबलःअप्रतिपक्षःअनुकूलःसमहेश्वरोमेभर्ताधारकः पोषकश्चनान्यइतिदेव्याःपरमोभिप्रायोयंदेवीपार्षदैःसहृद यैरूहितः॥७२॥ पाणिग्रहणंकरोतु ॥ तयोरन्यतरः ॥ अत्रमत्प्रतिज्ञापरिपालनेचिरेणकालेनकिंसाध्यंकिंविलंबेनकृतंस्यात्॥आदानस्यप्रदानस्यकर्त्तव्यस्यचकर्मणः॥क्षिप्र मक्रियमाणस्यकालःपिबतितत्फलम् ॥ मत्पाणौप्रभुशत्रुः तत्फलंद्रक्ष्यतिसइतिदेव्याशयः ॥ तत्तस्मात्प्रतिज्ञातकारणाच्छुंभोनिशुंभोवाआगच्छतु ॥ तेनकिंस्यात्तदनाह त्यजित्वाजेतात्रैलोक्यविजयीमहान्सुरःमहासुरःमहादेवःमांगृह्णातुअत्रमद्ग्रहणेकिंचिरेणेतिदेव्याःपरमाभिप्रायंदेवीसख्यःस्वस्वचेतःसु ऊहंते ॥ जिअभिभवे अन्येभ्योपिदृश्य तइतिक्विपिहृस्वस्यपितिकृतितुगागमः ॥ नातः ॥ चिरेणातिकालेन अव्ययंचानव्ययंचेदम् ॥ ७३ ॥ लिपउपदेहे उपदेहउपचयः ॥ अवपूर्वस्तुलिपिर्गर्वेवर्तते ॥ यदभ्यधुः

**तदागच्छतुशुंभोत्रनिशुंभोवामहासुरः ॥ मांजित्वाकिंचिरेणात्रपाणिंगृह्णातुमेलघु ॥७३॥ दूतउवाच ॥ ॥ अवलिप्तासिमैवंत्वंदेविब्रूहिममाग्रतः ॥ त्रैलोक्येकःपुमांस्तिष्ठेदग्रेशुंभनिशुंभयोः ॥ ७४ ॥ अन्येषामपिदैत्यानांसर्वेदेवानवैयुधि ॥ तिष्ठन्तिसंमुखादेविकिंपुनःस्त्रीत्वमेकिका ॥ ७५ ॥**

गर्वोभिमानोहंकारोमानश्चित्तसमुन्नतिः ॥ दर्पोवलेपोऽहंवाच॥हेदेवित्वमवलिप्तासिमैवंभूः ॥ एवंगर्वितामाभूः ॥ त्वंममाग्रेएवंयदवोचः योमांजयतिसंग्रामेइत्यादि तदागच्छतु शुंभोत्रेत्यादिचेतिप्रतिज्ञाव्याजेनखलुत्वंकेवलमहमहमिकामवोचोमैवंब्रूहि॥कुतइत्याह ॥ त्रैलोक्येशुंभनिशुंभयोरग्रेयोद्धुकामःकःपुमांस्तिष्ठत्नकोपि ॥ अबलात्वंयोत्स्यसेइति काकथा ॥ इतिशुंभानुकूलोभिप्रायः॥ अवलिप्तान्सगर्वान्दैत्यानस्यतिअधिक्षिपतिअवलिप्तासी॥असुक्षेपे॥कर्मण्यणिटिड्ढाणञ्सूत्रेणङीपिरूपम्।तत्संबुद्धौहेअवलिप्तासिहेमदो द्धतमर्दनि यतः त्वंमालक्ष्मीः अतोममाऽऽग्रहतःसखीजनस्यपुरतःएवंब्रूहियोमांजयतिसंग्रामेइत्यादित्रैलोक्येअग्रेपुरोभाविसंग्रामेशुंभनिशुंभयोर्मध्येकःपुमान्त्वयासमंयोद्धुंतिष्ठे दपितुनकोपि ॥ यदातदग्रेशुंभनिशुंभयोःसंबंधी कःपुमान्योद्धुकामःतिष्ठेन्नकोपिइतिदेव्याःसखीजनाशयोनुसंधेयः ॥ ७४ ॥ हेदेविहेभव्येअन्येषामपिशुंभव्यतिरिक्तानांदै त्यानांधूम्रलोचनप्रभृतीनांयुधिसर्वे देवायोद्धुकामाः संमुखानतिष्ठंति ॥ किंपुनःत्वमेकिकाअबलादैत्यानांपुरतःयोद्धुमक्षमेतिकिंपुनर्वक्तव्यमितिशुंभानुकूलोर्थः ॥ हेदेविअन्ये षामपिदैत्यानांसंमुखायुधिसर्वे देवानतिष्ठंतिचेन्मातिष्ठंतु ॥ त्वंतुपुनःत्वंस्त्रीसत्यपिसमस्तशक्त्यधिदेवतारूपाएकाकिन्येवअसहायशूरायोद्धुमन्येषां दैत्यानांसंमुखीकिंनतिष्ठसि॥

अपितुयोद्धुंसंमुखीतिष्ठस्येवेतिर्देवीसखीजनाभिप्रायोनुसंधेयः ॥ वैस्यात्संबोधनेपादपूरणेनुनयेपिच ॥ एकाकीत्वेकएकलः ॥ प्रत्ययस्थात्कात्पूर्वस्यातइदाप्यसुपः ॥ ७५ ॥ हेदेवियेषांसंयुगेइंद्राद्याःसर्वेदेवाःसंमुखाःनतस्थुःनतास्थिवांसः तेषांशुंभादीनांदैत्यानांसंमुखंत्वंस्त्रीअबलायोद्धुंकथंप्रयास्यसिअभिगमिष्यसि ॥ विवाहनिमित्तप्रतिज्ञापालनाय शुंभादिभिः सहस्त्रियास्तवयुद्धंनघटते ॥ अपितुतयुद्धंविनैवशुंभेनाहूतात्वंतंभजव्रजेतिशुंभानुकूलोर्थः ॥ देवीसखीजनाभिप्रायोन्यएव ॥ यथा-हे देवित्वमिंद्राद्याः आसउपवेशनेकर्त्तरिक्विप्-आस्तेआः सांतःइंद्रादिषुआः आसीनाःइंद्राद्याःइंद्रादिभिर्देवैर्ध्यातासतीतेष्वासीनासि ॥ त्वंसकलाकलाभिः सहवर्त्तमाना ॥ हेदेवित्वं देवाःसांतम् ॥ दिवुक्रीडाविजिगीषादौ सर्वधातुभ्योऽसुन् ॥ दीव्यतीतिदेवाः अत्वसंतस्येत्युपधादीर्घः देवाःविजिगीषमाणासि ॥ पुनःकथंभूतात्वं येषांशुम्भादीनांसंयुगे इन्द्राद्याःनतस्थुःतेषांस्त्रीप्रयासीअसिस्त्रीःप्रयासंतीभर्तृविनाशाजनितदुःखाःकुर्वती ॥ यसुप्रयत्नेणिच् ॥ कर्मण्यण्ङीप् ॥ एवंविधासि ॥ तेषांसंयुगेसंमुखंकथंनस्थास्यसिअपितुयोद्धुंप्रयास्यसिइति । सम्भवत्येकवाक्यत्वेवाक्यभेदस्तुनेष्यते ॥ अर्थांतरविवक्षायांवाक्यभेदोनदुष्यति ॥ यद्वा ॥ हेदेवि इन्द्राद्याःसकलादेवाः येषांशुम्भादीनांसंयुगेसंमुखंनतस्थुःस्थातुंनशेकुःएता

इंद्राद्याःसकलादेवास्तस्थुर्येषांनसंयुगे ॥ शुंभादीनांकथंतेषांस्त्रीप्रयास्यसिसंमुखम् ॥ ७६ ॥ सात्वंगच्छमयैवोक्तापार्श्वंशुंभनिशुंभयोः ॥ केशाकर्षणनिर्द्धूतगौरवामागमिष्यसि ॥ ७७ ॥

वतातेषांशुम्भादीनांसंमुखेयोद्धुंविजेतुंत्वंकथंनप्रयास्यमि ॥ इतिदेवीसखीजनाभिप्रायः-यद्वा॥तस्थुः या ईषामितिच्छेदः ईषामितिर्हिंसादर्शनेषुभ्वादिरात्मनेपदीकर्तरिक्विप् ॥ ईषंतेहिंसंतिईषःहिंसकास्तेषांहिंसकानांशुम्भादीनांसंयुगेइन्द्राद्याःनतस्थुःतेखलुभीरवः ॥ हेदेवियात्वंह्यपिसर्वशाक्तिरूपावतीर्णासि ॥ साभगवतीत्वंतेषांसंमुखंकथं नप्रयास्यसियोद्धुम् । अपितुप्रयास्यस्येवेति ॥ ७६ ॥ हेदेविसात्वंप्रागुक्तप्रतिज्ञापालनपटीयसीविवोढुमनाः मयादूतेनोक्ताकथितैवसती ॥ यद्वा ॥ त्वद्गौरवाभिवांछिनामयादूतेनोपादिष्टासतीप्रतिज्ञाभंगभयंपरित्यज्यानपत्रपासतीशुंभनिशुम्भयोः पार्श्वंगच्छ॥ यतःत्वमित्थंसदुपदेशमाश्रयंतीकेशाकर्षणनिर्द्धूतगौरवासतीमागमिष्यसि ॥ माङ्त्यङ्व्ययंनिषेधार्थकमन्यथामाङ्लुङ् स्यात् ॥ केशानांशिरोरुहाणामाकर्षणेननिर्द्धूतंकम्पितमपास्तमपनीयंगौरवंगुरुत्वंबहुमान्यत्वंयस्याःसाइत्थंभूतासतीनागमिष्यसि ॥ अन्यथात्वंमदुपदेशपराङ्मुखीसतीप्रतिज्ञांपालयितुंसंग्रामंकर्तुकामापितमलभमानात्रैवासीनाकेशपाशाकर्षणापाकृतबहुमान्यतासतीबलादाकृष्यमाणाशुम्भनिशुम्भयोः पार्श्वंगमिष्यसि इति

शुम्भानुकूलोर्थः॥ देवीसखीविवक्षितस्त्वन्यएव ॥ यथा-हेदेविसात्वंदुरात्मनादूतेनेत्थमुक्ताऽतएवसंजातक्रोधासतीययासख्यासहशुम्भनिशुम्भयोःपार्श्वंगच्छ ॥ ततःतयोःकेशाकर्षणनिर्द्धूतगौरवाशुम्भनिशुम्भयोःकेशानामाकर्षणेननिर्द्धूतंनिरस्तंगौरवं दैत्येश्वरत्वंययासा ॥ तृतीयार्थेबहुव्रीहिः॥एवंविधात्वंपुनरप्यमासखीजनस्यसमीपमागमिष्यसीति । अमासहसमीपे च ॥ त्यक्तंहीनंविधुतंसमुज्झितंधूतमुत्सृष्टे ॥ गौरवान्नागमिष्यसीतिपाठेतुहेदेविमयात्वद्गौरववांछिनादूतेनोपदिष्टासतीमत्पार्श्वेइतिपाठेद्वितीयाद्विवचनांतम् ॥ मद्वचनाच्चेन्नगच्छेस्तर्हिगौरवाद्बहुमानान्नागमिष्यसिकिंतुकेशाकर्षणनिर्धूताआगमिष्यसि॥निर्निश्चयनिषेधयोः ॥ निर्द्धूताअत्यक्ताकेशाकर्षणेननिर्द्धूताबध्वागृहीताबन्दीकृतासत्यपमानादागमिष्यसि ॥ गौरवात्तुनागमिष्यसि इतिशुम्भानुकूलोर्थः ॥ देव्यनुकूलस्त्वेषः-हेदेविकृतप्रतिज्ञा त्वं तेन दुरात्मनाशुम्भेनमांभजेत्युक्तासतीअतःसक्रोधामयासख्यासहशुम्भनिशुम्भयोः पार्श्वेहननायगच्छ ॥ ततश्चतयोःनिर्द्धूतमत्यक्तंनिगृहीतं केशाकर्षणंययासा॥ आहिताग्न्यादित्वादग्न्याहितइतिवन्निष्ठांतस्यपरनिपातः। निर्द्धूतशत्रुकेशाकर्षणासतीअत्यक्तकेशाकर्षणासत्यगौरवान्नागमिष्यसि ॥ गौरवान्नागमिष्यसि ॥ गौरवादेवसन्मानादेवनिजस्थानंपुनःआगमिष्यसिइतिदेवीसखीजनाभिप्रायः ॥

॥ श्रीदेव्युवाच ॥ ॥ एवमेतद्बलीशुंभोनिशुंभश्चातिवीर्यवान् ॥ किंकरोमिप्रतिज्ञामेयदनालोचितापुरा ॥ ७८ ॥

गौरवादागमिष्यसीतिवापाठः ॥ यद्वा ॥ कःब्रह्माअश्चविष्णुःईशश्चमहेशःकेशाःतेषामाकर्षणंध्यानेनवशीकरणंहृद्यवस्थापनंतवधूतंत्यक्तंनिर्निषेधेनिर्द्धूतमत्यक्तं केशाकर्षणं यैः ऋषिभिस्तेषांकेशाकर्षणनिर्द्धूतानांऋषीणामासमंतादभिव्याप्यवर्तमानानांगौरवंमान्यत्वंतददंतिनाशयंतियेदैत्याःतेकेशाकर्षणगौरवादः॥पैओवैशोषणेतान्केशाकर्षणनिर्द्धूतगौरवादोदैत्यान्वायतिशोषयति केशाकर्षणनिर्द्धूतगौरवाद्वा ॥ आतोनुपसर्गेकः ॥ एवंविधासतीआगमिष्यसि अनुस्यूतब्रह्मविष्णुमहेशानांगौरवादोदैत्याः ॥ अदभक्षणेक्विप् तान्वायंतीशोषयंतीसत्यपास्यसिस्वस्थानमितिसखीजनाभीष्टाभिप्रायः ॥ ७७ ॥ हेदूतत्वयायदुक्तंशुंभोबलीवीर्यवान् निशुंभश्चवीर्यवानिति । एतदेवंनान्यथा ॥ अहंतुकिं करोमियद्यस्मान्मेममप्रतिज्ञाइयमस्तिपुराप्रागेवमयानालोचिताविचारितानाभूत् ॥ संभावितंप्रतिज्ञाय निर्वोढव्यंमनीषिभिः ॥ प्रतिज्ञयाप्यसंभाव्यंनिर्वोढव्यंकथंनतैः ॥ निर्वोढव्यंप्रतिज्ञातंतर्कितंवाप्यतर्कितम् ॥ प्रतिज्ञातपरित्यक्तेःप्राणत्यक्तिर्वरंनृणाम् ॥ वीरकर्मतदेतच्चवीर्यमित्याभिधीयते ॥ इवेत्थमर्थयोरेवम् ॥ यत्तद्यतस्ततो हेतौ ॥ मयापुरानालोचिताप्यविचारितापिमे प्रतिज्ञाईदृश्येवाभूत् ॥ अतश्चाहंकिंकरोमियुद्धादन्यात्किं तु युद्धमेवकरोमि ॥ किंच बलीशुंभोनिशुंभश्चातिवीर्यवानिति दूतेनयो गर्व उक्तः तमनर्वमपिगर्वमर्वंकरोमि ॥ एवमेतत्इदमित्थमेवेतिदेव्याःपरमोभिप्रायः ॥ ७८ ॥

हेदूतसत्वंगच्छनिजस्थानंयाहि ॥ मयादेव्यायदेतदुक्तंप्रतिज्ञाप्रमुखंवचनंतदेवसर्वंमाद्दतः आकलितवान्सन्नसुरेंद्रायाचक्ष्वआख्याहि ॥ सच एवशुम्भःयद्युक्तमुचितंयच्चा नुचितंतत्करोतु ॥ यदेतत्सर्वमादितःइतिपाठे आदितआरभ्यअसुरेंद्रायाचक्ष्व ॥ चक्षिङोलोटिरूपम् ॥ सचययुक्तमुचितंतत्करोतु ॥७९॥ ॥ इतिश्रीमार्कण्डेयेश्रीमद्रा० जतोमरान्वयश्रीमदु० शंतनुचक्रवर्तिविरचितायांशांतनव्यांदेवीमाहात्म्यटीकायांदेवीदूतसंवादोनामद्व्यशीतितमोऽध्यायः ॥ ८२ ॥ हेसुरथइतिप्रागुक्तंदेव्यावचःआकर्ण्यश्रु त्वाअमर्षेणक्रोधेनपूरितःपूर्णःसदूतःसमागम्यदेवीशैलात्सकाशादागत्यदैत्यराजायशुम्भायविस्ताराच्छब्दप्रपंचनात्समाचष्टअकथयत् ॥ चक्षिङोलङिरूपम् ॥ १ ॥ असुराणांराट् दैत्यराजः शुम्भःतस्यदूतस्यमुखाद्यद्वाक्यम् यद्वा तस्यादेव्यावाक्यंप्रतिकूलमाकर्ण्यश्रुत्वाततोसौसक्रोधःसन्दैत्यानामधिपंधूम्रलोचनंनाममहासुरंप्राह प्रेत्युपसर्गप्रतिरूपकमाहेतितिङंतप्रतिरूपकमव्ययम् ॥ हेशुम्भत्वत्पार्श्वंदेवीनायातित्वयासहयोद्धुमिच्छतितांजेतुमुद्युंक्ष्व–इतिदूतवचःश्रुत्वादेव्यानयनायशुंभोधूम्रलोचनंप्रस्था

सत्वंगच्छमयोक्तंतेयदेतत्सर्वमादृतः॥तदाचक्ष्वासुरेन्द्रायसचयुक्तंकरोतुतत्॥७९॥ ॥इति श्रीमार्कण्डेयमहापुराणेदेवीमाहात्म्येद्व्यशीतितमोऽध्यायः ॥८२॥ ॥ छ ॥ ॥ ऋषिरुवाच ॥ ॥ इत्याकर्ण्यवचोदेव्याःसदूतोमर्षपूरितः ॥ समाचष्टसमागम्यदैत्यराजायविस्तरात् ॥ १ ॥ तस्यदूतस्य तद्वाक्यमाकर्ण्यासुरराट्ततः ॥ सक्रोधःप्राहदैत्यानामधिपंधूम्रलोचनम् ॥ २ ॥ हेधूम्रलोचनाशुत्वंस्वसैन्यपरिवारितः ॥ तामानयबलाद्दुष्टां केशाकर्षणविह्वलाम् ॥ ३ ॥

पयामास ॥ २ ॥ हेधूम्रलोचनत्वंस्वसैन्यपरिवारितःसन्दुष्टांकेशानामाकर्षणेनविह्वलांविवशांतांनितांविनीमाशुक्षिप्रंबलादानयप्रापयमामितिशेषः ॥ नीप्रापणेद्विकर्मकः ॥ इत्थंशुंभस्याचरणंसन्मंत्रशक्तिरहितश्चतामिदमनीतिकमालोच्यहितकारीनीतिविशारदोमात्यः कश्चिद्धूम्रलोचनंप्रस्थातुमुद्युक्तमुद्दिश्योपदिशति ॥ कथम् ॥ तामानयबलाद्दुष्टा मित्यत्रतन्त्रेणश्वेतोधावतीतिवदर्थांतरसृष्टौपदांतरसृष्टिरिष्टैवेतितामअआनयइतिच्छेदःक्रियते ॥ तथाहि ॥ अनेकार्थसकृदुच्चरणंतन्त्रमाहुः ॥ त्वअइतिनिषेधेव्ययम् ॥ अमानोनाःप्रतिषेधेव्ययास्त्वाइइतिवचनात् ॥ अतश्चधूम्रलोचनत्वंस्वसैन्यपरिवारितः सन्तांदेवीमाशुक्षिप्रंबलाद्बलनाश्रित्यअआनयनय ॥ कीदृशींतांपूर्ववत्तंत्रेणआन यबलाद्दुष्टामित्येकपदम् ॥ अविद्यमानःनयोनीतिर्येषांतेअनयःशुंभादयःतेषामिमानिबलानिआनयानि तानि चतानिबलानिचआनयबलानि तानि अतंतिसततंगच्छंतिभजं तिआनयबलातः ॥ अतसातत्यगमनेक्विप् ॥ तेषुआनयबलात्सुआनयसंबंधिबलभाक्षुपुरुषेषुदुष्टाविरुद्धाक्रूरा । तामानयबलाद्दुष्टामित्येकंपदम् ॥ यद्वा॥ केशानांब्रह्मादीना

मात्मशक्तेरात्ममहामायाकेशात्सकाशाज्जगदुत्पत्तिस्थितिलयकारिणी ॥ तत्तदवसरेषूचितेष्वाकेशाकर्षणंस्वमायानिलीनब्रह्मादिप्रकटीकरणमाह्वानंतद्विषयेविशेषेणह्वलतिच लतिविजृंभतेकेशाकर्षणविह्वलाताम्॥ह्वलचलनेपचाद्यच् ॥ इतिदेवीष्टार्थप्रतिपत्तिव्याख्यानतोदैत्यविध्वंसोनभवतीतिनीतिविदमात्याभिप्रायः॥ ३॥ हेधूम्रलोचनतस्यादेव्याः परित्राणंरक्षणंददातीतितत्परित्राणदः॥ आतोनुपसर्गेकः ॥ यःकश्चिन्मरोमर्त्योवाऽमरो देवोवायक्षोवापिगंधर्वोवापिपरःशत्रुःपरःतांजिघृक्षुरन्यः ॥ चकारान्नागादिर्वाविपक्ष त्वेनउत्तिष्ठतेउद्युंक्तेयदिसहंतव्यएवनस्थापनीयः ॥ उदोनूर्ध्वकर्मणिइत्यात्मनेपदम् ॥ यक्षःकुबेरादिः।गंधर्वस्तुंबुरादिप्रभृतिः॥पक्षांतरेयद्ययंशुंभोनीतिरहितोयदाइत्थमादिक्षत पराक्रियमानयेतितत्रनीतिपरोमात्यःप्राह ॥ हेधूम्रलोचनतस्याःदेव्याःसकाशात्परित्राणंयेषांतेतदेकशरणादेवादयः ॥ दोअवखंडने ॥ तान्द्यतिखंडयतिइतितत्परित्राणदः ॥ तद्भक्तहिंसापरःशत्रुर्यःकश्चिन्मरोमर्त्योवाअमरोदेवोवायक्षःकुबेरादिःगंधर्वस्तुंबुरुप्रभृतिर्वा चकाराद्दैत्योवान्यस्तद्वेषीवाराक्षसोवालंकानिवासीनागोवासद्योहन्तव्यएवेतितस्मात तांनानय ॥ आनयासिचेत्तामापदमेवानयसिदैत्यकुलविध्वंसिनीमितिनीतिविदमात्योक्त्यादेवीष्टार्थसिद्धिः॥ ४ ॥ततस्तेनशुंभेनशीघ्रंगच्छतामानयेत्याज्ञप्तआदिष्टःसधूम्रलोचनःदै

तत्परित्राणदःकश्चिद्यदिवोत्तिष्ठतेपरः ॥ सहंतव्योमरोवापियक्षोगंधर्वएववा ॥ ४ ॥ ॥ ऋषिरुवाच ॥ ॥ तेनाज्ञप्तस्ततःशीघ्रंसदैत्योधूम्रलोचनः ॥ वृतःषष्ट्यासहस्राणामसुराणांद्रुतंययौ ॥ ५ ॥ सदृष्ट्वातांततोदेवींतुहिनाचलसंस्थिताम् ॥ जगादोच्चैःप्रयाहीतिमूलंशुंभनिशुंभयोः ॥ ६ ॥

त्यःषष्ट्या।गुणितानांसहस्राणांसंख्येयानामसुराणांसंघट्टेनवृतःद्रुतंक्षिप्रंययौ॥ सहस्राणांषष्ट्यावृतःअसुराणांसंबंधीनिसहस्राणितेषांसम्बन्धिनीयाषष्टिःतयावृतोद्रुतंययौ॥ आज्ञप्तइतिमारणतोषण।निशामनेषुज्ञा।ज्ञपमिच्चेतिचुरादिः ॥ कर्मणिक्तः ॥ वादांतसूत्रेज्ञप्तइतिनिपातनाद्वाइट्प्रतिषेधोणिलोपउपधायाह्रस्वताच ॥ ज्ञानियोजनेचुरादिरेव॥अतो निष्ठायामाज्ञप्तइत्येव ॥ ५ ॥ ततःशुम्भनिदेशातःसधूम्रलोचनः तुहिनाचलसंस्थितांहिमाचलस्थांतांदेवींदृष्ट्वाउच्चैर्जगादअत्युच्चैरुवाच ॥ हेदेवित्वंशुम्भनिशुम्भयोर्मूलं समीपंप्रयाहिगच्छेति ॥ मूलमाद्येशिफायांस्याद्भेनिकुंजेंतिकेपिच ॥ इतिशुम्भानुकूलोर्थः ॥ देव्यनुकूलस्त्वेषः—हेदेवित्वम्।मूलप्रतिष्ठायांभ्वादिः ॥मूलनंमूलः॥भावेघञ्॥ तं मूलंप्रभुतांयाहिप्राप्नुहीतिसदेवीसखीजनःतुहिनाचलसंस्थितांतांदृष्ट्वोच्चैर्जगाद॥ कीदृशीदेवीशुंभनिशुम्भयोः॥शुम्भभासनहिंसनयोः भ्वादिःपरस्मैपदीशुम्भतिरणेभासते हिनस्ति चेतिशुम्भोदैत्यः ॥ पचाद्यच् ॥ नितरांशुम्भनंहिंसनंनिशुम्भः॥भावेघञ् ॥शुम्भस्यदैत्यस्यनिशुम्भःहिंसनंतस्मिन् विषयेयतमाना॥सप्तम्यांजनेर्डः अन्येष्वपिदृश्यतेइत्य त्रापिशब्दात्सर्वोपाधिव्यभिचारः इतिवचनाद्धात्वंतरेपिकारकांतरेपिचडोभवतिडित्यभस्यापिटिलोपः स्त्रियांटाप् ॥ अवतिरक्षतिपापेभ्यः ऊःउवौउवः॥शुम्भनिशुंभयाचासौ

ऊश्वेतिविगृह्यकर्मधारयेआद्गुणेचशुम्भनिशुम्भयोः॥यद्वा॥शुम्भनिशुम्भयादेवी।कीदृशी॥ऊः इतिपदच्छेदः॥अवरक्षणेक्विप् ॥ ज्वरत्वरस्रिव्यविमवामुपधायाश्चेतिवकारस्यअ कारस्यचऊठादेशद्वयेसवर्णदीर्घत्वेऊः रक्षिकेति॥संस्थितांसम्यगवस्थिताम्।संस्थाधारेस्थितौमृतौ ॥६॥ हेदेविअयास्मिन्नहनिभवतीप्रीत्यास्वरुच्यामद्भर्त्तारंस्वामिनंशुम्भंनोपे ष्यसिचेद्यदिनागमिष्यसिततःतर्हिएषोहंधूम्रलोचनःअधुनैवबलात्कारेणकेशानामाकर्षणादाश्रथनाद्विह्वलांविवशांभवतींममभर्तारंस्वामिनंशुम्भंनयामिप्रापयामि॥ वर्त्तमानसामी प्येभविष्यतिलट्॥उपैष्यतीतिभवच्छब्दप्रयोगेप्रथमपुरुषएव॥एत्येधत्यूठ्सुवृद्धिः॥इतिशुम्भानुकूलोर्थः॥देव्यास्त्वनुकूलस्त्वेषः-अद्यभवतीमन्मांसखीजनमात्रवर्गंप्राप्य ॥ कर्मे णिल्यब्लोपेपंचमी ॥ अबलादबलात्कारेणततएवप्रीत्याहर्षेणभर्त्तारंशिवंननउपैष्यतिचेत्उपगमिष्यतिचेत् ॥ द्वौप्रतिषेधौप्रकृतमर्थंगमयतः ॥ ततएषोहंसखीजनः तांकेशाक र्षणविह्वलांयामिप्राप्नोमिजानामि॥ कःब्रह्माअःविष्णुः तौकौब्रह्मविष्णूतयोरीशःस्वामीशिवः केशःतस्याकर्षणमाह्वानंतस्मिन्विषयेविह्वलांलाज्जितत्वात् ॥ यद्वा ॥ उपाए ष्यतीतिच्छेदः ॥ नचेत्प्रीत्येत्येकंपदम् ॥ उःसंबुद्धौरुषोक्तौचशिववाचित्वनव्ययम् ॥ धूम्रलोचनआह ॥ उहेदेविअद्यभवतीमद्भर्त्तारंशुम्भमेष्यतिप्राप्स्यति। किंभूतासती॥ पारक्षणे॥ पांतिरक्षंतिनिवारयंतिपाः ॥ कर्त्तरिक्विब्जसिरूपम् ॥ अजगतिक्षेपणयोः ॥ पःरक्षकान्शुम्भपारिवारानजतिक्षिपतिदूरीकरोतिपादेवी॥सप्तम्यांजनेर्डः ॥ अन्येष्व

नचेत्प्रीत्याद्यभवतीमद्भर्त्तारमुपैष्यति ॥ ततोबलान्नयाम्येषकेशाकर्षणविह्वलाम् ॥ ७ ॥

पिदृश्यतेइत्यत्रापिशब्दः सर्वोपाधिव्यभिचारार्थइतिवचनाद्धात्वंतरादपिकारकांतरेपिचडोभवति ॥ डित्यभस्यापीत्यजशब्दस्यटेर्लोपः ॥ स्त्रियामजाद्यतष्टाप् ॥ हल्ङ्या दिलोपेसतिपाइतिरूपम्पाशुम्भरक्षकक्षेपिका ॥ देवीशुंभंहंतुमेष्यतीत्यर्थः॥पुनःकिंभूता नचेत्प्रीत्याआकारांतमेतत्॥ चितीसंज्ञाने चेततिकेचन।तानन्येप्रयुंजतेइतिहेतुमतिचे तिणिच्ततःक्विप्॥णेरनिटि॥वेरपृक्तस्यलोपः प्रत्ययलक्षणेनगुणः ॥ चेतोदेवर्ष्यादयः तेषु चेत्सु बोधयितृषु प्रीतिःस्नेहश्चेत्प्रीतिः ॥ नइतिनञोन्यएवनिषेधार्थोनिपातः ॥ नविद्यमानाचेत्प्रीतिर्येषांदैत्यानांतेनचेत्प्रीतयः ॥ नलोपोनञइतिचास्ति नतुनशब्दस्याप्यननुबंधकस्य ॥ उज्झउत्सर्गे ॥ नचेत्प्रीतीनविद्यमानविबुधप्रीतीन्दैत्यानुज्झति उत्सृजतिहिनस्तीतिपूर्ववड्डप्रत्ययेडित्यभस्यापिटेर्लोपः सचोज्झेरेवस्त्रियांडांताट्टाप् ॥ इकोयणचि ॥ हल्ङ्यादिलोपः ॥ नचेत्प्रीत्यादेवीदैत्याननुपैष्यतिततोद्याहंधूम्रलोचनः योद्धुमनाःसन्भवतीबलाद्बलंसैन्यंप्राप्यकर्मणि। ल्यब्लोपेपंचमी ॥ न यामि नगच्छामि मद्भर्त्तारंचनगच्छामीत्यर्थः ॥ किंभूतांभवतीमेषकेशाकर्षणविह्वलामित्येकंपदम् ॥ इषगतिहिंसादर्शनेषुभ्वादिरात्मनेपदीआङ्पूर्व आसमंतादीषंतिहिंसंत्येषः पचाद्यच् ॥ एषाणांहिंसकानांदैत्यानांकेशाः मूर्द्धजाःतेषामाकर्षणंतस्मिन्विषयेविशेषेणह्वला ॥

ह्वलचलनेपचायच् ॥ एषकेशाकर्षणविह्वलांदैत्यकेशग्रहणसज्जामित्ययंदेवीशब्दार्थः॥ ७ ॥हेधूम्रलोचनत्वंबलवान्सामर्थ्ययुक्तः बलेनसैन्येनसंवृतःवेष्टितः॥ अथचदैत्येश्वरशु म्भेनप्रहितः प्रस्थापितःबलात्केशाकर्षणादेः मामबलांनयसिततोहंतेतवकिंकरोमिस्त्रीत्वाद्युद्धादिकंकर्तुमक्षमास्मीतिशुम्भानुकूलोर्थः ॥ देव्यनुमतस्त्वेषः-हेधूम्रलोचनत्वं शुम्भेनप्रस्थापितोसिएवंचसतित्वामहंपृच्छामिबलमत्तीतिबलात्अहंमांदेवींतेधूम्रलोचनस्यसंबंधिवस्तुकिंनयासिकिंप्रापयसि॥ नयेर्द्विकर्मकत्वादजांग्रामंनयतीतिवत्प्रधानमप्रधानं चेतिकर्मद्वयंवक्तव्यंतत्रबलादंमांदेवींप्रधानंकर्म। द्वितीयांकिं स्यानद्वद॥अथेहप्रकृतित्वाद्बलादंमांदेवींशुम्भंचेन्नयसितर्हिबलादमितिकृत्वातस्यबलंसामर्थ्यमत्स्यामि ॥अथबलादंमांशुम्भसैन्यंप्रतिनयसिबलादहंतदेवात्स्यामिसंहारिष्यामि ॥ ततस्तेकिंकरोमिकिमस्तिनेयत्करोम्यहंयत्किंचिदस्तितदपिविनष्टंकरोमीतिक्रोधावेशोत्थोदेव्यभिप्रायः ॥ ८॥ इत्येवंदेव्योक्तःसधूम्रलोचनअसुरःतांदेवीमभ्यधावत्वेगेनाभ्यद्रवत्॥मृगतौसर्त्तेर्वेगितायांगतौधावादेशोवक्तव्यः॥यद्वा॥धावुगतिशुद्ध्योःउभयपदी ॥ ततोनंतरंसांबिकादेवीतंधूम्रलोचनंक्रोधानलज्वालागर्भेणहुंकारेणैवभस्मचकारभस्मीचकार ॥ हुंवितर्केपरिप्रश्नेऽभित्सायांभर्त्सनेभये॥भस्मसाचकारेतिवापाठः ॥ विभाषासातिकार्त्स्न्येइत्यभूततद्भावेकृ

श्रीदेव्युवाच ॥ ॥ दैत्येश्वरेणप्रहितोबलवान्बलसंवृतः ॥ बलान्नयसिमामेवंततः किंतेकरोम्यहम् ॥८॥ ऋषिरुवाच ॥ इत्युक्तःसोभ्यधावत्तामसुरो धूम्रलोचनः ॥ हुंकारेणैवतंभस्मसाचकारांबिकाततः ॥९॥ अथक्रुद्धंमहासैन्यमसुराणांतथांबिका॥ववर्षसायकैस्तीक्ष्णैस्तथाशक्तिपरश्वधैः॥१०॥

भ्वस्तियोगेसंपद्यकर्त्तरिच्विरित्यस्मिन्विषयेकृत्स्नतायांगम्यमानायांसातिप्रत्ययः ॥ अभस्मभस्मचकारकार्त्स्न्येनभस्मसाचकारधूम्रलोचनशरीरंकृत्स्नमपि भस्म चकारेत्यर्थः॥अंतर्वर्तिविभक्त्याश्रितेनपदत्वेननलोपेनपादांतयतिश्छांदसत्वेन ॥९॥ अथधूम्रलोचनेभस्मीकृतेतथाक्रुद्धमसुराणांमहासैन्यंकर्तृतीक्ष्णैःसायकैःशरैस्तथाशक्तिसहितैः परश्वधैःपरशुभिश्चायुधैःकुठारैरंबिकांववर्षशरसंपातेनशक्तिपरशुपातेनचदेवींसंछादयामास॥शक्तिपरश्वधैरितिमध्यमपदलोपीसमासः॥द्वंद्वेतुसेनांगत्वादेकवद्भावःस्यात् ॥इहासुरमहासैन्यंकर्तृअंबिकामायुधैर्ववर्षतदासिंहएवयुयुधेनैवांबिकेतिकस्यचिदाकांक्षास्यात्किमंबिकासुरसंपाततःनजीवतियद्यप्युत्तरत्रसासमानीयतांलब्धिवितितदमृततोपपत्स्यतेत थापिसामहासुरशरसंपाततःमूर्छितासतीपुनरुत्थाययोद्धुमक्षमाभूत्॥ अन्यथायुध्यतैवकिंनेतिवीरकर्मण्यपकर्षःस्यात् ॥ अतःसोपियुयुधेतद्यथातत्रैवश्लोकेअंबिका आम् भवतिपदच्छेदः ॥ अंबिकाकर्त्रीमहासैन्यंकर्म ॥ उ प्रश्नेंगीकृतौरोषआंस्मृतौचावधारणे ॥ अथधूम्रलोचनःसंग्रामेदेव्याभस्मीकृतइत्यामितिमनसास्मृत्वाक्रुद्धमसुराणांमहासैन्यंकर्मअंबिकापितथातद्वदेवक्रुद्धासतीसायकादिभिर्ववर्षअसुरसेनांछादयामास ॥ यद्वा ॥ आमित्यवधारणे ॥ अथतथाक्रुद्धमसुराणांमहासैन्यंकर्मअंबिकाआमंबि

कैववर्षनत्वसुरसैन्यमम्बिकाइत्यंबिकायाएववीरकर्मण्युत्कर्षः ॥ १० ॥ ततः कोपाद्धुतसटः कंपितस्कंधकेसरः ससिंहोदेव्यावाहनंवाहनीभूतोदेव्याः सिंहः सुभैरवमतिभयंकरंनादंगर्जनंकृत्वाऽसुरसेनायांहंतुंपपातउत्प्लुत्यनिपपात ॥ स्ववाहनमितिपाठेऽनन्यसाधारणंवाहनंदेव्याएवसिंहोवाहनंनान्यस्येति॥सइतिपाठेसप्रसिद्धः सिंहः॥ भीरोरयंत्रासकारीभैरवः त्रिलिंगः ॥ वाहनमाहितादितिनिर्देशाद्वाहनशब्दोनपुंसकलिंगः ॥ असुरसेनायांनिपत्यासिंहः किमकार्षीदितितत्राह ॥ ११ ॥ ससिंहः पंचास्यः करप्रहारेणकांश्चिद्दैत्यान्जघान ॥ आस्येनअपरांश्चदैत्यान्मुखेनजघान ॥ चरणेनाक्रम्यअन्यान्जघानजिहिंस ॥ ससिंहः खलुपंचास्यः एकमास्यंवक्रमास्यवद्घातकत्वात्करद्वयंचरणद्वयंचास्यचतुष्टयंपंचास्यानियुद्धसाधनानियस्यसपंचास्यः ॥आक्रम्यचाधरेणान्यानित्यपिपाठेअधरेणचरणभागेनाक्रम्यान्यान्महासुरान्जघानेत्येवार्थः ॥ अन्यथाऽधरेणोष्ठेनमहासुराणामाक्रमणंनसंभवति॥अथदेवीप्रभावात्सम्भवेत् । तस्याप्यास्येनचापरान्जघानेत्यास्यग्रहणेनैवाधरस्यापियुद्धसाधनत्त्वेनग्रहणस्यसिद्धत्वात्पुनरधरेणेतिकेयंवाचो

ततोधुतसटः कोपात्कृत्वानादंसुभैरवम् ॥ पपातासुरसेनायांसिंहोदेव्यास्तुवाहनः ॥ ११ ॥ कांश्चित्करप्रहारेणदैत्यानास्येनचापरान् ॥ आक्रम्यचरणेनान्यान्निजघानमहासुरान् ॥ १२ ॥ केषांचित्पाटयामासनखैः कोष्ठानिकेसरी ॥ तथातलप्रहारेणशिरांसिकृतवान्पृथक् ॥ १३ ॥

युक्तिरुक्तिमताम् ॥ यद्वा ॥ अधरेणोष्ठेनस्फुरितेनप्रकटितः कोपोधरइत्युपचर्यते ॥ अधरेणकोपेनाक्रम्य[1] ॥ यद्वा ॥ अविद्यमानाधराभूर्यत्रसोधरः आकाशदेशः ॥ अंतरिक्षेणाक्रम्यनिरुध्य ॥१२ ॥ सकेसरीसिंहः केषांचिद्दैत्यानांकोष्ठान्जठराभ्यंतरान्देशान्नखैर्नखरैरुत्पाटयामासविदारयामास॥पटभाषार्थश्चुरादिः ॥ धातूनामनेकार्थत्वेनप्रयोगतोविदारणार्थः ॥ अस्राकल्येतुचिन्वन ॥ पुंसिकोष्ठोंतर्जठरंकुसूलोंतर्गृहंतथा ॥ कोष्ठानिकेसरीतिपाठेतुव्यत्ययेनच्छांदसंनपुंसकत्वम् ॥ यद्वा ॥ कोष्ठान् इकेसरीतिच्छेदः ॥ इः कामः इनाकामेनचरतिइचारीअनिवारितप्रसरः केसरीत्यर्थः ॥ मध्यमपदलोपिसमासः ॥ तथातलप्रहारेणहस्ततलाघातेनचपेटेनचपेट्याचपेटघातेनकेषांचिद्दैत्यानांशरीरेभ्यः शिरांसिपृथग्भूतानिचकार ॥ करनखपंजरेणशिरांसिच्छित्वाभुविपातयामासेत्यर्थः ॥ पाणौचपेटप्रतलप्रहस्ताविस्तृतांगुलौ ॥ केचिदाहुः तलाभ्यांप्रतलाभ्यांप्रवर्तितत्वेनप्रहारेणशिरांसिपृथक्कृतवानितियुक्तमेतत ॥ यदभ्यधुः ॥ द्वौसंहतौसिंहतलौप्रतलौवामदक्षिणौ ॥द्वौप्रतलौप्रसृततलौसंहतौवामदक्षिणौमिलितौसिंहतलाख्यौकथ्येते॥ सिंहोपि

---

१ यद्वा अधस्तादपचारतः शरीरस्याधस्ताद्धोभागेन उरोदेशेनाक्रम्य इति पाठान्तरम् ।

मिलिताभ्यांचपेटाभ्यांहंति ॥ १३ ॥ तथाशौर्यभाजातेनसिंहेनापरेशत्रवः विच्छिन्नबाहुशिरसः कृताः ॥ बाहवश्चशिरांसिचबाहुशिरः प्राण्यंगत्वादेकवद्भावः विछिन्नंबाहुशिरोयेषां तेतथाधुतकेसरः सः केसरीअन्येषांमहासुराणांकोष्ठादन्तर्जठराज्जठरांतर्देशात्कोष्ठंविदार्यकर्मणिल्यब्लोपेपञ्चमी ॥ रुधिरंपपौ ॥ पापाने ॥ एतेनसिंहस्यापिवीरपानौचितीकथिता ॥ वीरपानंतुयत्पानंवृत्तेभाविनिवारणे ॥ १४ ॥ तेनकेसारिणादेव्यावाहनेनातिकोपिनाअतएवक्षणेनैवेतत्प्रसिद्धंबलंसैन्यम् ॥ यद्वा ॥ तस्यधूम्रलोचनस्यबलंसैन्यंक्षयंनाशंनीतंप्रापितम् ॥ निर्व्यापारस्थितौकालविशेषोत्सवयोःक्षणः ॥ निळयापचयौक्षयौ ॥ आत्मायत्नोधृतिर्बुद्धिः स्वंभावोब्रह्मवर्ष्मच ॥ १५ ॥ इहश्रवणाकोपनाज्ञापनाक्रियात्रयापेक्षैककर्तृकत्वेनश्लोकयुग्मस्यैकोन्वयः ॥ देव्यातत्प्रसिद्धंधूम्रलोचनमसुरंनिहतंभस्मितंश्रुत्वाततः देवीकेसारिणादेव्याः सिंहेनतस्यधूम्रलोचनस्यकृत्स्नंबलं सैन्यंक्षपितंनाशितंच ॥ श्रुत्वादैत्याधिपतिःशुम्भः कोपतः प्रस्फुरिताधरः संरंभकंपितोष्ठःसन्नुचुकोपचुक्रोध ॥ अथतौप्रसिद्धौप्रागुदृष्टदेवीकौचण्डमुंडौमहासुरौकर्मभूतौवाज्ञापयामासनिजभृत्यौनियुयुजे

विच्छिन्नबाहुशिरसः कृतास्तेनतथापरे ॥ पपौचरुधिरंकोष्ठादन्येषांधुतकेसरः ॥ १४ ॥ क्षणेनतद्बलंसर्वंक्षयंनीतंमहात्मना ॥ तेनकेसरिणा देव्यावाहनेनातिकोपिना ॥ १५ ॥ श्रुत्वातमसुरंदेव्यानिहतंधूम्रलोचनम् ॥ बलंचक्षयितंकृत्स्नंदेवीकेसरिणाततः ॥ १६ ॥ चुकोपदैत्याधिपतिःशुंभः प्रस्फुरिताधरः ॥ आज्ञापयामासचतौचण्डमुण्डौमहासुरौ ॥ १७ ॥ हेचण्डहेमुण्डबलैर्बहुभिः परिवारितौ ॥ गच्छतंतत्रगत्वाचसासमानीयतांलघु ॥ १८ ॥ केशेष्वाकृष्यबद्धावायदिवः संशयोयुधि ॥ तदाशेषायुधैः सर्वैरसुरैर्विनिहन्यताम् ॥ १९ ॥

क्षपितमिति । क्षपप्रेरणे चुरादिः ॥ अदन्तः क्षयितमितिपाठे क्षयः संजातोस्येतितारकादित्वादितच् ॥ आज्ञापयामास ॥ ज्ञानियोजनेचुरादिः ॥ १६ ॥ १७ ॥ हेचण्डहेमुण्डयुवांबहुभिः बलैः परिवारितौगच्छतं कुत्र यत्रसादेवीपर्वतेगत्वाचगत्वैवक्षिप्रंलघुसादेवीसमानीयतांयुवाभ्यामितिशेषः ॥ गच्छतमितिगमेर्लोणमध्यमपुरुषस्यद्विवचनस्यथसस्तम्लोटोलङ्वदतिदेशात ॥ सेत्यभिहितंकर्म ॥ मामितिद्वितीयंकर्म ज्ञेयमजाग्रामंनीयतामितिवत् ॥ प्रधानंकर्माभिहितंनाप्रधानम् ॥ इतिशुम्भानुकूलोर्थः ॥ देव्यनुकूलस्त्वेषः ॥ तथाहि ॥ गच्छतं तत्र गत्वा तु साआसमानीयतां लघु इतिपदच्छेदः ॥ असुक्षेपणेभावेघञ् ॥ असनमासः क्षेपोधःकारोन्यक्कारः ॥ आस्तुस्यात्कोपपीडयोः ॥ ततश्चचण्डमुण्डयोरगमनंदृष्ट्वासखीवर्गो देवीमाचष्ट ॥ हेदेवित्वंआः कोपेनतत्रगच्छकुत्रयत्रचण्डमुण्डौस्तः ॥ गत्वातुपुनः तंचण्डंमुण्डंचआह्वयस्व ॥ हेचण्डहेमुण्डयोद्धुमाच्छेति ॥ किंच ॥ तुपुनः तयादेव्यालघुशीघ्रंसाचण्डमुण्डसम्बंधिनीसेनाआसंक्षेपंविनाशंचनीयतांयोध्यतामिति ॥ १८ ॥ हेचण्डहेमुण्डसैन्यानियुष्माभिः सादेवी

केशेष्वाकृष्यबद्ध्वावारज्जुभिःसासमानीयताम् ॥ केशाकर्षणेबन्धनेचवोयुष्माकंयदिपक्षांतरेसंशयःस्यात्तदायुधिसंग्रामेऽशेषायुधैःसाधनैःतद्युक्तैर्वासर्वैरसुरैर्युष्माभिःसादेवीनि
हन्यतांनिहता निजाधीनाकर्त्तव्या ॥ यद्वा ॥ विशेषेणनिहंतव्या ॥ निग्राह्यावश्याकर्त्तव्येतिशुम्भानुकूलोर्थः ॥ देव्यनुकूलस्त्वेषः--देवीस्ववर्गानादिक्षत् ॥ हेमदीयागणा युष्माभिःचण्डो
मुण्डश्चकेशेष्वाकृष्यबद्ध्वावाविनिहन्यतांयदिवोयुष्माकंकेशाकर्षणेबन्धनेचवासंशयःस्यात् तदायुधिसंयुगेऽशेषायुधैःसर्वैर्युष्माभिःवैर्दैत्यगणापहारिभिः इतिदेव्यभीष्टार्थः ॥
अन्यथादेव्याःपराभिभववचःश्रवणादपकर्षःशक्यते ॥ अथवाकेशेष्वाकृष्य अवा अयदिवःसंशय इतिपदच्छेदः ॥ कःब्रह्माअःविष्णुःईशोरुद्रःतेषामिवइषवोबाणाः
यस्याःसाकेशेषुः तयादेव्याकेशेष्वा ॥ आकृष्यबद्ध्वादैत्यानव रक्ष । कान् । अयदिवः अयेनलब्धायौर्यैस्तेअयदिवो देवाःतानयदिवःसंभृताःआभरणीकृताःशयवःचक्रमण्ड
ल्याख्याःसर्पायया सासंशायुः कालिकादेवीतत्संबुद्धौहेसंशायो । तस्यायुधोयुद्धस्यसंबंधिन्यआशाःतामुभयुक्तानीषालांगलदंडाएवायुधानियैःतैस्तदाशेषायुधाःदैत्याःतैरस्यवि
ग्रहांतरंत्वग्रेवृक्ष्ये इति कृत्पदविवाक्षितविग्रहा ॥ अत्रान्वयः ॥ सखीभिर्देवीप्रार्थ्यतेहेसंशायोसंभृतशयोहेसंभृतचक्रमंडल्याख्यसर्पाभरणेकालिकेदेवित्वमयदिवः अयेन

तस्यांहतायांदुष्टायांसिंहेचविनिपातिते ॥शीघ्रमागम्यतांबद्ध्वागृहीत्वांतामथांबिकाम्॥२०॥ ॥ इतिश्रीमार्कण्डेयमहापुराणेदेवीमाहात्म्येधूम्रलोचनवधोनामत्र्यशीतितमोऽध्यायः ॥ ८३ ॥ ॥ छ ॥

लब्धस्ववर्गानदेवानिव रक्ष । अवरक्षणे ॥ हेदेविकेशेष्वा तृतीयांतमेतत् ॥ ब्रह्मविष्णुरुद्रसदृशबाणयात्वयापाशेनदैत्यानाकृष्याच्छिद्यालभ्यवातदाशेषायुधैर्युद्धदिक्प्रयुक्तैरा
युधैःसर्वैरसुरैःसहसचण्डःमुण्डश्चदैत्योविनिहन्यतांहिंस्यताम् ॥ १९ ॥ हेचण्डहेमुण्डयुष्माभिःदुष्टाभिःदैत्यद्वेषिण्यांतस्यांदेव्यांहतायांताडितायांपरासूकृत।यांवातदी
येसिंहेभुविनिपातितेव्यसूकृतेवाशीघ्रमागम्यतांनिजस्थानंप्राप्यताम् ॥ अथसाजीवंतीआनेतुंशक्याचेत्तर्हितामंबिकांगृहीत्वाबंद्ध्वाशीघ्रमागम्यतांतद्दर्शनेममाभिलाषोस्ती
तिभावः ॥ तस्यांहतायामिति ॥ अकोपप्रज्वलितात्मनापुंसाप्रबलशत्रौमृधेमत्तोंपद्रष्टुमिष्यते ॥ अथवाक्रोधव्याकुलचेतसातस्यांहतायांममागम्यतामितिवदुक्तम् ॥ ततः
पुनरपिउक्तम् ॥ बद्ध्वातुपटुंतां जीवंतीमेवशीघ्रंगृहीत्वायुष्माभिरागम्यतामित्युक्तम् ॥ नन्वंबिकाशब्दोमातृवाचीतिशुम्भःकथंब्रूयात्तामेवाभिगंतुकामः ॥ उच्यते ॥ शुंभादन्येषां
साम्बिकैवेतितस्यांचण्डमुण्डादीनांरमणाभिलाषोनंकर्त्तव्यइयंहियुष्माकमंबैवेतिसूचयितुमंबिकामित्युक्तम् ॥ मातृगमनंहिपशुपक्षीतरेषुस्वतएवगर्हितमितिशुम्भानुकूलोर्थः ॥ दे
व्यनुकूलस्त्वेषः ॥ तस्यां हतायां दुष्टायां सिंहेच विनिपातिते ॥ शीघ्रमागम्यतो बद्ध्वा गृहीत्वातामथांबिकामितिपदच्छेदः ॥ हतायामितिहन्तेर्गत्यर्थेकर्मणिक्तः ॥ विनिपाइ

तिपैशोषणेकर्त्तारिक्विप् ॥ विशेषेणनितरांपायतिशत्रूनूशोषयतिविनिपा तयाविनिपादेव्या आतितेइति ॥ अतसातत्यगमने ॥ अतनमातःभावेघञ् ॥ आतःसंजातोस्याआतितातहे आतितेदेवि ॥ अम्बिकाशब्देनदेवीहननंविवक्षितम् ॥ तर्हि ॥ अविरविलविअवस्रंसनेइत्यतःकर्तारिण्वुलिवोरकादेशेइत्वेचअम्बतेशत्रूणांगलेष्विति अम्बिकायारज्जुःविवाहकृता ॥ इतिविवक्षितविग्रहाः ॥ अत्रायंदेव्यनुकूलोऽन्वयउच्यते ॥ हेसिंहेच ॥ अन्यत्रचहे आतिते जगद्रक्षणायसंजातसततगते हेदेवि तस्यांदुष्टायांदेवविद्वेषिण्यांदैत्यसेनायांहतायांगतायामुपस्थितायांसत्यामथानन्तरंविनिपाविशेषेणनितरांपायंत्याशत्रूनूशोषयंत्यात्वयादेव्याम्बिकांशत्रुगृहेषुर्लंबिकांपाशरज्जुंगृहीत्वातांसेनांबद्ध्वाशीघ्रमागम्यतामितिसखीभिःदेवी निगदितेतिदेवीष्टार्थसिद्धिः ॥२०॥ इतिश्रीमद्राजाधिराजतोमरान्वयश्रीमदुद्धरणात्मजश्रीशंतनुचक्रवर्तिविरचितायांदेवीमाहात्म्यटीकायांधूम्रलोचनवधो नाम त्र्यशीतितमोध्यायः ॥ ८३ ॥ छ ॥ ततोधूम्रलोचनवधानंतरंशुम्भेनाज्ञप्ताआदिष्टाश्चंडमुंडपुरोगमाःदैत्याःचतुरंगबलोपेताःहस्त्यश्वरथपादातसमेता अभ्युद्यतायुधाःसंनद्धबद्धोन्मुखायुधाः संतःययुःजग्मुः ॥ आज्ञप्ताइतिवादांतमूत्रेणनिपातितः ।पुरोगमःपुरोगामी ।पुरःगच्छतःपुरोगमौचण्डमुण्डौपुरोगमौयेषांते ॥ हस्त्यश्वरथपादातसेनांगस्याच्चतुष्टयम् ॥ चत्वार्यंगानिय

ऋषिरुवाच ॥ आज्ञप्तास्तेततोदैत्याश्चंडमुंडपुरोगमाः ॥ चतुरंगबलोपेताययुरभ्युद्यतायुधाः ॥ १ ॥ ददृशुस्तेततोदेवीमीषद्धासांव्यवस्थिताम् ॥ सिंहस्योपरिशैलेंद्रशृंगेमहतिकांचने ॥ २ ॥ तेदृष्ट्वातांसमादातुमुद्यमंचक्रुरुद्यताः ॥ आकृष्टचापासिधरास्तथान्येतत्समीपगाः ॥ ३ ॥ ततःकोपंचकारोच्चैरंबिकातानरीन्प्रति ॥ कोपेनचास्यावदनंमषीवर्णमभूत्तदा ॥ ४ ॥ भ्रुकुटीकुटिलात्तस्याललाटफलकाद्द्रुतम् ॥ कालीकरालवदनाविनिष्क्रांतासिपाशिनी ५

त्र ततबलंसैन्यंतेनउपेताःययुरेवनपुनरायाताइतिभावः ॥ १ ॥ ततःआगताःतेचंडादयोदैत्यामहत्युच्चेकांचनमयेशैलेशृंगेहिमाद्रिशिखरेस्थितस्यासिंहस्यउपरिव्यवस्थितांविशेषेणावस्थितामीषदल्पोहासोयस्याःसातांदेवींददृशुः ॥ कचिदीप्तिबंधनयोःभावेल्युट् ॥ कंचनस्यपीतदीधितिरूपस्येदमधिकरणत्वेनकांचनंशृंगंतस्मिन्नितिव्युत्पाद्यतेरूपम् ॥ विविधवर्णसान्निध्याद्वर्णोत्कर्षोदेव्यावर्णितः ॥ शत्रूणांतुविरुद्धवर्णदर्शनात्विवर्णमुखतासूच्यते ॥ देवीमीषद्धासामितियथाप्राग्धूम्रलोचनःससैन्यःफलंप्रापत्चंडादिरपिप्राप्स्यतिइतिदेव्याःसोत्प्रासोवर्णितः ॥ २ ॥ ततउद्यताउद्युक्ताःतेचण्डादयःतांदेवींदृष्ट्वासमादातुमुद्यमंचक्रुः ॥ हंतुंवातत्समीपआसन् ॥ आकृष्टाःआच्छिताःचापायैःतेचअसीनांखड्गानांधराःधारकाः असिधराश्चेतिद्वंद्वः ॥ आच्छिआयामेआच्छिताः ॥ ३ ॥ ततोदैत्यानुपसंहर्तुमंबिकादेवीतानागतानरीनूदैत्यान्प्रतिउच्चैरतितरांकोपंचकारतदाकोपेनचास्यावदनंमुखंमष्याइवकृष्णोवर्णोयस्यतन्मषीवर्णमभूत् ॥ ४ ॥ यदंबिकामुखंकोपात्कृष्णवर्णमभूल्ललाटात्कालीनामदेवीदैत्यान्विनाशयितुंजातेत्याह ॥ शत्रुषुकुप्यंत्याःतस्यादेव्याभ्रुकुटीकुटिला

त् । भ्रुवौकुटीइवभ्रुकुटी ॥ इकोह्रस्वोङ्योगालवस्येतिवाऔत्तरपदिकंह्रस्वत्वंवाअत्वंचभ्रूकुट्यादीनाम्।तेनउभयविकल्पेत्रैरूप्यम् ॥ भ्रूकुटीभ्रुकुटीभ्रृकुटीवेति । भ्रूकुट्याःभ्रूभंगात्कुटिलंभ्रुग्नंतस्माल्ललाटफलकात् ललाटंफलकमिवविशालत्वेनतस्मात्तत्सकाशात्द्रुतंशीघ्रं करालवदनाकरालंभयंकरंदंतुरंवदनंयस्याःसा.दंष्ट्राकरालवक्त्रा ॥असिःखड्गः पाशश्चायुधमाकर्षणसाधनंतद्वतीअसिप।शिनीखड्गपाशपाणिःसतीकालीनामशक्तिः कापिअपरादेवीविनिष्क्रांता ॥ ५॥ कीदृशीकालीधरतिबिभर्त्तिधराविविधानिचित्राणि यस्यतत्विचित्रंखट्वायाअंगंतस्यधराविचित्रखट्वांगधरा ॥ यद्वा–विचित्रंखट्वासुरस्यांगंशरीरमंबकोस्थिपंजरःकंकालाख्योत्रगृह्यतेतस्यधरा॥प्रेतनररूपखट्वांगधरेतिचाहुः ॥ नराणांप्रेतानांशिरसांमालानरमालास्रक्विभूषणंयस्याः सा ॥ 'नरमुण्डमालाविभूषणा ॥ मध्यमपदलोपीसमासः । द्विधागता आपो यत्रतद्वीपंतदस्त्यस्यविवासत्वेन द्वीपी व्याघ्रः तस्यचर्म परीधानंवासो यस्याःसा ॥ अन्येषामपिदृश्यतइतिदीर्घः ॥ शुष्कं मांसं यस्याःसानिर्मांसाअस्थिचर्ममात्रशरीरा ॥ अतएवातितरांभैरवाति भयंकरा ॥ अतिक्रांताभैरवान्भयंकरानतिभैरवावा ॥ ६ ॥ पुनःकीदृशी अतिक्रांतंविस्तारमधिकोविस्तारोयस्यवातद्वदनंयस्याःसा अतिविस्तारवदना ॥

**विचित्रखट्वांगधरानरमालाविभूषणा ॥ द्वीपिचर्मपरीधानाशुष्कमांसातिभैरवा ॥ ६ ॥ अतिविस्तारवदनाजिह्वाललनभीषणा ॥ निमग्नारक्तनयनानादापूरितदिङ्मुखा ॥ ७ ॥ सावेगेनाभिपतिताघातयंतीमहासुरान् ॥ सैन्येतत्रसुरारीणामभक्षयततद्बलम् ॥ ८ ॥ पार्ष्णिग्राहांकुशग्राहयोधघंटासमन्वितान् ॥ समादायैकहस्तेनमुखेचिक्षेपवारणान् ॥ ९ ॥**

ललईप्सायांचुरादिराकुस्मीयआत्मनेपदी । णिचिभावेल्युटिलालनम् । ललनंत्वनित्यण्यन्तत्वपक्षेज्ञेयम् ॥ जिह्वायाललनमवलेढुमिच्छातेनभीषणाभयंकरा ॥ निमग्नेनितरामन्तर्लीनेअन्तर्गतेआरक्तेनयनेयस्याः सा निमग्नारक्तनयना ॥ नादेनसिंहनादेनआसमन्तात्पूरितानिदिशामाशानामपिमुखानिद्वाराण्यन्तरालानियस्याः सा । स्वांगचोपसर्जनादसंयोगोपधाद्वाङीष् ॥ दिक्पूर्वपदात्ङीब्वा ॥ वाटाप् ॥ तेनङीषोपवादेनङीपामुक्तेटाबेव ॥ यद्वेहभागादिदिक्शब्दपूर्वकत्वाभावातङीपामुक्तेटाबेव ॥ ७॥ साकालीदेवीवेगेनाभिपपात ॥ महासुरान्घातयन्तीघातंकुर्वतीताडयंतीसतीतत्रसैन्येसुरारीणां देवद्विषांबलं सैन्यंकर्मअभक्षयत् ॥ घातयन्तीतिघातशब्दात्तत्करोतीति णिच् ॥ अन्यथाघ्नन्तः प्रयुंक्तेघातयन्तीत्युक्ते घ्नंतुमामसुराइतिप्रत्युक्तवतीत्यर्थःस्यात् ॥ यद्वाहंन्तिर्गत्यर्थःघ्नतः गच्छतःपलायमानान्पलायध्वमितिप्रयुंजानाघातयंतीत्युच्यते ॥ यद्वागच्छतःपुरुषान्गच्छतेतिप्रयुंजानागमयन्तीत्युच्यते ॥ यद्वामहासुरान्घातयन्तीत्यर्थः ॥ स्वार्थेशिष्टप्रयोगतोणिच् ॥ निवृत्तप्रेषणाद्धातोःप्राकृतेर्थेणिजिष्यते।धात्वर्थानुप्रवेशोपिबुद्ध्यारोपाण्णिचंविनेतिवचनात् ॥वेगःप्रवाहजवयोः ॥ ८ ॥ पुमान्पार्ष्णिस्तयोरधः ॥ तयोःगुल्फयोरधःपश्चाद्भागःपार्ष्णिः । इहोपमानात

पार्ष्णिमिवपार्ष्णिंगृह्णंतिअवष्टभ्नंतितेपार्ष्णिग्राहाः ॥ पार्ष्णिग्राहास्तुपृष्ठतः॥गजानांतुपार्ष्णिग्राहाःशिक्षकाःपृष्ठगाः।अंकुशोस्त्रीसृणिःस्त्रियाम्॥ अंकुशान्गृह्णंतीत्यंकुशग्राहाः॥ कर्मण्यण्॥युध्यन्तेप्रहरंतियोधाःपचाद्यच्॥घंटाः । गजानांपार्श्ववर्तिन्यःनिद्रालस्यहारिण्योलकारार्थाश्चतत्समन्वितान्वारयंतिअरीनितिवारणाःगजाः॥नंद्यादित्वाल्ल्युः ॥ एकेनहस्तेनसमादायसंक्षिप्यगृहीत्वामुखेचिक्षेपकालीदेवीतिसंबंधः॥पार्ष्णिग्राहादिभिर्घंटाभिःसहितान्गजान् ॥ चखादेत्यर्थः ॥ ९ ॥ किंकुर्वतीसाकालीतथैवगजानिवयोधं योद्धारमश्वारोहंजात्येकवचनम् ॥ तुरगैरश्वैःसमंवक्त्रेनिःक्षिप्यदशनैः दंतैःसाधनैरतिभैरवमतिभयंकरंमृत्युंचर्वयन्तीत्युच्यते ॥ गतिबुद्धिप्रत्यवसानार्थेतिसूत्रेण अण्यंताव स्थायांयःकर्त्तासण्यंतेकर्मभवति । रथंसारथिनेत्यत्रजात्येकवचनम् ॥ रथान्सारथिभिः सहवक्त्रेनिःक्षिप्यदशनैःसाधनैःअतिभैरवंमृत्युम् चर्वयन्तीचर्वंतंचर्वेतिप्रयुंजाना भुंक्ष्वेतिप्रेरयंतीत्युच्यते ॥ अत्रयोधाःतुरगाःरथाः सारथयश्चर्व्याःचर्वकोमृत्युः पात्रंवक्त्रंपरिवेषिकाकालीसैवचर्वयन्तीमातापुत्रमिवेतिसमाधिः ॥ अत्र चर्वयन्तीतिशप्श्यनोर्नित्यंनुम् ॥ चर्वयतीतिपाठेपिलिङ्विषयेकालेव्यत्ययोबहुलमितिलट् ॥ १० ॥ हस्त्यश्वरथविध्वंसनानंतरंपदातिरूपसैन्यंविध्वंसयितुमाह

तथैवयोधंतुरगैरथंसारथिनासह ॥ निःक्षिप्यवक्त्रेदशनैश्चर्वयंत्यतिभैरवम् ॥ १० ॥ एकंजग्राहकेशेषुग्रीवायामथचापरम् ॥ पादेनाक्रम्यचैवान्य मुरसान्यमपोथयत् ॥ ११ ॥ तैर्मुक्तानिचशस्त्राणिमहास्त्राणितथासुरैः ॥ मुखेनजग्राहरुषादशनैर्मथितान्यपि ॥ १२ ॥ बलिनांतद्बलंसर्वमसुरा णांदुरात्मनाम् ॥ ममर्दाभक्षयच्चान्यानन्यांश्चाताडयत्तथा ॥ १३ ॥

साकालीएकमसुरंताडयितुंकेशेजग्राह ॥ अथ अपरंचदानवंग्रीवायांशिरोधौजग्राह ॥ साकालीअन्यंदानवंपादेनवाक्रम्यअपोथयत्हिंसितवती ॥ यद्यपियुध्यत्यूधतिहिंसार्थे भासार्थेपोथयेदित्यभिधानात्चुरादौपृथभासार्थइतिदृश्यते तथापिधात्वनेकार्थत्वेनपुथहिंसार्थइत्यपिज्ञेयः ॥ अथवाअपोटयदितिपाठःपुटसंचूर्णनेचुरादिः ॥ असूदय दितिपाठेषूदहिंसायांचुरादिः ॥ अन्यंदानवमुरसाक्रम्यापोथयत् ॥ ११ ॥ साकालीदेवीतैःचण्डमुण्डादिभिरसुरैर्मुक्तानिप्रयुक्तानिशस्त्राणिखड्गादीनिहस्तस्थानि तथामहांत्यस्त्राणिआग्नेयवायव्यादीनिक्षिप्यणिमुखेनजग्राह ॥ अपिचतानिशस्त्राणिमहास्त्राणिचमुखेनगृहीत्वादशनैःसाधनैःतयाकाल्यादेव्यामथितान्यपि॥मथविलोडने विलोडितानिचूर्णानिशस्त्रमस्त्रमायुधंतिआयुधत्वेनएकत्वेपितत्तज्जात्याकारप्रयोगभेदेनभेदोस्त्येवतयोरित्याहुः ॥ देवीशक्तिर्विचित्रातेनघटतएवायमर्थः ॥ १२ ॥ साकाली देवीदुरात्मनांदुष्टाशयानांबलिनांचण्डादीनांतत्प्रसिद्धंबलंसैन्यंममर्द ॥ मृदक्षोदेत्र्यादिः लिट् चुक्षोदचूर्णीचकार ॥ अन्यान्दैत्यानभक्षयच ॥ तथाअन्यान्दै

त्यानताडयत् ॥ तडआघातेचुरादिः ॥ १३ ॥ तयाकाल्यादेव्याकेचिदसुराः असिनामण्डलाग्रेणनिहताःताडिताःसंतःविनाशंजग्मुः ॥ तथाकेचिदसुराःदंताग्राभिहताः विनाशंजग्मुः ॥ खट्वायाअंगमंघ्रिःतेनताडिताः खट्वेहपितृभूमिष्ठाश्मशानसिद्धिलब्धिदा देवता तद्दत्तमंगमायुधमप्रतिहतशक्तिकम् ॥ अन्येत्वाहुःखट्वासुरशरीरपंजरःखट्वाख्यमंगमिति ॥ अन्येतुप्रेतनरशरीरकीकसपंजरःकंकालःखट्वांगमित्याहुः ॥ दंतानामग्राःभागाःतेपुवाभागास्तैरभिहताः ॥ १४ ॥ काल्यादेव्याक्षणमात्रेणयद्वाक्षणेनरणोत्सवेन ॥ तत्प्रसिद्धंमहद्बहुलंचंडादीनांसैन्यंनिपातितंदृष्ट्वाप्रचंडविक्रमःचंडोदैत्यः तामतिभीषणामतिभयंकररूपविक्रमांकालींदेवीमभिदुद्राव ॥ आभिमुख्येनोपद्रोतुमाडुढौके ॥ क्षणेनतद्बलंसर्वमसुराणामितिपाठेपिसएवार्थः अतिभीषणामितिपाठेतुक्रियाविशेषणमेतत् ॥ द्रुगतौलिटि ॥ अतिभीषयतेऽतिभीषणानंद्यादित्वाल्ल्युः ॥ १५ ॥ चंडस्तामभिद्रुत्यकिमकार्षीदित्यतआह ॥ शराणांवर्षाणिसंपाताःतैःमहांतिबहुलानिभीमानिघोराणितैःभीमेभयंकरेऽक्षिणीयस्याःसाताम् ॥ बहुव्रीहौसक्थ्यक्ष्णोःस्वांगात्षच्प्रममासांतः ॥ महानसुरःमुंडानिमस्तकानिक्षिप्तान्यपनीतानियैः तानिमुंडक्षिप्तानिक्षिप्तमुंडानि॥ वाहिताग्न्यादिष्विति परनिपातः ॥सहस्रेणसहस्रशःसंख्यैकवचना

असिनानिहताःकेचित्केचित्खट्वांगताडिताः ॥ जग्मुर्विनाशमसुरादंताग्राभिहतारणे ॥१४॥ क्षणेनतन्महासैन्यमसुराणांनिपातितम् ॥ दृष्ट्वाचंडोभिदुद्रावतां कालीमतिभीषणाम् ॥ १५ ॥ शरवर्षैर्महाभीमैर्भीमाक्षींतांमहासुरः ॥ छादयामासचक्रैश्चमुंडक्षिप्तैःसहस्रशः ॥ १६ ॥ तानिचक्राण्यनेकानिविशमानानितन्मुखम् ॥ बभुर्यथार्कबिंबानिसुबहूनिघनोदरम् ॥ १७ ॥

च्वीप्सायांशस् ॥ कुर्वंत्यनेनेतिचक्रम् ॥ घञर्थेकविधानम् ॥ कृञादीनांचकेद्वेभवतइतिवक्तव्यम् ॥ अथान्वयः—महासुरःचंडः महाभीमैरतिभयंकरैःशरवर्षैः भीमाक्षींभयंकरदृष्टिंकालींदेवींछादयामास ॥ छदसंवरणे चुरादिः ॥ किंच अन्येत्वाहुः—चण्डःशरवर्षैश्छादयामास मुण्डस्तुक्षिप्तैरस्त्रैः चक्रैरायुधैःछादयामासेति ॥ तन्नूत्तरे-अथमुण्डोऽभ्यधावत्तामितिप्राधान्येनपृथङ्मुण्डस्ययुद्धारम्भेणविरोत्स्यते ॥ तस्माच्चण्डएवशरवर्षैःचक्रैःछादयामासेतियुक्तंवक्तुम् । ततश्चात्रसविसर्गोमुण्डशब्दःपाठच्यताम् ॥ किंतुनिर्विसर्गःकृतसमासश्च ॥ १६ ॥ तानिचण्डेनदैत्येनप्रयुक्तान्यनेकानिचक्राणिकर्तॄणितन्मुखंतस्याःकाल्याःमुखंकर्मविशमानानिप्रवेशनशीलानि बभुः । भादीप्तौशुशुभिरेकानीवार्कबिंबानीव ॥ यथासुबहून्यर्कस्याबिंबानिमण्डलानिघनस्यमेघस्यउदरमभ्यन्तरंप्रविशमानानिभांतितथाचक्राणीति॥ नेर्विशइत्यात्मनेपदविधौनेरुपसर्गस्याश्रयणादिहशानच् ॥कस्तर्हि।ताच्छील्यवयोवचनशक्तिषुचानशप्रत्ययोनादेशोलटः नलोकाव्ययेत्यादौषष्ठीप्रतिषेधविधौतृन्निति लटःशतृचद्दतितृशब्दमारभ्यतृनोनकारेणप्र

त्याहृत्याश्रयणाचानशायोगेषष्ठींबाधित्वाद्वितीया । व्यत्ययोबहुलमित्यात्मनेपदेतुलटःशानचिलादेशयोगेषष्ठीप्रतिषेधाद्द्वितीया॥विशप्रवेशनेसकर्मकः ॥ उपदाविविशुस्तस्यनो
त्सेकः कोसलेश्वरमितिवत् ॥ उत्पातादौबहून्यर्कबिंबानिसम्भवेयुः ॥ अभूतंचौपम्यंद्रष्टव्यम् ॥ अर्कःस्फटिकसूर्ययोः॥चक्रराष्ट्रेरथांगेचसैन्येशस्त्रेचकीर्तितम् ॥ घनोमेघेमू
र्तिगुणेत्रिषुमूर्त्तिनिरंतरे ॥ १७ ॥ ततोरणोत्सवोल्लासवःकालीदेवीअतिरुषाक्रुधाभीमंभयंकरंयथास्यात्तथाजहासहसितवती ॥ कीदृशीभैरवंभयंकरंनदतीभैरवनादिनी ॥ यद्वा
भैरवः कालाग्निरुद्रस्तद्वन्नदतिगर्जतिइतिभैरवनादिनी॥भैरवंनादयतिनादोपेतंकरोतिदानवपशुबलिभोगोत्सवतःकृतशृंगनादंकृतवतीवा ॥ पुनःकीदृशीकरालंवक्त्रंतस्यांतःमध्ये
दुर्दर्शाःदुःखेनदृश्यमानायेदशनाःदंताःदंष्ट्राःतैरुज्ज्वला ॥ हासःशुभ्रःतेनकालीकृष्णापिसतीउज्ज्वलेतिवर्णोत्कर्षोक्तिः ॥ १८ ॥ साकालीविजिगीषुःसतीमहासिंमहाखड्गमु
त्थायउत्थाप्यसज्जीकृत्यांतर्भावितण्यर्थस्तिष्ठतिः ॥ यद्वा ॥ उत्थायउद्यम्यऊर्ध्वीकृत्यउत्पूर्वस्तिष्ठतिः क्वचित्प्रयोगवशतोगतिवंचनःसकर्मकः ॥ यद्वा ॥ उत्ताप्येतिपाठः ॥
तयगतौणिच् ॥ महासिमुत्तयमानंप्रयुज्यचण्डमधावत ॥ ततःकिंगृहीत्वेत्यादिः ॥ अस्यचण्डस्यकेशेषुगृहीत्वाआकृष्यतेनप्रसिद्धेनासिनाशिरोमस्तकमच्छिनत ॥ उत्थाय
चमहासिंहमितिपाठे ॥ महांतंसिंहमुत्थायारुह्यदेवीचण्डमधावनेतिसंबंधः॥ अथवामहासिंहंदेवीतिच्छेदः॥रुषोक्तौतुहमव्ययम्॥देवीमहासिंहमुत्थायउत्तोल्यहमितिरुषाचण्ड

ततोजहासातिरुषाभीमंभैरवनादिनी ॥ कालीकरालवक्त्रांतर्दुर्दर्शदशनोज्ज्वला ॥१८॥ उत्थायचमहासिंहंदेवीचंडमधावत॥गृहीत्वाचास्यकेशे
षुशिरस्तेनासिनाच्छिनत्॥१९॥ छिन्नेशिरसिदैत्येंद्रश्चक्रेनादंसुभैरवम्॥तेननादेनमहतात्रासितंभुवनत्रयम् ॥२०॥ अथमुण्डोभ्यधावत्तांदृष्ट्वाचंडं
निपातितम् ॥ तमप्यपातयद्भूमौखट्वांगाभिहतंरुषा ॥२१॥ हतशेषंततःसैन्यंदृष्ट्वाचंडंनिपातितम्॥मुंडंचसुमहावीर्यंदिशोभेजेभयातुरम् ॥ २२ ॥

मधावत।अतएवतेनासिनाअच्छिनदित्यन्वयः ॥ उत्थायचमहासिंहादित्येवोचुः॥उत्थायअवरुह्य।उत्थाप्यचमहासिंहमितिपाठे॥सुपिस्थःकः॥उच्चैस्तिष्ठतिउत्था॥अयगतौ॥
आङ्पूर्वःक्त्वोल्यप् ॥ आसमंतादयित्वाआय्य ॥ देवीउत्थाउत्थितासतीमहासिंहंचआय्यआगत्यप्राप्येत्यन्वयः ॥ अत्रैवपाठेऽर्थांतरम् ॥ महासिंहंचआय्यप्राप्येति ॥
उत्तरार्धान्वयः-पूर्ववत ॥ १९ ॥ दैत्येंद्रःचण्डस्तदैवाशिरसिदेव्याछिन्नेसतिशिरच्छेदसमयएवपशुवत्सुभैरवंसुष्ठुभयंकरंनादंमुखेनध्वनिंचक्रे ॥तेनमहतानादेनशब्देनभुवनत्रयंत्रा
सितम् ॥ त्रसीउद्वेगेणिचिकर्मणिक्तउद्वेगंप्रापितम् ॥ यद्वात्रासःसंजातोऽस्यतारकादिभ्यइतच् ॥ किमसौचंडःछिन्नाशिराअपिमायावित्वात्पुनरुत्थितोयोद्धुम् । कथ
मन्यथायंनादोस्येतिसंजातत्रासमभूद्भुवनत्रयम् ॥ २० ॥ अथचण्डःमहासुरःकाल्यादेव्यानिपातितंभ्रंशितंचण्डंदृष्ट्वातांकालीमभ्यधावत् ॥ अथकालीदेवीरुषा
तंमुण्डमपिखट्वांगेनाभिहतंताडितंपरासुंभूमावपातयत् ॥ मुण्डकेत्रिषुमंडिते ॥ दानवेपुंसिमुंडःस्यान्मस्तकेतुद्वयोरदः ॥ मुण्डितंत्रिषुलिंगेषु मुण्डोमुण्डत्वयो
गिनि ॥ २१ ॥ देव्याहतेभ्यः शेषमवशिष्टंसैन्यंकर्तृसुमहावीर्यंसुमहद्वीर्यंप्रभावोयस्यसःतंचण्डंमुण्डंचदेव्यानिपातितंदृष्ट्वाभयातुरंसत्ततःयुद्धभूमितःसकाशादपगत्यदिशोभेजे

पलायत।भयेनातुरंविह्वलम् ॥ २२ ॥ साकालीदेवीचण्डस्यासुरस्यशिरःतथामुण्डस्यासुरस्येदंमौंडशिरश्चेतिमस्तकद्वयंगृहीत्वा ॥ प्रचण्डःप्रगल्भःअट्टःअत्यधिकः हासस्तेनमिश्रंमिलितंप्रचण्डाट्टहासगर्भंयथास्यात्तथा अभ्येत्यैव अंतिकमागत्यैवचंडिकामम्बिकामासाद्यशक्तिःप्राह ॥ प्राहेत्यव्ययंकालसामान्यद्योति ॥ यथास्त्रियः किमप्यद्भुतंकार्यंविधायस्वनायिकायैसहसमाभाषंतेखलुलोकेतथेयमवोचत ॥ यद्वायौत्वांपरदेवतांभुवनेश्वरींप्रागालोकयगत्वाशुम्भायगृहाणेत्यकथयतांताविमौचण्डमुण्डौपुन र्द्रष्टुमागतौताववलोकयलोकमातारितिमोत्प्रासोहासोयुक्तएवेत्यलंविस्तरेण॥ २३ ॥कालीकिमब्रवीच्चंडिकामित्याह॥कालयुवाच ॥हेदेवितवमहापशूद्वौचण्डमुण्डौअत्रयुद्धयज्ञइ वतस्मिन्विषयेमयाकाल्योपहृतौसमर्पितावुपहारीकृतौस्तः । अतश्चयुद्धंयज्ञोयस्याःसाहेयुद्धयज्ञेदेवकार्यकारिणित्वंस्वयमेवशुम्भंनिशुम्भंचद्वौमहापशूदेवगणप्रीत्यैहनिष्यसि ॥ यद्वा ॥ युद्धयज्ञेविषयेतथादेवगणप्रीत्यैयज्ञेमहापशुर्नरः ॥ तथामयाकृत्विजेवचण्डमुण्डौनाममहापशूद्वौहतौ ॥ अतःपरंशुंभं निशुम्भं च महापशू त्वमेवहंतुमर्हसीतिभावः ॥ २४ ॥ततोनंतरंकल्याणीकल्यांवाचंशुभामणंतीकथयंतीचंडिकाभगवतीतौमहासुरौचण्डमुण्डौकाल्याआनीतौदृष्ट्वाकालींदेवीललितमीप्सितंमनोहरंवचउवाचोचितमुक्तवती

शिरश्चंडस्यकालीसागृहीत्वामौंडमेवच॥प्राहप्रचंडाट्टहासमिश्रमभ्येत्यचंडिकाम्॥२३॥मयातवात्रोपहृतौचंडमुंडौमहापशू॥युद्धयज्ञेस्वयंशुंभंनि शुंभंचहनिष्यसि॥२४॥ऋषिरुवाच॥तावानीतौततोदृष्ट्वाचंडमुंडौमहासुरौ॥उवाचकालींकल्याणीललितंचंडिकावचः॥२५॥श्रीदेव्युवाच॥यस्मा च्चंडंचमुंडंचगृहीत्वात्वमुपागता॥चामुंडेतिततोलोकेख्यातादेवीभविष्यसि॥२६॥इतिश्रीमा०पु०चंडमुंडवधोनामचतुरशीतितमोऽध्यायः॥८४॥

॥ २५ ॥ हेकालि त्वंयस्मात्कारणाच्चण्डंमुण्डंचगृहीत्वामामुपागतासिततोलोकेभुवनेचामुंडेतिख्यातादेवीभविष्यसि ॥ हस्ताभ्यांचण्डमुण्डौ तु किलागृह्णादमौयतः ॥ मत्वर्थकेऽच्यतश्चण्डामुण्डादेष्येवकथ्यते ॥ ततःपृषोदरादित्वाच्छिष्टशब्दप्रयोगतः॥चंडशब्दस्यचात्वेनचामुण्डेतिप्रसिद्ध्यति ॥ अतश्चाहुः॥ पृषोदरादित्वाच्चण्डमुण्डस्थाने चामुण्डासाध्येति ॥ यद्यस्यकरेस्तितत्तस्यास्तीतितद्वान्सभवतिदंडीतिवत् ॥ यं करेणयागृह्णात्साचंडमुंडवतीकालीतिमत्वर्थेऽर्शआदित्वादच्स्त्रियांटापिचंडशब्दस्यपृषोदरा दित्वाच्चेत्यादेशेचण्डमुंडैवचामुंडेतिचंडिकाभिप्रायः ॥ यद्यपिशिरसीएवकाल्यागृहीत्वा आनीतेनतुचंडमुण्डौ तथापिकापिग्रामैकदेशेदग्धेग्रामोदग्धइतिवच्चंडमुंडैकदे शयोः शिरसोश्चण्डमुंडौसमुदायौतयोःप्रयुक्तौशिष्टप्रयोगतः ॥ कश्चित्त्वाख्यत् ॥ चस्तस्करः समाख्यातोमाध्वंद्वश्चसमीरितः ॥ इत्यभिधानतः चान्तस्करान्मुण्ड यतिखंडयति चमुंडा ॥ चमुंडैवचामुण्डेत्यन्येषामपिदृश्यतइतिपुरुषवद्दीर्घत्वमिति ॥ तन्न ॥ यस्माच्चंडंचमुंडंचेतिचंडिकाभिप्रायतश्चामुंडेतिप्रकृतार्थहानादप्रकृ

तार्थाभ्यनुज्ञानात्परमर्षिप्रणीतत्वद्दशब्दार्थविग्रहव्याकोपप्रसंगाच ॥ २६ ॥ इति श्रीमार्कण्डेयमहापुराणे श्रीराजाधिराजतोमरान्वयश्रीमदुद्धरणात्मजशंतनुचक्रवर्ति विरचितायां देवीमाहात्म्यटीकायांचंडमुंडवधोनाम चतुरशीत्यध्यायः ॥ ८४ ॥ अस्यश्लोकयुग्मस्यैकक्रियात्वादेककर्तृकत्वादेकान्वयताच ॥ तयाकाल्यादेव्याचंडे निहतेसतितथामुंडेचविनिपातितेसतितथैवचसैन्येषुबहुष्वसंख्यातेषुक्षयितेषुसत्सुततोनंतरंकोपपराधीनचेताः क्रोधपरवशचित्तःप्रतापवान्व्यग्रोग्रतेजस्कश्चभूत्वाऽसुरेश्वरःशुम्भःदैत्यानांसर्वसैन्यानामुद्योगंदेवींचंडिकांप्रतिप्रयाणोत्सुकतामादिदेश ॥ देवींप्रतिसेनाभिरभियातयूयमभिषेण्यतेत्यादिक्षत् ॥ देवींप्रत्यभिषेणयितुमुद्योगंकुरुतेत्याज्ञापयामासदैत्यसैन्यमनीतिभावः ॥ उद्योगंसर्वसैन्यानामित्येवसिद्धेदैत्यानामितिप्राधान्यख्यापनार्थम् ॥ यद्वा ॥ सर्वाणिसैन्यानियेषांते . सर्वसैन्याःरक्तबीजप्रभृतयःतेषामुद्योगमादिदेश ॥ क्षयोनाशःसंजातोयेषांतानिक्षयितानि ॥ यद्वाक्षपितेषु ॥ क्षपप्रेरणेचुरादिः ॥ प्रेरितेषुद्रावितेषुप्राणेभ्योदूरीकृतेषुनाशितेष्वितियावत् ॥ कोपस्यपराधीनमधीनंचेतोयस्यसः ॥ यद्वाकोपेपरमतिशयितमधीनंचेतोयस्यसः ॥ असुराणामीश्वरः।यद्वा ॥ अमून्प्राणान्रातिगृह्णात्यसुरःमृत्युरीश्वरोयस्यसआसन्नमृत्युरित्यर्थः॥ १ ॥ २ ॥शुम्भआदि

ऋषिरुवाच ॥ चंडेचनिहतेदैत्येमुंडेचविनिपातिते ॥ बहुलेषुचसैन्येषुक्षयितेष्वसुरेश्वरः ॥ १ ॥ ततःकोपपराधीनचेताः शुंभःप्रतापवान् ॥ उद्योगंसर्वसैन्यानांदैत्यानामादिदेशह ॥ २ ॥ अद्यसर्वबलैर्दैत्याःषडशीतिरुदायुधाः ॥ कंबूनांचतुराशीतिर्निर्यांतुस्वबलैर्वृताः ॥ ३ ॥ कोटिवीर्याणिपंचाशदसुराणां कुलानिवै ॥ शतंकुलानिधूम्राणांनिर्गच्छंतुममाज्ञया ॥ ४ ॥

शति॥अद्यास्मिन्नहनीदानींवाममाज्ञयाषडशीतिर्दैत्याःप्रधानभूता उदायुधा उद्यतशस्त्राःसंतःसर्वैःबलैःसैन्यैश्चतुरङ्गैर्वृतावेष्टिता संतोनिर्यांतुदेव्यासमयोद्धुम् ॥ षड्भिरधिकाशीतिःषडशीतिःशाकपार्थिवादित्वात्समासः ॥ विंशत्याद्याःसदैकस्मिन्संख्यासंख्येयसंख्ययोः ॥ कंबूनांकंबुनाम्नांदैत्यानांचतुराशीतिर्वृंदभेदाःस्वबलैर्वृताः निर्यांतु ॥ चतुर्भिरधिकाशीतिश्चतुरशीतिःपूर्ववदेकवचनम् ॥ यदिचतुराशीनीतितिनिर्विसर्गःपाठः तदाचतस्रआशीतयःकंबूनांवक्तव्याःसमाहृताइतिविगृह्यसमाहारद्वंद्वः ॥ कंबूनांचतुराशीतिकर्तृस्वबलैर्वृतंमत् निर्यात्वित्येकवचनांतत्वेनयोज्यम् ॥ एकत्वोक्तितोयथावृक्षःफलतिलताचफलतीत्येकवचनसंगतिः ॥ चतुराशीतिपाठे ॥ आन्महतइति सूत्रेआदितियोगविभागः शिष्टप्रयोगतः ॥ प्रागेकादशभ्योछंदसीतिसूत्रकारव्यवहाराल्लिंगाद्योगविभागादिष्टसिद्धिरित्यात्वंतचरेफात्परतएव ॥ पृषोदरादित्वाद्वा । अन्येषामपिदृश्यतइतिच अशीतिशब्दादिकारस्यदीर्घत्वंद्रष्टव्यम् ॥ नैतत्सर्वत्रकर्तव्यमिति ॥ चतस्र अशीतय इत्यत्र दशांतैकादिकासंख्यासंख्येयेष्वेवचत्रिषु ॥ कंबुःशंखः । चतुरशीतिशंखपरिमिताःसेनास्ताभिःसहितादैत्याः ॥ ३ ॥ वैप्रसिद्धानिकोटिवीर्यनामधेयानिकोटिगुणितवीर्याण्यसुराणांपंचाशत्कुलानिवृंदानिनिर्गच्छंतु ॥

ममाज्ञयादेव्यासमंयोद्धुम् ॥ कोटिसंख्यानिपंचाशदितितुपाठे ॥ असुराणांकुलानिनिर्गच्छंतु ॥ कति।पंचाशत्॥ पुनश्चकतितानि कोटिरितिसंख्यायेषांपंचाशतःकुलानांतानि कोटिसंख्यानि॥ एवंचैकत्रपंचाशत्कोटिसंख्यान्यसुराणांकुलानि॥धूम्राणांधूम्रनाम्नामसुराणांशतंकुलानि ॥ धौम्राणामितिपाठे धूम्रस्यापत्यानिपुमांसःधौम्राःशिवादित्वादण्॥ अतइञोपवादः ॥ ४ ॥ कालकाःकालकनामानोऽसुराःकालंयमरूपमात्मानंशत्रुभ्यःकायतिकथयतिकालकः ॥कालकस्यापत्यानिकालकाःशिवादित्वादण्। यद्वा॥कलंमंत्रं कायति कलकःतस्येमेकालकाःकलककुलोत्पन्नादैत्या अयममाज्ञयात्वरिताः । त्रिन्वरासंभ्रमे । संभ्रमसहिताःसत्वराःसंतोदेव्यासमंयुद्धाययोद्धुंसज्जाःसायुधाःसंतोनिर्यांतु ॥ तथातद्वद्दौर्हृदाअसुराः दुष्टंहृदयंयस्यसदुर्हृद्दैत्यः॥ सुहृद्दुर्हृदौमित्रामित्रयोरितिनिपातः ॥ तस्यापत्यानिदौर्हृदाख्यादैत्याः ॥ तथामौर्याख्याः ॥ मुरस्यापत्यानिगोत्राणिगर्गादित्वाद्यञ् ॥ यञञोश्चेतिलुक्कुतोत्रन ॥ छांदसत्वाच्छंदोवत्पुराणानिभवंति ॥ यद्वा ॥ मुरस्यभावःमौर्यंतद्वंतोमौर्याःअर्शआदित्वादच् ॥ यद्वा ॥ मुरस्यभावःमौरी ॥ ष्यञः षित्वात्ङीष् ॥ मौरीमर्हंतिमौर्याः । दंडादिभ्योयः।तेपिनिर्यांतु॥तथाकालकायाअपत्यानिकालकेयनामानोसुराः॥स्त्रीभ्योढक्॥कालकवंशजाताः॥

कालकादौर्हृदामौर्याःकालकेयास्तथासुराः ॥ युद्धायसज्जानिर्यांतुआज्ञयात्वरिताःमम ॥ ५ ॥ इत्याज्ञाप्यासुरपतिःशुंभोभैरवशासनः ॥ निर्जगाममहासैन्यसहस्रैर्बहुभिर्वृतः ॥ ६ ॥ आयांतंचंडिकादृष्ट्वातत्सैन्यमतिभीषणम् ॥ ज्यास्वनैःपूरयामासधरणीगगनांतरम् ॥ ७ ॥

शुभ्रादिभ्यश्चेतिढक् ॥ ५ ॥ इत्येवमसुरानाज्ञाप्यादिश्यभैरवशासनःभैरवंभयंकरंशासनंयस्यसः ॥ यद्वा ॥ भैरवान्मृत्योः शासनं यस्यस आसन्नमरणत्वात् ॥असुरपतिः शुम्भःबहुभिर्दानवैर्वृतःसन्निर्जगामदेव्यासमंयोद्धुम् ॥ किंभूतैर्बहुभिर्महासैन्यसहस्रैर्महांतिसैन्यसहस्राणियेषुतैः ॥ ६ ॥ आयांतंशुम्भम् ॥यद्वा॥ सेनायांसमवेतायेसैन्यास्तेसैनिकाश्चते ॥ सैन्यःपुंसिसेनायांसमवेतः सेनायावेतिण्यः॥यद्वा॥आयांतंशुम्भंप्रतिस्थाने अपिशब्दश्चार्थे॥तथाचायमन्वयः—अतिभीषणमतिभयंकरंतत्सैन्यंयस्यशुंभस्यसतत्सैन्यः ॥यद्वा॥ तेसैन्याःसेनायांसमवेताः संमिलिताहस्त्यश्वरथपादातादिसमूहायस्यसतत्सैन्यस्तमायांतंशुम्भंदृष्ट्वाचंडिकादेवीज्यास्वनैर्धनुष्याकृष्टामौर्वीज्यातट्टंकारध्वनिभिर्धरणीगगनान्तरंद्यावापृथिव्यंतरालंपूरयामास ॥ अथद्वितीयोन्वयः--अतितरांभीषणोभयंकरःतत्सैन्यः तस्यशुंभस्यसैन्यःसेनायांसमवेतोहस्त्यश्वरथपादातसमूहः ॥ तमायांतं दृष्ट्वा ॥ अथतृतीयोन्वयः—अतिभीषणंशुंभमायांतंदृष्ट्वाऽतिभीषणंतत्सैन्यंतस्यशुम्भस्यसैन्यमपिसेनामायात् आगच्छद्दृष्ट्वा आयांतंशुम्भम् आयादागच्छत्तत्सैन्यंनपुंसकलिंगं

पूरीआप्यायने । व्यापयामास ॥ आयांतमितिशत्रंतम् । आयातमितिपाठेकर्तरिक्तः ॥ तंशुम्भंतत्सैन्यंच ॥ ७ ॥ सुमेधाऋषिःसुरथंराजानंसंबोधयति ॥ हेनृपदत्ताव धानोभव ॥ ततः धनुर्ज्यास्वनानंतरंससिंहश्चातीवप्रचुरतरांमहांतंनादंकृतवान् ॥ अंबिकापिघंटायाः स्वनेननादेनतन्नादंसिंहनादमबृंहयत् अवर्द्धयत् ॥ बृहिवृद्धौ । हेतौणिचुलङ् ॥अडागमः॥ अंबिकाचोपबृंहयदितिपाठे आगमशासनानित्यत्वादडागमाभावः ॥ ततःसिंहइतिवापाठः ॥ ८ ॥ धनुर्ज्यानादेनसिंहनादेनघंटानादेनचआसमंतात्पू रितानिदिशांमुखानियया सा॥ एवंविधाकालीतैस्त्रिविधैर्भीषणैःनिनादैःविस्तारितानना विवृतास्यास्फारितमुखासतीजिग्ये॥ जिजये जि अभिभवे॥व्यत्ययोबहुलमितिकर्तर्यात्मने पदम्॥लोकोत्कर्षेणववृते॥यद्वा॥शत्रूनभिबभूव ॥ यद्वाजिग्येइतिकर्मणिप्रयोगः ॥ तथाहि॥ एवंभूतायाकालीदेवीतयाभीषणैर्नादैः शत्रुवर्गोजिग्येअभिबभूवे ॥ जज्ञेइतिपाठेजनी प्रादुर्भावेआत्मनेपदी।कालीभीषणैर्निनादैर्विस्तारितानना जज्ञे॥ दैत्यानत्स्यामीतिविवृतीकृतकरालवदनाजाता॥ अथवाजज्ञेइति॥ ज्ञाअवबोधनेकर्मणिलिडात्मनेपदम् ।भीषणैर्नि नादैर्याविस्तारितानना दैत्यसैन्यानिमर्वाणि अमूनिप्रत्यवस्यतीतिविकृतीकृतकरालवक्त्रादृश्यतेसाकालीतिदैत्यैःजज्ञेऽज्ञायि ॥ सासखीसमूहेवर्त्तमानाकावाकालीमखीनितत्सा

सचसिंहोमहानादमतीवकृतवान्नृप ॥ घंटास्वनेनतन्नादमंबिकाचाप्यबृंहयत्॥८॥धनुर्ज्यासिंहघंटानांनादापूरितदिङ्मुखा॥ निनादैर्भीषणैःकाली जिग्येविस्तारितानना ॥ ९ ॥ तन्निनादमुपश्रुत्यदैत्यसैन्यैश्चतुर्दिशम् ॥ देवीसिंहस्तथाकालीशरौघैःपरिवारिताः ॥ १० ॥ एतस्मिन्नंतरेभूपवि नाशायसुरद्विषाम् ॥ भवायामरसिंहानामतिवीर्यबलान्विताः ॥ ११ ॥

दृश्यतःसंशयानैरथतैर्भीषणैर्निनादैर्विशेषचिह्नैर्विस्तारितानना सर्वसैन्यग्रासायविवृतास्या कालीतिदैत्यैरज्ञायीतिभावः ॥ ९ ॥ चतुर्दिशमित्येतत्पदंशकारांतंनिनादविशेषणंचैतत् अश्वचेत्परिवारणक्रियाविशेषणंस्यात्तदादिशाशब्देनटाबंतेनमाधनीयम् ॥ चतस्रःदिशोऽधिकरणभूतायस्यतन्निनादस्यसचतुर्दिशंचतुर्दिक्षुव्याप्तम् ॥ तासांधनुर्ज्यासिंहघंटानां निनादमुपश्रुत्याकर्ण्यकुपितैःदैत्यसैन्यैःदेवीआद्याशक्तिर्भगवती सिंहश्चवाहनीभूतः ॥ कालीचदेवीललाटोद्भवा ॥ तथाचएताःतिस्रोपिशरौघैःशरव्रातैश्चतुर्दिशंयथास्यात्तथाप रिवारिताःपरिवेष्टिताःकारिताःविद्धाइतियावत्॥ हलंतादपिटापंचयथावाचानिशादिशेतिदिशाशब्दष्टाबंतोप्यस्ति । चतस्रोदिशाअधिकरणभूतायस्मिन्शरौघपरिवारणेकर्मणि तच्चतुर्दिशंक्रियाविशेषणानांकर्मत्वंनपुंसकैकत्वंचवक्तव्यम् ॥ १० ॥ युग्मम् ॥ हेभूपदत्तावधानोदेवीमहिमानमाकर्णय ॥ एतस्मिन्देवीदानवसंग्रामेप्रस्तुतेसत्यन्तरेअवकाशे समयेमध्येवा सुरद्विषांविनाशाय अमरसैन्यानाममरसिंहानांदेवश्रेष्ठानांवाभवायभूत्यैअभिवृद्धयैस्थितयेचातिवीर्यबलान्विताःशक्तयः सामर्थ्यलक्षणाः देवताश्चब्रह्मेशगुहवि

ष्णूनांतथेंद्रस्यचापिपंचानांतेषांशरीरेभ्योविनिष्क्रम्यनिर्गत्यतद्रूपैःब्रह्मादिरूपैः तदाकारैःतादृशरूपैःचंडिकांययुःप्रविष्टवत्यः ॥ ब्रह्माचईशश्चरुद्रःगुहश्चकुमारःविष्णुश्चनारा
यणः ॥ ब्रह्मणःशरीराद्ब्रह्माणीनिर्गता ॥ रुद्रस्यशरीरान्माहेश्वरी ॥ कुमारशरीरात्कौमारी ॥ विष्णशरीराद्वैष्णवी॥ इंद्रशरीरादैंद्री ॥ एताःदेवींप्रापुरित्यर्थः॥ भवःकल्या
णसंसारसत्तावागीशजन्मसु ॥ अमरसिंहानामितिपाठे अमराःसिंहाइवश्रेष्ठाः तेषाम् ॥ उपमितंव्याघ्रादिभिःसामान्याप्रयोगेसमस्यते ॥ अभ्यधुश्च ॥ स्युरुत्तरपदेव्याघ्रपुंगवर्ष
भकुंजराः ॥ सिंहशार्दूलनागाद्याःपुंसिश्रेष्ठार्थगोचराः ॥ वृंहतिवर्द्धतेब्रह्मा ॥ ईष्टेईशः ॥ गूहतेसेनांसंवृणोतिगुहः॥ वेवेष्टिव्याप्नोतिविशतिवाविश्वंविष्णुः ॥ इंदतिपरमैश्वर्ये
णराजतेइंद्रः ॥ शक्नोतिशाक्तिः क्तिच् ॥ शक्यतेकर्त्तुमनयावाशक्तिः क्तिन् ॥ ११ ॥ १२ ॥ तद्रूपैरितियदुक्तंनदेवव्यक्तीकरोति ॥ देवीदानवयुद्धंद्रष्टुमागतानांतेषांब्रह्मा
दीनांशरीरेभ्योविनिष्क्रम्यानुभावान्प्रकाश्यकायव्यूहेनप्रव्यक्ताकृतयोब्रह्माण्यादयःशक्तयः चंडिकांशभूताःचंडिकांयुद्धायउत्साहयितुंययुरितिप्रागुक्तंतदनेनस्पष्टयति ॥ यस्य
देवस्यब्रह्मादेः यद्रूपंयआकारःयथाभूषणवाहनंभूषणवाहनान्यनतिक्रम्ययस्यदेवस्ययद्भूषणंयद्वाहनंतद्वदेवतादृशमेववाहनमारूढवतीतच्छक्तिः तस्यदेवस्यसाशक्तिर्ब्रह्माण्यादि

ब्रह्मेशगुहविष्णूनांतथेंद्रस्यचशक्तयः ॥ शरीरेभ्योविनिष्क्रम्यतद्रूपैश्चंडिकांययुः ॥१२॥यस्यदेवस्ययद्रूपंयथाभूषणवाहनम् ॥ तद्वदेवहितच्छक्तिर
सुरान्योद्धुमाययौ ॥ १३ ॥ हंसयुक्तविमानस्थासाक्षसूत्रकमंडलुः ॥ आयाताब्रह्मणःशक्तिर्ब्रह्माणीसाभिधीयते ॥ १४ ॥ माहेश्वरीवृषारूढात्रिशू
लवरधारिणी ॥ महाहिवलयाप्राप्ताचन्द्रलेखाविभूषणा ॥ १५ ॥

देवतातद्वदेवायुधानिबिभ्रतीसती । हिनिश्चये ॥ असुरान्योद्धुमाययौ ॥ देवीसान्निध्यंसंग्रामरंगस्थलींचाजगाम ॥ १३॥ हंसैःयुक्तोयोजितोविमानः तस्मिन् तिष्ठतिहंसयु
क्तविमानस्थः ॥ अक्षाणांस्फटिकमणीनांसूत्रंजपमालाअक्षसूत्रंकमंडलुश्चताभ्यांसहवर्त्तमाना ॥ एवंविशेषेणब्रह्मणः शक्तिरसुरैःसहयोद्धुमायातासाखलुब्रह्माणीत्याभिधीयते
ब्रह्मणःस्त्रीब्रह्माणी । अत्रानुगागमाभावाच्छैवागमप्रसिद्धंनामेदंकथ्यते ॥ अतएवनिरूढतामपेक्षितनियममिद्धतामितिनारदर्षिः ॥ यद्वा ॥ वेदस्तत्त्वंतपोब्रह्मब्रह्माविप्रःप्रजा
पतिः ॥ अणशब्दे ॥ ब्रह्मअणतिकथयतिब्रह्माणी ॥ कर्मण्यणिस्त्रियांङीप् ॥ यद्वा॥ब्रह्माणमणतिमदीयोयमितिब्रह्माणी ॥ हंसोयतिविशेषेचप्राणश्वेतच्छदेषुना ॥ अत
एवहंसैर्यतिविशेषैर्युक्तंविमानंविगतमानंपरंब्रह्मतत्रतिष्ठत्युपनिषद्रूपत्वादितिहंसयुक्तविमानस्था॥ब्राह्मीवाणीब्रह्माणीइत्यप्यर्थलेशः ॥१४॥ वृषंवृषभंधर्मंवारूढा ॥ त्रीणिशूला
निशृंगाणिव्यग्राणियस्यतत्श्रेष्ठंत्रिशूलंत्रिशूलवरंधरतित्रिशूलवरधारिणी ॥महांतःअहयःनागाःवलयायस्याःसाएवंलक्षणाशक्तिः॥महेश्वरस्येयंमाहेश्वरीप्रामाअसुरैः समंयोद्धु

मागता॥शुक्लेमूषिकेश्रेष्ठेसुकृतेवृषभेवृषः॥अस्त्रीशूलंरुगायुधम्॥देवादृतेवरःश्रेष्ठेत्रिषुक्लीबंमनाक्प्रिये ॥ आवापकःपारिहार्यःकटकोवलयोस्त्रियाम्॥लेखाकला।प्रकृतौचित्यात्
अन्यथालेखाराजिः॥ १५॥शक्तिरायुधंहस्तेयस्याःसाअजायतटाप्॥प्रहरणार्थेभ्यःपरेनिष्ठासप्तम्यौभवतइतिवक्तव्यम्॥मयूरवरःश्रेष्ठमयूरःवाहनंयस्याःसा।वाहनमाहितादिति
णत्वंनाशंकनीयम्।आहितत्वाभावात्॥नहिमयूरवरःवाहनमारोपितोस्तिवाहनेयदारोपितमुह्यतेतदारोपितमाहितमुच्यते॥रूपरूपाक्रियायांचुरादिः॥गुहं कुमारमाकारेणरूपयति
दर्शयतिगुहरूपिणी ॥ यद्वा ॥ गुहस्यरूपमस्यामस्तीतिगुहरूपिणी ॥ अतइनिः ॥ ऋन्नेभ्योङीप् ॥ यद्वा गुहरूपंकरोत्यात्मनितदाचष्टेवातच्छीला ॥ गुहरूपयतेर्णिनिः॥
अंबिकामाता ॥ कुमारस्येयंकुमारी॥ १६ ॥ गरुडस्योपरि पूरणगुणेत्यादिनाषष्ठीसमासप्रतिषेधः॥कृदंताव्ययस्यतेनतदुपरिमदुपरीतिवत्षष्ठीतिसमासः ॥ संस्थितासम्यक्स्थि
ता ॥ शंखःपांचजन्यःचक्रंसुदर्शनंगदाकौमोदकीशाङ्गंधनुः ॥ हस्तिदंतःशृंगंतस्येदंशाङ्गंवैष्णवंधनुः ॥ अन्यदीयंतुचापोयंशृङ्गमाहिषमुच्यते ॥ गवयंमाहिषंशृंगंशाङ्गंचा
पादियन्मयम् ॥ खड्गश्चनंदकस्तेषांसेनाङ्गत्वादेकवद्भावेननपुंसकत्वम्॥तच्छंखायंहस्तेयस्याःसा॥विष्णोरियंवैष्णवीशक्तिर्देवतानारायणी॥तथैवतद्वदेवब्रह्माण्यादिवदेवयोद्धुम

कौमारीशक्तिहस्ताचमयूरवरवाहना ॥ योद्धुमभ्याययौदैत्यानंबिकागुहरूपिणी ॥ १६॥ तथैववैष्णवीशक्तिर्गरुडोपरिसंस्थिता ॥ शंखचक्रगदाशा
र्ङ्गखड्गहस्ताभ्युपाययौ ॥ १७ ॥ जज्ञेवाराहमतुलंरूपंयाबिभ्रतीहरेः ॥ शक्तिःसाप्याययौतत्रवाराहींबिभ्रतीतनुम् ॥ १८ ॥ नारसिंहीनृ
सिंहस्यबिभ्रतीसदृशंवपुः ॥ प्राप्तातत्रसटाक्षेपक्षिप्तनक्षत्रसंहतिः ॥ १९ ॥

भ्युपाययौ ॥ यद्वा ॥ तथैवविष्णुवदेववैष्णवीशक्तिरपिदैत्यान्प्रहर्तुंक्षमेतिभावः ॥ वैष्णव्याःशक्तेरायुधानिपंच ॥ बाहेवस्तुचत्वारइतिवैषम्यम् आहुरत्र ॥ शङ्खशार्ङ्गं
एकस्मिन्बाहौ ॥ अंगुलिसक्तसूत्रलग्नःशंखोवादनार्थः ॥ शाङ्गंतुमुष्टौनिविष्टमित्यवैषम्यम् ॥ यद्वा ॥ युद्धेवादनार्थःशंखोवादनौचित्याद्बाहुमूलावलम्बीइतिअवैषम्यम् ॥
शंखोनायुधंतस्यवादनार्थत्वादितिकश्चिदाह ॥ तन्न शंखपाणिरित्यत्रपाणेःसप्तम्यंतस्यपरनिपातत्वाभावप्रसंगात् ॥ अस्तिचशंखस्यसंग्रामेस्वनिस्वनत्रासाकुलशत्रुत्वा
दायुधत्वौचित्यमित्यलं विस्तरेण ॥ १७ ॥ पुनर्वैष्णवशक्त्यंतरमाविर्बभूवेत्याह ॥ हरेर्भगवतोविष्णोरतुलबलपराक्रमाभ्यामनुपमं चवराहस्येदंवाराहंरूपंयाबिभ्रतीसती
भगवतीजज्ञे॥जनीप्रादुर्भावेअनुदात्तेत्वकर्त्तरिलिट् ॥यद्वा॥ज्ञाअवबोधनेकर्मणिलिट् ॥ऋषिभिः शास्त्रेणजज्ञेअज्ञायि॥सापिहरेःशक्तिःनारायणीदेवता॥वराहस्येयंवाराही ॥तां
तनुंशरीरव्यक्तिंबिभ्रतीआययौ ॥ १८ ॥ पुनर्वैष्णवशक्त्यंतरंप्रापदित्याह ॥ सटानांस्कन्धकेसराणामाक्षेपेणकम्पनेनेतस्ततस्ताडनेनक्षिप्ताःप्रेरितादूरीकृतानक्षत्राणांसंहतयः

समुद्धारयासा ॥ अतएवनृसिंहस्यभगवतःसदृशंवपुःबिभ्रती॥ अतएवनृसिंहस्येयंनारसिंहीवैष्णवीशक्तिः योद्धुंतत्रप्राप्ता॥नाचासौसिंहश्चनृसिंहः॥यद्वा ॥ग्रामैकदेशेदग्धेग्रामो
दग्धइतिवत्नुरेकदेशेनृशब्दः सिंहैकदेशेसिंहशब्दश्चवर्त्तते ॥ ततश्चनाचसिंहश्चनृसिंहौतौयस्मिन्भगवतोविष्णोरवतारेनृसिंहः॥मत्वर्थेऽर्शआदित्वादच् ॥१९॥ वज्रमायुधंहस्ते
यस्याः सा ॥ गजराजोपरिस्थिताऐरावताधिरूढा ॥ सहस्रंनयनानियस्याःसा ॥ अतएवयथाशक्रइंद्रःसमवस्थितोभुदाकारादिनातथैवसाप्यैंद्रीशक्तिः ॥ इंद्रस्येयमैंद्री ॥
योद्धुंप्राप्ता ॥ यथासादृश्यइतिप्रतिषेधादव्ययीभावाभावेयथेतिपृथक्पदम् ॥ ॥ वज्रालंकृतहस्तावा॥वज्रोस्त्रीहीरकेपवौ॥इंद्रस्यस्त्रीइंद्राणी।शक्तिस्त्वैंद्री॥ तदित्थंब्रह्माण्याद्या
देवशक्तयः समेहकथिताः ॥ २० ॥ ततोनंतरंताभिर्ब्रह्माण्यादिभिर्देवशक्तिभिःपरिवृतईशानोमहेशः ॥ चंडिकामाह ॥ किमिति ॥ ममशंभोःप्रीत्यास्नेहेनकारणेनासुरा
हन्यंतांशीघ्रमिति ॥ केचित्तुचंडिकेतिपठंतितदापरिवृताईशानेतिचस्त्रीलिंगत्वेनचंडिकाविशेषणेद्वे ॥ ततश्चायमन्वयःततोदेवशक्त्यागमानंतरंताभिर्देवशक्तिभिःपरिवृताईशा
नाईशानशक्तिसंपन्नाचंडिकाभगवतीदेवशक्तीःप्रत्याह॥हेदेवेशशक्तयःभवतीभिःममचंडिकायाःप्रीत्यास्नेहेनकारणेनशीघ्रमसुराःसर्वेहन्यंतामिति॥२१॥ततोनंतरंदेवीशरीरात्तु

वज्रहस्तातथैवैंद्रीगजराजोपरिस्थिता ॥ सहस्रनयनाप्राप्तायथाशक्रस्तथैवसा ॥ २० ॥ ततःपरिवृतस्ताभिरीशानोदेवशक्तिभिः ॥ हन्यंतामसु
राःशीघ्रंममप्रीत्याहचंडिकाम् ॥ २१ ॥ ततोदेवीशरीरात्तुविनिष्क्रांतातिभीषणा ॥ चंडिकाशक्तिरत्युग्राशिवाशतनिनादिनी ॥ २२ ॥ साचा
हधूम्रजटिलमीशानमपराजिता ॥ दूतत्वंगच्छभगवन्पार्श्वंशुंभनिशुंभयोः ॥ २३ ॥

चंडिकाशरीरादपिपुनःचंडिकाशक्तिःविनिष्क्रांताप्रादुरभूत्॥ चंडिकायाःदेव्याःशक्तिःकीदृशी॥अतिभीषणात्यर्थभयकारिणी॥अतिपाशिनीतिपाठेप्रशस्तःपाशोस्त्यस्याःपाशि
नीअतिक्रूरापाशिन्यतिपाशिनी ॥ पुनःकीदृशीअत्युग्राऽतिरौद्रा ॥ पुनःकीदृशी ॥ शिवानांमृगालानांशतेनकृतोनिनादःसोस्त्यस्याःशिवाशतनिनादिनी ॥ यद्वा शिवेत्यने
नपरमैश्वर्यंकथ्यते ॥ शक्तिशक्तिमतोरभेदोपचारात् ॥ तस्याविशेषणम् ॥ शतत्वसंख्ययानिनदतितच्छीलाशिवाशतनिनादिनी ॥शतमित्युपलक्षणम् ॥ सर्वतःशब्दायमाने
त्यर्थः ॥ एतदुक्तंभवति ॥ यस्यदेवस्ययद्रूपमितिवचनाच्चंडिकाशक्तिर्विनिर्गता॥चंडिकाकृतिरेवशिवेतिनाम्नाप्रादुरभूदिति ॥ यद्वाशिवाशतेनसहनिनदतीति॥ अन्यथाउत्तरत्र
त्वमागच्छततृप्यंतुमच्छिवाःपिशितेनवइतिशिवागतत्वंकथंस्यात् ॥ २२ ॥ अपराजितापरैःशत्रुभिरजितायद्वाअविद्यमानःपरउत्कृष्टःशत्रुर्वायस्याःसाअपराजयतिस्म. जिताप्रा
प्तलोकोत्कर्षा ॥ यद्वा अजःसंजातोयस्याःसाअजिता ॥ पितामहमाताविष्णुमायेतियावत् ॥ साचंडिकायाःशक्तिर्देवताधूम्रजटिलमीशानंरुद्रमाह ॥ किम् । हेभगवन्

दूतत्वंगच्छदूतभावंभज ॥ शुंभनिशुंभयोःपार्श्वंगच्छयाहि ॥ चःसमुच्चयार्थोभिन्नक्रमश्च ॥ दूतत्वंगच्छपार्श्वंचेति ॥ योजनांतरेतु धूम्रजटिलमितिच्छेदः ॥ दूतत्वमिति च्छेदः ॥ साचंडिकायाः शक्तिरपराजितानामजटिलमीशानम् ॥ जटाःसंतियस्यसजटिलःतम् ॥ तुन्दादिभ्यइलच्च ॥ आह किमिति॥ असुरेषुक्रोधाग्निपूर्णत्वात्धूम्रःकृष्ण लोहितः ॥ हेधूम्रहेभगवन्त्वंदूत ॥ लोण्मध्यमपुरुषैकवचनांतमेतत् ॥ दूतइवाचरतिदूतति ॥ लोटस्तु-सेर्ह्यपिच्च ॥ अतोहेर्लुक् ॥ दूत दूतइवाचर ॥ सर्वप्रातिपदिकेभ्यः क्विब्वाचारेवक्तव्यः॥यदिदूतवदाचरदूतइतिउपमानादाचारेक्विबंततामनाश्रित्यमुख्यार्थेदूतशब्दात्त्वप्रत्ययःक्रियतेयैः येषाम् । हेभगवन्निति सर्वैश्वर्याद्युपेतपूजितसंबोधनंदूतत्वे तिनीचत्वेप्रयुक्तमितिकेयंवाचोयुक्तिपटुत्वौचितीस्यात् ॥ धूम्रश्चासौजटिलश्चेत्येकपदत्वंवा ॥ ततोविशेषणसमासः ॥ धूम्राःजटाःयस्येतितुविगृह्यनकर्मधारयात्मत्वर्थीयप्र विषेधादिलजभावाद्बहुव्रीहौधूम्रजटइत्येवस्यात् ॥ २३ ॥ तत्रगत्वाकिंब्रवाणीत्यतआह ॥ हेभगवन्हेरुद्रत्रिभुवनंविजित्यैवातिगर्वितावस्मत्समःकोपिनास्तीतिसंजाताहंकारौ

ब्रूहिशुम्भंनिशुम्भंच दानवावतिगर्वितौ ॥ येचान्येदानवास्तत्रयुद्धायसमुपस्थिताः ॥ २४ ॥ त्रैलोक्यमिंद्रोलभतांदेवाःसंतुहविर्भुजः ॥ यूयंप्रया तपातालंयदिजीवितुमिच्छथ ॥ २५ ॥ बलावलेपादथचेद्भवंतोयुद्धकांक्षिणः ॥ तदागच्छततृप्यंतुमच्छिवाः पिशितेनवः ॥ २६॥ यतोनियुक्तोदू त्येनतयादेव्याशिवःस्वयम् ॥ शिवदूतीतिलोकेस्मिंस्ततः साख्यातिमागता ॥ २७ ॥

शुंभंनिशुंभंचदानवौहितंवक्ष्यमाणंब्रूह्युपदिश ॥ अथयेचान्येदानवाःतयोःपक्षेसंग्रामंशूरंमन्यतयागर्विताः युद्धाययुद्धंकर्तुंसमुपस्थिताःसंगताःस्युःतानपिहितंवक्ष्यमाणंब्रूहि ॥ ब्रुविर्द्विकर्मकः ॥ अकथितंचेत्यत्रब्रुशास्वितिद्विकर्मकेषुपरिगणितत्वादस्य ॥ २४ ॥ अनेनहितमाहचंडिकायाःशक्तिः ॥ हेशुम्भादयोदैत्याःयूयंसर्वेपियदिजीवितुमिच्छ थतर्हिपातालंप्रयात ॥ ततश्चइंद्रःत्रैलोक्यंलभतांप्राप्नोतु ॥ इंद्रादयोदेवाःहविर्भुजःयज्ञेषुहवींषियथाभागंभुंजानाःसंतुः हवींषिभुंजताम् ॥ अग्निमुखेदेवतोद्देशेनहूयमानंहोतव्य द्रव्यंघृतादिकंहविराहुः ॥ अन्येतुहूयतेहविःसान्नाय्यमित्याहुः ॥ घृतमाज्यंहविःसार्पिर्हविष्यंचतदुच्यते ॥ इच्छथ लटोमध्यमस्थः ॥ इषुगमियमांछःशिति ॥२५ ॥ अथ चेद्भवंतोदानवाःबलावलेपाद्बलगर्वात्कारणाद्युद्धकांक्षिणःस्युःतदातर्हिमयासमंयोद्धुमागच्छत ॥ यूयंतत्फलंचावाप्स्यथ ॥ मच्छिवाश्चवःपिशितेनतृप्यंतु ॥ ममशक्तिपरिवाराः सृगालाश्चवःयुष्माकंयुधिखंडितानांपिशितेनमांसेनतृप्तिमाप्नुवंति॥कुक्कुराश्चमृगालाश्चमेषाद्याश्चतथावयः॥प्रियाभवंतिशक्तीनांभैरवाणांचवैतथा॥गर्वोभिमानोहंकारोमानश्चि त्तसमुन्नतिः । दर्पोवलेपोहंतापिस्यादहंयुत्वमेवच ॥ कांक्षिइच्छायांयुद्धंकांक्षतियुद्धकांक्षिणः ॥ तृपतृप्तौदिवादिःतृप्यंतु॥ पिशितंतरसंमांसम्॥२६॥यतःकारणात्तयाशक्त्या स्वयंदेव्याशिवःशंभुःदूत्येनदूतभावेनदूतकर्मणावानियुक्तःप्रेरितोभूत् ॥ ततःकारणात्साचण्डिकायाःशक्तिःअस्मिन्मर्त्यानांलोकेशिवदूतीविख्यातिंकीर्तिंप्रसिद्धिंचागवाप्राप्ता॥

सख्युर्यः दूतवणिग्भ्यांचेतिवक्तव्यम् ॥ दूतस्यभावःकर्मवेतियः ॥ दूतशब्दात्ष्यञ्तुनचात्समुच्चायितोयतः ॥ वणिज्यावाणिज्यमित्युक्तम् ॥ अयंतुब्राह्मणादिषुवणिक्शब्द स्यपाठात्सेत्स्यति ॥ दूतशब्दस्तुनदृढादौनापिब्राह्मणादौपठितः ॥ यदाभ्यधुः—दूत्यंतद्भावकर्मणीति ॥ कश्चिदाह—दूत्यंदौत्यमुभयमपिभवति॥वणिज्यावाणिज्यमितिवत् ॥ दूतवणिग्भ्यांचेतिचकारात्ष्यञपिभवतीति ॥ तन्न ॥ सख्युर्यःदूतवणिग्भ्यांच ॥ नकेवलंसख्युरेवयःअपितुदूतवणिग्भ्यांचयोभवतीतिचकारेणयएवसमुच्चीयतेनतुष्यञपि यदिष्यञपि चेत्समुच्चीयतेतदाब्राह्मणादौवणिक्शब्दपाठोनिरर्थकःस्यात् ॥ चकारेणैवष्यञःसिद्धत्वात् ॥ दौत्येमेतिपाठेदूत्यमेवदौत्यम् प्रज्ञादित्वादण् ॥ शिवदूतीति ॥ टुदुउपतापे दुतनिभ्यांदीर्घश्चेत्यौणादिकःक्तः ॥ शिवेनदूतयतीतिशिवदूती ॥ यद्वा शिवंदूतंप्रेर्यंकरोतिशिवदूती ॥ कर्मण्यणिस्त्रियांङीप् ॥ शिवेकर्मणिदूतयतेर्ण्यंतादणि रूपंशिवंदूतयतिदूतंकरोतितदाचष्टइतिणिजंतात्कर्मण्यण् ॥ शिवदूतेत्यपिसभ्यःपाठः ॥२७॥ तेशुंभादयःमहासुराःशर्वाख्यातंशृणोतिहिनस्तिशर्वःतेनकथितंदेव्याःशिवदूत्याः वचः संदेशंश्रुत्वाऽमर्षेणक्रोधेनापूरिताःजग्मुः । क । यत्रकात्यायनीस्थिता ॥ शर्वोक्तदेवीसंदिष्टसामवादोद्दीपितामर्षापूरिताःक्रियाकेवलमुत्तरमितिमन्वानाःसन्तस्तत्रययुः

तेपि श्रुत्वावचोदेव्याः शर्वाख्यातं महासुराः ॥ अमर्षापूरिताजग्मुर्यत्रकात्यायनीस्थिता ॥२८॥ ततःप्रथममेवाग्रेशरशक्त्यृष्टिवृष्टिभिः ॥ ववर्षुरुद्धतामर्षास्तांदेवीममरारयः ॥२९॥ साचतत्प्रहितान्बाणाञ्छूलशक्तिपरश्वधान् ॥ चिच्छेदलीलयाध्मातधनुर्मुक्तैर्महेषुभिः ॥३०॥ तस्याग्रतस्तथा कालीशूलपातविदारितान् ॥ खट्वांगपोथितांश्चारीन्कुर्वतीव्यचरत्तदा ॥ ३१ ॥

यत्रकतोनामर्षिःतस्यगोत्रस्त्रीकात्यायनी कात्यशब्दाद्गर्गादियञंतात्सर्वत्रलोहितादिकतंतेभ्यइतिस्त्रियांष्फः फस्यायनादेशःषित्वात्ङीष् ॥ उमाकात्यायनीगौरी ॥ यतःकात्या यनीस्थितेतिपाठेआद्यादित्वात्सप्तम्यर्थेतसिःयत्रेत्येवार्थः ॥२८॥ततोनंतरममरारयःशुंभादयःउद्धतामर्षाःप्रवृद्धरोषाःसंतःप्रथममेव॥कालाध्वनोरितिद्वितीया ॥ अस्यादेव्या अग्रभागेउरसिशरशक्त्यृष्टिवृष्टिभिःशरसंपातैःशक्तिसंपातैःऋष्टिपातैः खड्गाघातैश्चसाधनैः तांदेवींववर्षुः छादयामासुः ॥ वृषुसेचने ॥ असंयोगाल्लिडपित्कित् ॥ छंदो वत्पुराणानि ॥ अन्यथाववृषुरित्येवस्यात् ॥ कासूसामर्थ्ययोःशक्तिः ॥ कामूस्तोमराख्यमायुधम् । ऋष्टिःखड्गः ॥ २९ ॥ साचंडिकाचतत्प्रहितान्तैरसुरैःप्रयुक्तान्शरान् शूलान्शक्तीःपरश्वधान्परशून्कुठारान्अन्यान्यप्यायुधानिलीलयाऽनायासेनध्मातंमौर्वीटंकारेणशब्दितंधनुःततोमुक्तैःप्रेरितैःमहेषुभिः महद्भिः प्रशस्तैःइषुभिः शरैःचिच्छेद खंडयामास ॥ शूलचक्रपरश्वधामितिवापाठः ॥ ३० ॥ तदासंग्रामकालेतस्यादेव्याःचंडिकायाःअग्रतःपुरस्ताद्दृष्टिपथेकालीचण्डमुण्डमर्दनीतद्वत्तथाचंडिकेवयुध्यमाना

नरीन्शूलेनकृताःपाताःप्रहाराःतैर्विदारितान्खट्वांगपोथितांश्चकर्वती असुरशरीरकंकालपंजरमयान् युद्धेनपोथितान्प्रहतान्कुर्वतीसतीव्यचरत् ॥ ३१ ॥ ब्रह्माणी शक्तिःब्राह्मीयेनयेनपथाधावतिस्मयोद्धुंगच्छतिस्मतत्रतत्रपथिशत्रून् कमंडलौजलं तस्याक्षेपादाकर्षणात् ॥ यद्वाकमण्डलोःसकाशादुद्धृतस्यजलस्याक्षेपात्प्रोक्षणाद्देवोः हतवीर्यान्हतौजसश्चहतदीप्तिबलानकरोत् ॥ ओजोदीप्तिर्बलेपिस्यात् ॥ कमंडलुजलाक्षेपादितिवापाठः ॥ अथवा धावतीत्यत्रव्यत्ययेनबहुवचनम् ॥ येनयेनअन्या येनधावंतिस्मलोकानुपद्रवंतिस्मतान्दैत्यान् ॥ ३२ ॥ देव्याअग्रेमहेश्वरस्येयंशक्तिर्माहेश्वरीत्रिशूलेनदैत्याञ्जघान ॥ अतिकोपनेतिप्रत्येकंविशेषणम् । विष्णोरियंवैष्णवी चक्रेण दैत्यान्जघान ॥ तथाकुमारस्येयंकौमारीगुहशक्तिःशक्त्याआयुधेनेतिमाहेश्वर्यादिशक्तित्रयपराक्रमोवर्णितः ॥ अतिकोपना ॥ कुपक्रोधे कुधमंडार्थेभ्यश्चेतियक् ॥ ॥ ३३ ॥ इंद्रस्येयमैंद्रीशक्तिःतस्याःकुलिशंवज्रंतस्यपातेन॥ शतंशतं शतशः ॥ संख्यैकवचनाच्चवीप्सायांशस् ॥ दैत्यादानवाश्चविदारिताः । अतएवरुधिरौघप्रवर्षिणःसंतः पृथ्व्यांपेतुः पतिताः॥ विदारिताइति।दृविदारणे क्र्यादिः हेतुमतिकर्मणिक्तः ॥ अन्यथाविदीर्णाःस्युः।चुरादौचापि॥दारितेभिन्नभेदितौ॥यद्वाविदारणंविदारःससंजातएषांवि

कमंडलुजलाक्षेपहतवीर्यान्हतौजसः ॥ ब्रह्माणीचाकरोच्छत्रून्येनयेनस्मधावति ॥ ३२ ॥ माहेश्वरीत्रिशूलेनतथाचक्रेणवैष्णवी ॥ दैत्याञ्जघानकौमारीतथाशक्त्यातिकोपना ॥ ३३ ॥ ऐंद्रीकुलिशपातेनशतशोदैत्यदानवाः ॥ पेतुर्विदारिताः पृथ्व्यांरुधिरौघप्रवर्षिणः ॥ ३४ ॥ तुंडप्रहारविध्वस्तादंष्ट्राग्रक्षतवक्षसः ॥ वाराहमूर्त्यान्यपतंश्चक्रेणचविदारिताः ॥ ३५ ॥ नखैर्विदारितांश्चान्यान्भक्षयंतीमहासुरान् ॥ नारसिंहीचचाराजौनादापूर्णदिगंतरा ॥ ३६ ॥

दारिताः ॥ रुधिराणामोघाःतेषांप्रवर्षाणितद्वंतः ॥ ओघोवृंदेंभसांरये ॥ यद्यप्यसुरांदैत्यदैतेयदनुजेंद्रारिदानवाइतिभेदेनाभिदधुः।तथापिमातृभेदतोभेदोनास्ति ॥ अतएवसमानार्थत्वविवक्षूणामपिसमानार्थानामेकशेषोनकृतः ॥ ३४ ॥ वराहस्यभगवतोविष्णोरियंवाराही मूर्तिःकायोयस्याःसातस्याः ॥ यद्वा वराहस्यायंवाराहोविष्णोरवतारः तस्येवमूर्तिःयस्याः सातस्याःवराहमूर्त्याःतुंडंमुखम् ॥ तुडितोडने ॥ तुण्डत्यनेनखंडयतीतितुण्डंतेनकृतःप्रहारःतेनविध्वस्ताःव्यसूकृताः असुराःतस्याःसंबन्धिन्यौयेद्वेदंष्ट्रेतयोरग्रभागौताभ्यांक्षतानिवक्षांसियेषांतेदंष्ट्राग्रक्षतवक्षसः ॥ तस्याएवचक्रेणवैष्णवायुधेनविदारिताःसंतोन्यपतन्रणभुविपतिताः ॥ ३५ ॥ नादेनसिंहनादेनासमंतादभिव्याप्यपूर्णानिपूरितानिदिशामंतराण्यंतरालानिययासा॥नादापूरितदिङ्मुखेतिवापाठः ॥ वादांतशांतपूर्ण० इतिपूरितेतिनिपात्यते॥नरसिंहस्यभगवतोविष्णोरवतारस्येयंशक्तिर्नारसिंही आजौयुद्धेचचारविजहार ॥ किंकुर्वती । नखैरायुधैर्विदारितान्स्फुटितगात्रानन्यान्महासुरान्भक्षयंती ॥ अथवा च अ आन्यानितिच्छेदः॥अ इतिप्रतिषेधार्थकमव्ययम् ।

आन्यानिति ॥ अनप्राणनेणिच्यचोयत्‌आननीयाःआन्याःजीवयितुमर्हाः ॥ अआन्याःदुष्टत्वान्मारणीयाः ॥ तान्‌महतोऽसुरान्‌भक्षयंतीनारसिंहीखलुमारयतिखादतिच ॥ समित्याजिसमियुधः ॥ समेक्ष्मांशेरणेप्याजिः ॥युद्धभागक्षणेप्वाजिः ॥ अनेननारसिंहीपराक्रमःकथितः ॥ ३६ ॥ शिवदूत्याचंडिकोत्पन्नशक्त्या चण्डाट्टहासैःभयंकरैः अभिदूषिताः प्रापितवैकृत्याःप्रापितमूर्छाः असुराःपृथिव्यांपेतुः ॥ अथ तदापतितान्नसुरान्सैवशिवदूती चखादभक्षयामास ॥ चंडिकाशरीराद्विनिर्गतायाशिवंदूतमकरोत्साशिवदूती तत्पराक्रमउक्तः ॥ ३७ ॥ इत्युक्तरीत्या मातृणांब्रह्माण्यादीनांगणंसमूहंक्रुद्धंक्रोधाविष्टमतएवविविधैरभ्युपायैःसंग्रामसाधनैरमोघैः महासुरान्‌मर्दयंतंदृष्ट्वादेवानामरयोदैत्याःतेषांसैनिकाःसेनासमवेताःनेशुः । णशअदर्शने ॥ अदर्शनमगुः ॥ पलाय्ययपुरितियावत्‌ ॥ ब्रह्माणीवैष्णवीरौद्रीकौमारीशिवदूतिका ॥ ऐंद्रीच नारसिंहीचवाराहीचाष्टमातरः ॥ अणिमेत्यन्यामातरोष्टौ ब्राह्मीमाहेश्वरीचैंद्रीवाराहीवैष्णवीतथा ॥ कौमारीचर्ममुंडाचकालीसंकर्षणीतथेति ॥ ब्राह्मीमाहेश्वरीचैवकौमारी वैष्णवीतथा ॥ वाराहीचतथैंद्राणीचामुण्डाःसप्तमातरइत्यनेन ॥ अन्येत्वाहुः ब्राह्मीमाहेश्वरीचैवकौमारीवैष्णवीतथा ॥ वाराहीचैवमाहेंद्रीचामुंडा सप्तमातरः ॥ ३८ ॥

चंडाट्टहासैरसुराः शिवदूत्यभिदूषिताः ॥ पेतुःपृथिव्यांपतितांस्तांश्चखादाथसातदा ॥ ३७ ॥ इतिमातृगणंक्रुद्धंमर्दयंतंमहासुरान्‌ ॥ दृष्ट्वाभ्युपायैर्विविधैर्नेशुर्देवारिसैनिकाः ॥ ३८ ॥ पलायनपरान्दृष्ट्वादैत्यान्मातृगणार्दितान्‌ ॥ योद्धुमभ्याययौक्रुद्धोरक्तबीजोमहासुरः ॥ ३९ ॥ रक्तबिंदुर्यदा भूमौपतत्यस्यशरीरतः ॥ समुत्पततिमेदिन्यास्तत्प्रमाणोमहासुरः ॥ ४० ॥ युयुधेसगदापाणिरिंद्रशक्त्यामहासुरः ॥ ततश्चैंद्रीस्ववज्रेणरक्तबीजम ताडयत्‌ ॥ ४१ ॥ कुलिशेनाहतस्याशुबहुसुस्राववशोणितम्‌ ॥ समुत्तस्थुस्ततोयोधास्तद्रूपास्तत्पराक्रमाः ॥ ४२ ॥

रक्तंबीजंयस्यसरक्तबीजोमहासुरः ॥ दैत्यान्‌मातृगणेनब्रह्माण्यादिमातृसमूहेनार्दितानतएवपलायनपरान्‌दृष्ट्वाक्रुद्धःसन्‌कर्त्तरिक्तः ॥ देव्यासहयोद्धुमाययौ ॥ रक्तंबीजयति बीजंकरोतिरक्तबीजः । कर्मण्यण्‌ ॥ अर्द्दहिंसायाम्‌ ॥ ३९ ॥ अस्यरक्तबीजासुरस्यशरीरात्‌रक्तबिंदुःरक्तपृषतःयदाभूमौपततितदातत्प्रमाणःरक्तबीजासुरशरीरपरिमाणःमहासुरःमेदिन्याःसकाशात्समुत्पततिसमुत्पद्यते ॥ अतश्च रक्तबीजोरक्तबिंदुबीजोरक्तबिंदुश्चेतिख्यातोभूत्‌ ॥ रक्तबिंदुरित्येकवचनमुपलक्षणम्‌ ॥ तेनयावंतःतत्ररक्तबिंदवः पतंतितावंतएवतादृशाएवरक्तबीजासुरसमाएवमहासुराभूमितःसमुत्पद्यंते ॥ मेदिन्यामितिपाठेअधिकरणंविवक्षितम्‌ ॥ ४० ॥ समहासुरोरक्तबीजोगदापाणिःसन्‌इन्द्रशक्त्या ऐंद्र्यासहयुयुधे ॥ ततःऐंद्रीस्ववज्रेणनिजायुधेनकुलिशेनरक्तबीजमताडयत्‌ ॥ बधुंजीवप्रसूनेनसदृशारक्तबिंदवः ॥ रक्तबिंदुःक्षितिस्पृक्सन्‌जायतेवत्समोऽसुरः ॥ ४१ ॥ ऐंद्र्याकुलिशेनवज्रेणाहतस्यरक्तबीजशरीरतःबहुलंशोणितम्‌आशुसुस्रावभूमौपपात ॥ ततःशोणितात्तस्यैवरक्तबीजस्यैवरूपमाकृतिर्येषांतेतद्रूपाःतस्यरक्तबीजस्यैवपराक्रमोये

षांतेत त्पराक्रमाश्च यांधायोद्धारः रक्तबीजरक्तजासुररक्तानुनोत्पद्यंतइत्यतउक्तंतद्रूपाइति ॥ स्रुगतौदंत्यादिः ॥ कुलिशेनाहतइतिप्रथमांतपाठे घटःस्रवतीतिवदकर्मकत्वेन शोणितंसुस्राव। जगामग्रामवानित्यर्थविवक्षायांसकर्मकतास्त्येव ॥ अहतस्यरक्ताबिंदोःशरीरतःशोणितंकर्तृसुस्रावेत्यत्राकर्मकत्वंतुघटात्पयःस्रवतीतिवत्कर्मनिरपेक्षत्वादवसेयम् ॥ ४२ ॥ तस्यर क्तबीजस्यशरीरात्यावंतःयत्परिमाणाःयावत्संख्याकाःरक्ताबिंदवःपृथिव्यांपतिताःतावंतएवतत्परिमाणाएवतत्संख्याकाएवपुरुषाःदैत्याःतस्यरक्तबीजस्यतुल्यबलाश्चतुल्यविक्रमाश्चजाताःसमजनिषतेत्यर्थः ॥ वीर्यवीरस्यकर्मचबलंप्राणसामर्थ्यम् ॥ विक्रमस्तुपदाक्रांतौशौर्येचापिप्रकीर्तितः ॥ विक्रमस्त्वतिशक्तिता ॥ ४३ ॥ तत्रसंग्रामेतेरक्तबीजासुररक्तसम्भवाःपुरुषाःदैत्याः मातृभिःब्रह्माण्यादिभिःसमंसार्द्धमत्युग्रमतिदारुणंयथास्यात्तथाशस्त्राणांपातैरतिभीषणमतिभयंकरंचयथास्यात्तथायुयुधुः॥ व्यत्ययोबहुलमितिपरस्मैपदम् ॥ ४४ ॥ पुनश्चपुनरपिऐंद्र्याशक्त्याकृतेनवज्रपातेनास्यरक्तबीजस्यशिरोमस्तकंयदाक्षतंदलितंभग्नमभूत्तदाततःवज्रताडिताच्छिरसःसकाशान्निर्गलितंरक्तंकर्तृउवाहप्रवहतिस्मप्रवाहीबभूवेतियावत् ॥ ततःतस्माचरक्तप्रवाहात्सहस्रंसहस्रंसहस्रशःपुरुषाःदैत्याःजाताः ॥ ववाहेति ॥ वहप्रापणेलिट्यभ्यासस्योभये

**यावंतःपतितास्तस्यशरीराद्रक्तबिंदवः ॥ तावंतःपुरुषाजातास्तद्वीर्यबलविक्रमाः ॥ ४३ ॥ तेचापियुयुधुस्तत्रपुरुषारक्तसम्भवाः ॥ समंमातृभिरत्युग्रंशस्त्रपातातिभीषणम् ॥ ४४ ॥ पुनश्चवज्रपातेनक्षतमस्यशिरोयदा ॥ ववाहरक्तंपुरुषास्ततोजाताःसहस्रशः ॥ ४५ ॥ वैष्णवीसमरेचैनंचक्रेणाभिजघानह ॥ गदयाताडयामासऐंद्रीतमसुरेश्वरम् ॥ ४६ ॥**

षामितिसंप्रसारणंतुसंज्ञापूर्वकोविधिरनित्यइतिनेत्याहुः ॥ बहिरसंप्रसारणप्रकृत्यंतरतयाऽदन्त्योष्ठ्यादिरस्तीत्यपरे ॥ वाहप्रयत्नेइत्यस्यात्मनेपदानित्यत्वाद्ववाहेत्यपरे ॥ चक्षिङोङित्करणमनुदात्तेत्लक्षणात्मनेपदानित्यत्वेज्ञापकमाहुः ॥ ववेत्यव्ययम् वव इतिप्रथमरक्तनिःसरणजनितध्वनिमाहेत्यन्ये ॥ ववइत्येवशब्दमाह रक्तंकर्तृ प्रथमतइत्यर्थः उवाहेत्यर्थेववइतिशब्दानुकरणम् ॥ तेनअनुकार्यानुकरणयोर्भेदस्याविवक्षितत्वादसत्यर्थवत्त्वेववित्ययमाहेतिवद्विभक्त्युत्पत्त्यभावः । अन्यथाववमाहेतिस्यात् ॥ केचित्तुकृतसंप्रसारणमुवाहेत्येवपेठुः ॥ वयंतुब्रूमः—संप्रसारणमत्रकर्त्तव्यंकृतेतस्मिन्संप्रसारणाच्चेत्यत्रपूर्वरूपत्वेनित्येप्राप्तेवाछंदसीत्यनुवृत्तौपूर्वरूपत्वाभावपक्षेमित्रावरुणौयज्यमानावितिवत्पुनःप्रसंगविज्ञानादिकोयणचीतियणादेशएवश्रूयते ॥ छंदोवत्पुराणानिचभवंतीति ॥ तदित्थं पाठव्याख्याश्चधातूनांदृश्यंतेस्वैरिणःक्वचित् ॥ प्रयोगएवभगवांस्तानवस्थापयत्यपि ॥ ४५ ॥ समरेसंग्रामेविष्णोरियंवैष्णवीशक्तिरेनंरक्तबीजंचक्रेणअभिजघान अथचसाऐंद्रीएनंरक्तबीजमसुरेश्वरंगदयाताडयामास ॥ यद्वाऐंद्रीतमित्येकंपदम् ॥ प्राक्ऐंद्र्याशक्त्याइतःयोद्धुंप्राप्तःतंरक्तबीजं सावैष्णवीशक्तिः चक्रेणउरसिजघान ॥ नकेवलंचक्रेण गदयाताडयामास ॥ ४६ ॥

वैष्णव्याः चक्रेणभिन्नस्यविदारितस्यरक्तबीजस्यरुधिरस्रावसम्भवैः रक्तप्रवाहसमुद्भवैः तत्प्रमाणैः रक्तबीजशरीरपरिमितैः सहस्रंसहस्रंतेनसहस्रशः ॥ यद्वासहस्रेणसहस्रशः ॥ संख्यैकवचनाच्च वीप्सायांशस् ॥ महासुरैः जगद्भुवनंव्याप्तंव्याकीर्णम् ॥ अवर्णनीयैरसंख्याकैस्त्रैलोक्यंव्याप्तमितिभावः ॥ ४७ ॥ कुमारस्येयंकौमारीशक्तिः देवताशक्त्याआयुधेनरक्तबीजंमहासुरंजघान ॥ तथावाराहीअसिनाखड्गेनतंरक्तबीजंजघान ॥ तथामाहेश्वरीत्रिशूलेनतंजघान ॥ क्वचित्तुपाठः ॥ माहेश्वरीत्रिशूलेनरक्तबीजंमहासुरम् ॥ ताडयामासहृदयेनचचालतथापिस इतिदृश्यते ॥ यद्यपिहृदयेमाताडयामासतम् । तथापिसः रक्तबीजः संग्रामान्नचचाल ॥ नापजगामेत्यर्थः ॥ ४८ ॥ सचापि रक्तबीजोमहासुरः कोपसमाविष्टः कोपानलज्वालाकुलः सन् गदयासर्वाएवमातृः ब्रह्माण्यादीः शक्तीः पृथक्प्रत्येकमहनत् अताडयत् ॥ दैत्यः महासुरइत्युक्तेकुतोनपौनरुक्त्यंस्यात ॥ ॥ सामान्यतो दैत्योमावित्युक्त्वासामर्थ्यंतोमहांश्चासावसुरश्चेत्यतिशयप्रदर्शनादपौनरुक्त्यम् ॥ यद्वा दितेरपत्यंदैत्यः असून्रातिगृह्णातिअसुरः ॥ आतोनुपसर्गेकः ॥ महांश्चासावसुरश्चेति ॥ यद्वा महांतः असुराःयस्य सः ॥ यद्वा मंमहादेवंजहातिमहः महश्चासावसुरश्च ॥ मः शिवश्चन्द्रमाश्चस्यात् ॥ ओहाक्त्यागे ॥

**वैष्णवीचक्रभिन्नस्यरुधिरस्रावसम्भवैः ॥ सहस्रशोजगद्व्याप्तंतत्प्रमाणैर्महासुरैः ॥ ४७ ॥ शक्त्याजघानकौमारीवाराहीचतथासिना ॥ माहेश्वरी त्रिशूलेनरक्तबीजंमहासुरम् ॥ ४८ ॥ सचापिगदयादैत्यः सर्वाएवाहनत्पृथक् ॥ मातृः कोपसमाविष्टोरक्तबीजोमहासुरः ॥ ४९ ॥ तस्याहतस्यबहुधाशक्तिशूलादिभिर्भुवि ॥ पपातयोवैरक्तौघस्तेनासञ्छतशोसुराः ॥ ५० ॥ तैश्चासुरासृक्संभूतैरसुरैः सकलंजगत् ॥ व्याप्तमासीत्ततोदेवाभयमाजग्मुरुत्तमम् ॥ ५१ ॥**

आतोनुपसर्गेकः ॥ अहनदितिहनहिंसागत्योः लङ्स्तिप् ॥ अदिप्रभृतिभ्यः शपोलुक्संज्ञापूर्वकोविधिरनित्यइतिनेत्याहुः ॥ यद्वा ॥ हंतीतिहनः पचाद्यच् ॥ हनइवाचरत् ॥ सर्वप्रातिपदिकेभ्यः क्विब्वाचारेवक्तव्यः ॥ सनाद्यंतत्वाद्धातुत्वात्हनशब्दाल्लङ्स्तिप् ॥ अडागमः ॥ ४९ ॥ शक्तिशूलादिभिरायुधैर्बहुभिः प्रकारैराहतस्यरक्तबीजस्य । वैशसिच्चोयोरक्तौघः वेगवद्रुधिरप्रवाहः पपातबभ्रंश ॥ तेनरक्तौघेनशतशः शतंशतमसुराआसन् ॥ शतंशतमित्युपलक्षणम् ॥ सहस्रशः लक्षशः कोटिशः बहुशः असुराः रक्तबीजसमानाआसन् ॥ शक्तीनांदेवीनांशूलादीन्यायुधानीत्यपियथायोग्यंव्याख्या ॥ ब्रह्माण्याआयुधंशतघ्नोमंत्रः ॥ वैष्णव्याश्चक्रंमाहेश्वर्याः शूलंपिनाकाख्यंधनुश्च ॥ काल्यां शूलंचक्रंच ॥ ५० ॥ असुरस्य रक्तबीजस्ययदसृक्रक्तंतस्माद्भूमिष्ठात्सकाशात्संभूतैरपिउद्दिष्टनामधेयैरसुरैः रक्तबीजसदृशैर्वातुकैः सकलंजगत्त्रैलोक्यंव्याप्तमासीत् ॥ ततोदेवाउत्तमपत्यधिकंभयमाजग्मुः ॥ अहोकिमेतदासीदहोस्वल्पसौशांतिकर्मणिवेतालोदयः ॥ यज्जगद्रक्षणार्थो दैत्यक्षयार्थः संग्रामः प्रारब्धोभगवत्यासतावन्नाभूत्प्रत्युतरक्तबीजरक्तजैरसंख्यातैर्वातुकैर्दैत्यै

जगदापूर्णपीड्यते॥ हंतैतदितिदेवाःसाध्वसमापुरितितमामितिभावः ॥ पटैकदेशेदग्धेपटोदग्धइतिवज्जगदेकदेशोपिजगदेवेतिसाकल्येनजगद्व्याप्तमित्युक्तम्॥ सकलमित्येवोक्तेकिंत दितिसाकांक्षस्याततउभयमप्युक्तम् ॥५१॥ चंडिकादेवीसुरान्देवान्विषण्णान्विषादसहितान्दृष्ट्वासत्वरासंभ्रमोपेतासतीतान्प्राह ॥ मायूयंविषीदतसुस्थाभवतेत्यब्रवीत्॥ अधुनैववःशत्रूनृछिनद्मीत्याश्वासयंतीदेवानुक्तवतीत्यर्थः ॥ अथदेवानित्थमाश्वास्यचंडिकादेवीकालीमुवाच ॥ हेचामुंडेत्वदीयंवदनंविस्तीर्णंविशालंकुरुरचयेतिकालीमादिक्षत् ॥ इत्थंभिन्नकर्मत्वात्प्राहोवाचेत्यपौनरुक्त्यंद्रष्टव्यम्॥ यद्वा अप्रा अहसत् त्वरेतिच्छेदः प्रापूरणे अदादिः ॥ अंविष्णुंप्रात्नैश्वर्येणपूरयत्यसौ ॥ आतोनुपसर्गेकः ॥ विष्णुमायेत्यर्थः ॥ त्वरा ॥ ञित्वरासंभ्रमे । त्वरतेत्वरा पचाद्यच् त्वरमाणासती अहसत् ॥ एतावतैवरक्तबीजरक्तजंतुदर्शनेनैवैतेभीताइतिदेवानहसद हसेहसनेलङिरूपम् ॥ प्राहसतत्वरेत्यपिच्छेदेसएवार्थः ॥ त्वरतेइतित्वरा ॥ अतएवप्राहसत्तदेत्यपिपाठे तदादेवानांभयोदयकालेइतिसएवार्थोऽविशिष्टः ॥ यद्वा प्राहसत्वरेत्येकंपदम् ॥ प्राहस्तुरणमूर्द्धनि । प्राहेयुद्धमूर्धनिसत्वरा ॥ यल्लक्ष्यंदेवीपुराणे—प्रययौप्राकाम्ययेति ॥ ५२ ॥ देवीपुनःप्राह हेचामुंडेअनेनविस्तीर्णीकृतेनवेगिनावेगयुक्तेनत्वदीयेनवक्त्रेणमहासुरान्

तान्विषण्णान्सुरान्दृष्ट्वाचंडिकाप्राहसत्त्वरा ॥ उवाचकालींचामुंडेविस्तीर्णंवदनंकुरु ॥ ५२ ॥ मच्छस्त्रपातसम्भूतान्रक्तबिंदून्महासुरान् ॥ रक्तबीजात्प्रतीच्छत्वंवक्त्रेणानेनवेगिना ॥ ५३ ॥ भक्षयंतीचररणेतदुत्पन्नान्महासुरान् ॥ एवमेषक्षयंदैत्यःक्षीणरक्तोगमिष्यति ॥ भक्ष्यमाणास्त्वयाचोग्रानैवोत्पत्स्यंतिचापरे ॥ ५४ ॥ ऋषिरुवाच ॥ इत्युक्त्वातांततोदेवीशूलेनाभिजघानतम् ॥ मुखेनकालीजगृहेरक्तबीजस्यशोणितम् ॥ ५५ ॥

रक्तबीजात्तस्मकान्ममशस्त्रपातेभ्यः संभूतान्समुत्पन्नान्रक्तानांरुधिराणांबिंदून्प्रतीच्छगृहाणपिबेत्यर्थः ॥ इषुइच्छायांप्रतिपूर्वोग्रहणार्थः ॥ रक्तबीजादित्यपादानंयावत्तद्रक्तबिंदवःक्षितिंनस्पृशंतितावदेवांतरिक्षेतान्मुखेनगृहाणेतिसूचनार्थम् ॥ अन्यथारक्तबिंदवः क्षितिंस्पृशंतस्तत्समानान्महासुरानुपजनयेयुरितिभावः ॥ ५३ ॥ हेचामुंडेत्वंतस्माद्रक्तबीजरक्तादुत्पन्नान्महासुरान्भक्षयंतीरणेसंग्रामेचरविहर ॥ ततःकिंफलिष्यतीत्याह ॥ एवमनेनप्रकारेणएषरक्तबीजः क्षीणरक्तः सन्क्षयंनाशंपरासुतांगमिष्यति प्राप्स्यति ॥ रक्तबीजरक्तजाःदैत्याःकिंकरिष्यंतीत्यतआह ॥ हे चामुंडेअपरेचयेरक्तबीजरक्तजामहासुरा उग्रा अतिरौद्राःसंतितेपिचत्वयाभक्ष्यमाणाःसंतःपुनर्नैवोत्पत्स्यंति ॥ पदगतौअनुदात्तेत्त्वादात्मनेपदी ॥ चक्षिङोङित्करणादनुदात्तेत्त्वनिमित्तात्मनेपदस्यानित्यत्वमवसीयतइतिपरस्मैपदंभवति ॥ अन्यथोत्पत्स्यंतेइत्येवस्यात् ॥ ५४ ॥ इत्युक्तप्रकारेणचंडिकादेवीविजिगीषुःसतीतांकालीमित्थंकुर्वित्युक्त्वातंरक्तबीजंशूलेनैकाग्रलोहदंडेनत्रिशूलेनवाभिमुख्येनोरसिजघान ॥ कालीचमुखेनरक्तबीजस्यशोणितंजगृहे

अभूमिष्ठमंतरिक्षेजग्राहअपिबत् ॥ ५५ ॥ तत्ररणेदेव्याशूलेप्रयुक्तेसतिततोनंतरमसौरक्तबीजः गदयाचंडिकादेवीमाजघान ॥ अथगदापातानंतरमसौगदापातःअस्याःदेव्याः अल्पिकामपिस्वल्पामपिवेदनांनचक्रेनैवचकार ॥ देव्याःपरमानंदब्रह्मत्वाद्दुःखलेशोपिकुतइतिभावः॥आङ्योयमहनइत्यात्मनेपदमकर्मकादेवभवति॥ अन्यथाआजघ्नइतिस्यात् ॥ वेदनापीडनंबाधाव्यथनंदुःखनंव्यथा ॥ ५६ ॥ चंडिकादेव्याशस्त्रैराहतस्यतस्यरक्तबीस्यदेहात्यतोयतः यद्यद्यद्बहुशोणितंसुस्रावततः तत्तत्तच्छोणितंकर्म चामुंडाकालीविस्तीर्णीकृतेनतवदनेनसंप्रतीच्छतिजगृहे॥ पपावितिभावः ॥यतस्ततइत्याद्यादित्वात्तसिर्यथायोगम्॥ यद्वा तस्यदेहात्सकाशाद्यतोयतोद्वारतोद्वारात्सुस्रावततस्ततोद्वारात्सकाशात्स्ववक्त्रेणप्रतीच्छतिस्मचामुंडेत्यर्थः ॥ तद्वक्त्रेणेतिपाठे तेनविस्तारितेनवक्त्रेणेत्यर्थः ॥ यतस्ततइत्यर्थेप्रतिकेचिद्व्याचख्युः ॥ इतस्ततइतिक्वचित्पाठः ॥ ॥ ५७ ॥ अस्याः काल्यामुखेरक्तपाताद्रक्तबीजरुधिरपतनात्समुद्गताः समुत्पन्नायेमहासुराः तान्चामुंडाकालीचखाद ॥ अथतस्यरक्तबीजस्यशोणितंचपपौ ॥ ॥ ५८ ॥ देवीचंडिकाशूलेनचक्रेण क्वचिद्वज्रेणेतिपाठः ॥ बाणैःअसिभिःखड्गैःरिष्टिभिःखड्गभेदैःतंरक्तबीजंजघान ॥ कीदृशम् । चामुंडयापीतंशोणितंयस्यतम् ॥ ननु

ततोसावाजघानाथगदयातत्रचंडिकाम् ॥ नचास्यावेदनांचक्रेगदापातोल्पिकामपि॥५६॥ तस्याहतस्यदेहात्तुबहुसुस्रावशोणितम् ॥ यतस्ततःस्ववक्त्रेणचामुंडासंप्रतीच्छति॥५७॥मुखेसमुद्गतायेस्यारक्तपातान्महासुराः॥ तांश्चखादाथचामुण्डापपौतस्यचशोणितम्॥५८॥ देवीशूलेनचक्रेणबाणैरसिभिरिष्टिभिः॥जघानरक्तबीजंतंचामुण्डापीतशोणितम्॥५९॥सपपातमहीपृष्ठेशस्त्रसंहतितोहतः ॥ नीरक्तश्चमहीपालरक्तबीजोमहासुरः ॥६०॥

बाणबाहुल्यंयुक्तमेव ॥ असिबाहुल्यंकिमर्थम्—उच्यते ॥ असिकृतप्रहाराअसयइत्युच्यंते ॥ एवंरिष्टयोपि ॥ असिभिरिष्टिभिरित्यत्रसलोपेछान्दसत्वम् ॥ यद्वा रोरीतिरेफलोपेढ्लोपेपूर्वस्यदीर्घोणइतिदीर्घाभावश्छांदसः ॥ ऋष्टिभिरितितिपाठेपिसलोपसमाधानंछांदसंज्ञेयम् ॥ यद्वा यष्टिभिरितिविवक्षायांसंप्रसारणपूर्वरूपत्वे इष्टिभिर्यष्टिभिरित्यर्थः ॥ तथाचसंधिर्युक्तएव ॥ ५९ ॥ हे महीपालसुरथ देव्याशस्त्रसंहतितःशस्त्रसमूहाद्धेतोःहतःताडितः ॥ यद्वा आद्यादित्वात्तसिः ॥ शस्त्रसंहत्याहतः ॥ यद्वा शस्त्रसंहतिमेत्यहतः ॥ कर्मणिल्यब्लोपेपंचमी ॥ चामुण्डया निःशेषपीतत्वात्नीरक्तश्चसन्रक्तबीजः मर्तुंमहीपृष्ठेभूमेरुपरिपपात ॥ शस्त्रसंघसमाहतइतिपाठे समन्यांजनेर्डअन्येष्वपिदृश्यतइत्यपिशब्दःसर्वोपाधिव्यभिचारार्थः ॥ तेनधात्वंतरादपिडोभवतिकारकांतरेपिचेतिवचनात् । शस्त्राणिसंहंतिसमाहरतिराशीकरोतिशस्त्रसंहतिःयुद्धंतेनसमाहतः ॥ शस्त्रसंघसमाहतइत्यन्वयपाठः ॥ संघसार्थौतुजंतुभिरित्यभिधानात् प्राण्यारब्धःसमूहःसंघः ॥ यद्वा मेघसंघवदुपचारात्संघइवसंघःशस्त्राणांसंघःसमूहः ॥ शस्त्राणिजंतु

वचेष्टंते ॥ ६० ॥ हेनृप सुरथदत्तावधानःशृणु ॥ ततोरक्तबीजवधानंतरंतेप्राग्विषण्णाः त्रिदशाःदेवाःसंप्रतिअतुलमसदृशमपरिमितंहर्षमवापुः ॥ अथचतेषांरक्तबीजादि दैत्यानामसृङ्मदोद्धतः रुधिरपानमदोत्कटः ॥ अतएवमत्तःमदघूर्णितःमातृणांब्रह्माण्यादीनांगणःसमूहः आनंदतः ननर्त्तनृत्यतिस्म ॥ एतेनयुद्धावसानेवीरपाणंसूचितम् ॥ वीरपाणंतुयत्पानंवृत्तेभाविनिवारणे ॥ रुधिरासृग्लोहितास्त्ररक्तक्षतजशोणितम् ॥ ६१ ॥ इति श्रीमार्कण्डेयमहापुराणेश्रीराजाधिराजतोमरान्वयश्रीमदुद्धरणात्मजशं तनुचक्रवर्तिविरचितायां देवीमाहात्म्यटीकायांरक्तबीजवधोनामपञ्चाशीतितमोऽध्यायः ॥ ८५ ॥ ॥ हेभगवन्हेसुमेधोमहर्षे हेअमम ममतारहितभवतात्वयामम सुरथस्यशृण्वतः रक्तबीजवधाश्रितंतद्वधविषयंविचित्रमद्भुतमिदंदेव्याश्चरितस्यमाहात्म्यंमहात्मताआख्यातंकथितम् ॥ रक्तबीजवधस्तेनवाश्रितम् ॥ यद्वा रक्तबीजवधे नयेनविष्णुनाश्रितमाश्रितंरक्तबीजवधेनदुष्करेणसंतुष्टेनविष्णुनाअहोइदमद्भुतमितिश्लाघितमित्यर्थः ॥ यद्वा आकारस्तुपितामहः ॥ आब्रह्मणाश्रितम् आदृतंस्तुतमित्य

ततस्तेहर्षमतुलमवापुस्त्रिदशानृप ॥ तेषांमातृगणोमत्तोननर्त्तासृङ्मदोद्धतः ॥ ६१ ॥ इति श्रीमा०पु०देवीमाहात्म्येरक्तबीजवधोनामपञ्चाशीतितमोध्यायः ॥ ८५ ॥ राजोवाच ॥ विचित्रमिदमाख्यातंभगवन्भवताामम ॥ देव्यांश्चरितमाहात्म्यंरक्तबीवधाश्रितम् ॥ १ ॥ भूयश्चेच्छाम्यहंश्रोतुंरक्तबीजेनिपातिते ॥ चकारशुम्भोयत्कर्मनिशुम्भश्चातिकोपनः ॥ २ ॥ ॥ ऋषिरुवाच ॥ चकारकोपमतुलंरक्तबीजेनिपातिते ॥ शुम्भासुरोनिशुम्भश्चहतेष्वन्येषुचाहवे ॥ ३ ॥ हन्यमानंमहासैन्यंविलोक्यामर्षमुद्वहन् ॥ अभ्यधावन्निशुम्भोथमुख्ययासुरसेनया ॥ ४ ॥

र्थः ॥ रक्तबीजवधाश्रितमितिपाठे आब्रह्माअःविष्णुःउकारस्तुमहेश्वरःतेषांसमाहारद्वंद्वैकवद्भावौ ॥ द्वयोरायोः संधौसवर्णदीर्घः ॥ ततउनासहाऽद्गुणः ओइतिप्रातिपदिकम् ॥ ह्रस्वोनपुंसकेप्रातिपदिकस्य ॥ उनाश्रितमुश्रितम् ॥ रक्तबीजवधेनातिदुःसाध्येनलीलयादेव्याकृतेनसंतुष्यताउनाब्रह्मविष्णुरुद्रेणाश्रितमादृतम् ॥ १ ॥ हेसुमेधः ऋषेदेव्यारक्तबीजेनिपातितेसत्यतिकोपनःशुम्भोनिशुम्भश्चभूयःअत्यधिकंच॥भूयःपुनःयत्कर्मसंग्रामलक्षणंकार्यंचकार ॥ तदहंसुरथोभूयोधिकंयथास्यात्तथाश्रोतुमिच्छामि ॥ पुरुभूःपुरुभूयिष्ठंस्फिरंभूयश्चभूरिच ॥ २ ॥ हेराजन्देव्यारक्तबीजेनिपातितेसतिततोन्येषुचदानवेषुदेव्याहतेषुसत्सुशुंभासुरोनिशुम्भश्चासुरःअतुलमनुपममर्यादंकोपंक्रोधं चकार ॥ अभ्यामर्दसमाघातसंग्रामाभ्यागमाहवाः ॥ आह्वयंतेत्रस्पर्द्धयेत्याहवः ॥ ३ ॥ देव्याहन्यमानंहतंमहासैन्यंविलोक्याथअमर्षंक्रोधमुद्वहन्उद्गिरन्क्रोधाविष्टः सन्॥ उद्वहन्नितिपाठेधारयन्सनिशुम्भःमुख्ययानिजयाअसुरसेनयाआसुरीयासेनातयासहाभ्यधावत् ॥ हन्यमानं वर्त्तमानसामीप्येवर्त्तमानवद्वेतिलटःकर्मणिशानच् ॥ यद्यप्युद्वहनं

पाणिपीडनम्॥ तथापिधात्वनेकार्थतयाधारणमर्थः॥ अन्यथासदृशीमुद्वहेत्कन्यामितिवदुद्वहनंपाणिपीडनंस्यात्॥ ४॥ तस्यनिशुम्भस्याग्रतःपुरस्तात्तथापृष्ठेपश्चाद्भागेतथापार्श्वयोर्वामदक्षिणभागयोःवर्त्तमानाःमहासुराःसंदष्टौष्ठपुटाःरोषदष्टाधरौष्ठाःसंतःदेवींहंतुमुपाययुःउपसमीपमाजग्मुः ॥ उत्तरौष्ठापेक्षयात्ररोषप्रकरणाद्दोष्ठोऽधरोविवक्षितः ॥अन्यथाऽभिधानेओष्ठशब्दोऽधरपर्यायएव ॥अधरशब्दोप्योष्ठपर्यायएव ॥ यदाहुः ॥ ओष्ठाधरौतुरदनच्छदौदशनवाससीइति॥ ओष्ठमात्रेऽधरःस्मृतइतिच॥ ओष्ठशब्देनपरस्यसंसक्तपिधानंवस्तूच्यते ॥ ओष्ठःपुटइवओष्ठपुटःसंदष्टओष्ठपुटोयैस्ते ॥ पुटसंश्लेषणे ॥ पुट्यतेसंश्लेष्यतेपुटः ॥ ५ ॥ स्वबलैर्वृतःस्वैरात्मीयैःसैन्यैर्वेष्टितःमहावीर्यःमहाप्रभावःशूरःशुम्भोपिप्रथमंमातृभिर्ब्रह्माण्यादिभिःसमंयुद्धंकृत्वाअथकोपात्क्रोधावेशाच्चंडिकांदेवींनिहंतुमाजगाम ॥ शुम्भोनजानातिचंडिकाभगवतीहंतुंनशक्येतिभावमावेदयितुंकोपादित्युक्तम् ॥ ६ ॥ ततोनंतरंतयोःअतीवात्यर्थमुग्रंरौद्रंशराणांवर्षंवृष्टिंवर्षतोःशुम्भनिशुम्भयोः देव्यासहयुद्धमासीत् ॥ कयोरिववर्षतोःमेघयोरिव ॥ यथामेघौपृथग्भूतौवर्षतः

तस्याग्रतस्तथापृष्ठेपार्श्वयोश्चमहासुराः ॥ संदष्टौष्ठपुटाःक्रुद्धाहंतुंदेवीमुपाययुः ॥ ५ ॥ आजगाममहावीर्यःशुंभोपिस्वबलैर्वृतः ॥ निहंतुंचंडिकांकोपात्कृत्वायुद्धंतुमातृभिः ॥ ६ ॥ ततोयुद्धमतीवासीद्देव्याःशुंभनिशुंभयोः॥ शरवर्षमतीवोग्रंमेघयोरिववर्षतोः ॥७॥ चिच्छेदास्ताञ्छरांस्ताभ्यांचंडिकास्वशरोत्करैः ॥ ताडयामासचांगेषुशस्त्रौघैरसुरेश्वरौ ॥८॥ निशुंभोनिशितंखड्गंचर्मचादायसुप्रभम् ॥ अताडयन्मूर्ध्निसिंहंदेव्यावाहनमुत्तमम् ॥ ९ ॥ ताडितेवाहनेदेवीक्षुरप्रेणासिमुत्तमम् ॥ निशुंभस्याशुचिच्छेदचर्मचाप्यष्टचंद्रकम् ॥ १० ॥

वृष्टिधाराः तथा ॥ ७ ॥ ताभ्यांशुम्भनिशुम्भाभ्यामस्तानक्षिप्तान्प्रेरितान्शरान्बाणान्चण्डिकादेवीस्वैःशराणामुत्करैःपुंजैः ॥ यद्वा स्वेषामात्मीयानांशराणामुत्करैःस्वस्याः आत्मनःशराणामुत्करैर्वा ॥ सर्वनाम्नोवृत्तिमात्रेपुंवद्भावः ॥ स्यान्निकायःपुंजराशीतूत्करःकूटमस्त्रियाम् ॥ कृविक्षेपेउत्कीर्यतेउत्कराः ॥ कर्मणि ऋदोरप् ॥स्तोमैः चिच्छेदखंडयामास ॥ अथचसातावसुरौशुम्भनिशुंभावपिकर्मभूतौअंगेषुतदीयेषुप्रत्यंगंप्रतिरोमकूपम् शस्त्रौघैर्बाणाद्यायुधव्यूहैस्ताडयामास ॥ ८ ॥ निशुंभः निशितंतीक्ष्णंखड्गंमंडलाग्रंसुप्रभं प्रभामंडलभास्वरंचर्मचफलकमादायगृहीत्वादेव्याःउत्तमंश्रेष्ठंवाहनंसिंहंमूर्ध्निमस्तकेअताडयत् ॥ तडआघातेचुरादिः ॥ निशितंक्ष्णुतंतेजितमितियावत् ॥ सुप्रभमितिखड्गस्यविशेषणंचर्मणश्च ॥ संभवेव्यभिचारेचस्याद्विशेषणमर्थवत् ॥ ९ ॥ निशुम्भेनवाहनेसिंहेताडितेसतिदेवीचंडिकाक्षुरप्रेणक्षुरप्रत्याकारेणपूरयतिमुखेनानुकरोतिक्षुरप्रोबाणविशेषः ॥ तेननिशुंभस्यउत्तमंश्रेष्ठमसिंखड्गंचिच्छेद ॥ आशुअविलंबेनाष्टचंद्रकंचतेनैवक्षुरप्रेणचिच्छेदैकप्रयत्नेनअसिंचर्मचविदारयामासेत्यर्थः ॥

अष्टौचंद्रायस्मिंस्तदष्टचंद्रकंलिखिताष्टचंद्रकमित्यर्थः ॥ यद्वा अष्टः व्याप्तः चंद्रः कर्पूरोयस्मिन्विलिप्तोस्तितदष्टचंद्रकम् ॥ अशूव्याप्तौकर्त्तरिक्तः ॥ यद्वा अष्टौचंद्रांश्चित्रितान्कायतिअष्टचंद्रकम् ॥ अष्टानांचंद्राणांसमाहारोष्टचंद्रंतत्कायत्यात्मलक्ष्यत्वेनलिखितंकथयत्यष्टचंद्रकम् ॥ कर्पूरश्चंद्रसंज्ञकः ॥ १० ॥ देव्याचर्मणि द्विधाकृतेखड्गेचच्छिन्नेद्विधाकृतेसतिनिशुंभोसुरोदेवींप्रतिशक्तिमायुधविशेषंचिक्षेपयुयुजे । देवीअभिमुखागतांतामप्यस्यनिशुंभस्यशक्तिंचक्रेणद्विधाचक्रेचिच्छेद ॥ नकेवलंवद्द्वयमेवापितुतदीयांशक्तिमपिचिच्छेद ॥ ११ ॥ अथानंतरंकोपेनाध्मातः कोपाविष्टः कोपाध्मातः कोपाग्नियुक्तः निशुंभः दानवःदेवीमुद्दिश्यशूलंजग्राहप्रयुयुजेइत्यर्थः ॥ अथदेवीमुखमायांतंतंचापिशूलंमुष्टिपातेनमुष्टेः प्रहारेणाचूर्णयत् ॥ सत्यापपाशमूत्रेणावध्वंसनेचूर्णप्रातिपदिकाण्णिच् ॥ अवध्वंसितवतीत्यर्थः ॥ अथवाचूर्णप्रेरणसंप्रेरणयोः चुरादिः ॥ शूलंपुंस्यपि ॥ ध्माशब्दाग्निसंयोगयोः । कोपेनाध्मातः अग्निदीपितः ॥ कर्मणिक्तः ॥ स्त्रीपुंसयोः स्मृतोमुष्टिः ॥ १२ ॥ अथसोपिनिशुंभोपिगदामादायगृहीत्वाचंडिकांप्रतिचिक्षेप ॥ सापिनिशुंभप्रेरितागदादेव्याकर्तृभूतयात्रिशूलेनाग्निबीजगर्भेणकरणेनभिन्नाविदारितासतीभस्मत्वमागताभस्मीबभूवेत्यर्थः ॥ आ

छिन्नेचर्मणिखड्गेचशक्तिंचिक्षेपसोसुरः ॥ तामप्यस्यद्विधाचक्रेचक्रेणाभिमुखागताम् ॥ ११ ॥ कोपाध्मातोनिशुम्भोथशूलंजग्राहदानवः ॥ आयांतंमुष्टिपातेनदेवीतच्चाप्यचूर्णयत् ॥ १२ ॥ अथादायगदांसोपिचिक्षेपचण्डिकांप्रति ॥ सापिदेव्यात्रिशूलेनभिन्नाभस्मत्वमागता ॥ १३ ॥ ततःपरशुहस्तंतमायांतंदैत्यपुंगवम् ॥ आहत्यदेवीबाणौघैरपातयतभूतले ॥ १४ ॥ तस्मिन्निपतितेभूमौनिशुम्भेभीमविक्रमे ॥ भ्रातर्यतीवसंक्रुद्धः प्रययौहंतुमंबिकाम् ॥ १५ ॥

विध्वाथगदांसोपीतिपाठेसोपिनिशुंभोपिचंडिकांप्रतिगदांचिक्षेपआविध्याथ॥ततश्चयंदिगदयादेवींविध्याथनिशुम्भस्तर्हिदेवीप्रयुक्तत्रिशूलेनभस्मीकरणवर्णनंनिशुंभप्रयुक्तगदाया विफलंस्यात्॥देव्याउत्कर्षाभावात्॥ देवीविषयंव्यधनंगदायामेवेति॥ त्रिशूलेनयागदाभस्मत्वमागतास्तुमावाभूत्किंतयाकृतंस्यात्॥पाटच्चरलुंठितवेश्मनियामिकजागरणसंततत्यापिवाकिंकृतंस्यादिति ॥ क्वचिदाविध्याथगदांसोपीतिपाठः ॥आविध्यभ्रामयित्वेत्यर्थः॥ अत्रापिपाठेगदांभ्रामयामासेत्यर्थाश्रयेणकिंचिद्दुष्यतिवैदुष्यमिष्यमाणार्थसिद्धेरितिचेन्मतमायुष्मतः ॥ मैवंमंस्थाः ॥ शब्दशक्तिस्वाभाव्यादाविद्धोमणिरित्यादौविध्यतिराङ्पूर्वोपिताडनार्थएवप्रसिद्धोनतुजातुपारिभ्रमणवृत्तिरित्यलंविस्तरेण। प्रकृतमनुसरामः॥ ॥ १३ ॥ ततःगदायांभस्मीकृतायांतदनंतरंपरशुहस्तंपरश्वधपाणिमभिमुखमायांतंतंनिशुंभंदेवीचंडिकाबाणौघैःशरव्यूहैः आहत्यताडयित्वाभूतलेऽवनितलेऽपातयत प्रभ्रंशयामास ॥ निशुम्भोमूर्च्छांप्रापितोनतावन्मारितोस्तिइदानीमग्रेततोनिशुम्भःसंप्राप्यचेतनामात्तकार्मुकइतिश्रवणात् ॥ १४ ॥ तस्मिन्भीमविक्रमेघोरपराक्रमेनिशुंभेभ्रातरिभूमौ

निपतितेमूर्च्छितेसतिभ्राताशुंभः अतीवसंक्रुद्धःअतितरांक्रोधाविष्टःसन्नंबिकांदेवींहंतुंप्रययौ॥ १५॥तथातेनप्रकारेणतदातस्मिन्कालेत्युच्चैरथस्थोरथारूढःसःशुंभोत्युच्चैर्गृहीतपरमायुधैरतुलैरनुपमैरष्टभिर्भुजैर्बाहुभिरशेषंकृत्स्नंनभःआकाशमंडलंव्याप्याक्रम्यबभौशुशुभे ॥१६॥ देवीचण्डिकातंशुम्भंसंमुखमायांतमागच्छंतंविलोक्यशंखमवादयत्पूरयामास किंच अतीवातितरांदुःसहंसोढुमशक्यंधनुषः ज्यायाधनुरारोपेमौर्व्याःशब्दंटंकारस्वनंचकार ॥ शंखस्वनश्चापस्वनोयुद्धोत्साहंजनयति ॥ मौर्वीज्याशिंजिनीगुणः ॥ आरोपितज्यास्वनार्थधनुर्ग्रहणम् ॥ धनुःशब्दोर्द्धर्चादित्वात्पुंनपुंसकलिंगः ॥ धनुर्वंशविशुद्धोपिनिर्गुणः किंकरिष्यति ॥ दुःखेनसह्योदुःसहस्तम् ॥ स्वल्पतीवचनिर्भरे ॥१७॥ समस्तदैत्यसैन्यानांसकलासुरसेनानांतेजसांवधंविनाशंविदधातिकरोतितितेन ॥ यद्वा तेजसांवधस्यविधायः भावेघञ्सोस्त्यस्यसतथोक्तः ॥ तेननिजघंटास्वनेनचककुभोदशापिदिशःपूरयामाससंवर्द्धयामास ॥ पूरीआप्यायनेदिवादिः।आप्यायनंवृद्धिःहेतुमतिचेतिणिच् ॥ कास्प्रत्ययादाममन्त्रेलिटि ॥ स्वनेनचेतिचकारेणशंखज्यानिजघंटास्वनैःदिशःपूरयामासेत्येतदुक्तंस्वनत्रयंसमुच्चीयते ॥ तेजःप्रभावेदीप्तौचबलेशुक्रेपिसंस्मृतौ ॥ अधिक्षेपावमानादेः प्रयुक्तस्यपरेणयत् ॥ प्राणात्ययेप्यसहनंतत्तेजः समुदाहृतम् ॥ १८ ॥

सरथस्थस्तदात्युच्चैर्गृहीतपरमायुधैः ॥ भुजैरष्टाभिरतुलैर्व्याप्याशेषंबभौनभः ॥१६॥ समायांतंतमालोक्यदेवीशंखमवादयत् ॥ ज्याशब्दंचापिधनुषश्चकारातीवदुःसहम् ॥ १७ ॥ पूरयामासककुभोनिजघंटास्वनेनच ॥ समस्तदैत्यसैन्यानांतेजोवधविधायिना ॥ १८ ॥ ततःसिंहोमहानादैस्त्याजितेभमहामदैः ॥ पूरयामासगगनंगांतथैवदिशोदश ॥ १९ ॥ ततःकालीसमुत्पत्यगगनंक्ष्मामताडयत् ॥ कराभ्यांतन्निनादेनप्राक्स्वनास्तेतिरोहिताः ॥ २० ॥ अट्टाट्टहासमशिवंशिवदूतीचकारह ॥ तैःशब्दैरसुरास्त्रेसुःशुम्भःकोपंपरंययौ ॥ २१ ॥

ततःशंखादिस्वनानंतरंसिंहः केसरीत्याजिताः वर्जिताः इभानांगजानांमहांतोमदायैः तैस्तैःदूरीकृतमत्तेभमदप्रवाहैः । सिंहगर्जनश्रवणाद्गजाः खलुनिर्मदाः स्युः । महानादैःमहद्भिःकंठीरवस्यनादैःकंठगर्जनैर्गगनमाकाशंपूरयामास ॥ तथैवतैर्महानादैः पृथ्वींपूरयामास ॥ तथैवदशदिशःपूरयामास ॥ क्वचित्तुगांतथोपदिशोदशेतिपाठः अत्राव्याप्तिकत्वे पूरितशंखज्याघंटानांनादापेक्षयासिंहनादोधिकः ॥ यतोसौगगनादिकंसर्वंपूरयामास ॥ १९ ॥ ततःसिंहनादानंतरंकालीचामुण्डागगनमाकाशंसमुत्पत्यक्ष्मामताडयत् ॥ कराभ्यांपाणिभ्यामाहतवती ॥ यद्वा समुत्पत्योड्डीयगगनंक्ष्मांचद्यावापृथिव्यौद्वेअपिकराभ्यामताडयत् । ततः तन्निनादेनद्यावापृथिव्याघातजनितध्वनिनातेप्रागुक्ताः शंखज्याघंटासिंहस्वनाः तिरोहिताः आच्छादिताआसन् ॥ अल्पोध्वनिरधिकध्वनिनाहितिरोधीयते ॥ २० ॥ [illegible]रोतत्पश्चाच्छिवदूतीदैत्यानामशिवंकर्णकटुत्वात्तथाऽट्टाट्टहासमत्युच्चहासंचकार ॥ हप्रसिद्धम् ॥ तैरट्टाट्टहासजनितैःशब्दैर्ध्वनिभिः सुरास्त्रेसुः ॥ त्रसउद्वेगे ॥ उद्वे

गमापुः ॥ एत्वाभ्यासलोपौ ॥ शुम्भस्तुपरमाधिकंकोपंययौप्राप ॥ अट्टअतिक्रमहिंसनयोः ॥ अट्टनमट्टः अतिक्रमउल्लंघनम् ॥ शत्रूनुल्लंघ्योल्लंघ्यहसनमट्टाट्टहासः ॥ यद्वा ॥ अट्टेननादेनातिक्रमेणहासः अट्टाट्टहासः॥ नित्यवीप्सयोरितिवीप्सायांद्विर्वचनम्॥ कर्मधारयवदुत्तरेष्वितिसुपोलोपः ॥ अट्टट्टहासमितिपाठे अट्टट्टहासः महाहासः शकंध्वादित्वात्पररूपत्वम् तम् ॥ यद्वा अट्टेष्वट्टेषुहिंसकेषुहासः ॥ यद्वा अट्टेष्वट्टेषुआतिक्रामत्स्वतिक्रामत्सुहासः । इहकश्चित्त्वाह—अट्टःशकटध्वनिरिति ॥ तन्न ॥ प्रमाणाभावात् ॥ सएवाह अट्टोतिशयइति ॥ तच्चन॥ वीप्सातोन्यत्राट्टशब्दस्यकेवलस्यातिशयार्थतायांप्रयोगाभावात॥ यच्चोक्तंतेनैवअट्टःशकटातिशयार्थेष्विति॥ तच्चपापात्पापीयः॥ प्रमाणानुपन्यासात् ॥ २१ ॥ हेशुम्भदुरात्मंस्त्वंस्वदूतंप्रत्यक्षिपः तिष्ठतिष्ठमावयासीः ॥ तत्फलमद्यपश्य ॥ किमतोनिष्ठुरालापेनप्रयत्नोदिता क्रियाकेवलमुत्तरमत्रेति यदांबिकादेवीव्याजहारतदातस्मिन्कालेआकाशसंस्थितैर्देवैराकाशस्थैः जयेत्यभिहितंजयशत्रूनभिभवेत्युक्तम् ॥ अथवा आजिंयुद्धंकुरुआजयेत्यर्थलेशोज्ञेयः ॥ तिष्ठतिष्ठेतिकोपेसंभ्रमेवाद्विरुक्तिः ॥ २२ ॥ शुम्भेनागत्यढौकित्वाज्ज्वालयातेजसातिभीषणायाशक्तिः मुक्ताप्रेरिता ॥ साआयांतीसतीचंडिकयाकर्तृभूतयामहोल्कयासाधनीभूतयाशक्त्यानिरस्ता

दुरात्मंस्तिष्ठतिष्ठेतिव्याजहारांबिकायदा ॥ तदाजयेत्यभिहितंदेवैराकाशसंस्थितैः ॥ २२ ॥ शुम्भेनागत्ययाशक्तिर्मुक्ताज्वालातिभीषणा ॥आयांतीवह्निकूटाभासानिरस्तामहोल्कया ॥ २३ ॥ सिंहनादेनशुम्भस्यव्याप्तंलोकत्रयांतरम् ॥ निर्घातनिःस्वनोघोरोजितवानवनीपते ॥ २४ ॥

निवारिताऽभूत् ॥ वह्निकूटाभाअग्निपुंजकांतिः ॥ महोल्कयाबृहदंगारकाष्ठज्वालयेत्यपिकश्चिद्व्याख्यत् ॥ ज्वलदीप्तौ ॥ ज्वलितिकसंतेभ्योणः कर्त्तरि ॥ ज्वलतिज्वालेज्वालाच॥ वह्नेर्द्वयोर्ज्वालकीलावर्चिर्हेतिःशिखास्त्रियाम् ॥ मायानिश्चलयंत्रेषुकैतवानृतराशिषु॥ आयोघनेशैलशृंगेसीराङ्गेकूटमस्त्रियाम्॥ महत्युल्काज्वालायस्याःसामहोल्कानामशक्तिःचंडिकायाआयुधम् ॥ निरस्तःप्रहितोयुक्तःप्रेरितःक्षिप्तउज्झितः ॥ विसृष्टोदवितोदूरीकृतोबाणादिमोक्षणे ॥ २३ ॥ हेअवनीपतेसुरथ ॥ यद्यपिशुंभस्यसिंहनादेनकंठगर्जनेनलोकत्रयांतरंव्याप्तमजनिष्ट॥ तथापिसजितवान्शुम्भकृतसिंहनादमतिमहत्तरमपितत्सैनिकनिर्घातनिःस्वनएवततोप्यधिकतमत्वात्तमभिभूतवानितिभावः॥ निर्हणनंनिश्चितोघातःमारणंनिर्घातःतस्यनिःस्वनःशब्दःयःखलुदेवींप्रतिशुम्भसैनिकैःसमरेरसावेशतःकंठतःकथितः—तांनिर्जहिनिर्जहिमारयमारयेतिशब्दः समभूत्सनिर्घातनिःस्वनोत्रविवक्षितः ॥ अथवानिश्चयेनघ्नंतिशत्रूनेभिरितिनिर्घाताः खड्गाद्यायुधसमूहाःतेषांनिःस्वनः परस्पराहतिजनितोध्वनिः ॥ अथवा आकस्मिकएवगगनादुत्पायतः ज्योतिःपातोयः सनिर्घातः सनिर्घोषः तस्य यः स्यान्निःस्वनोघोरः भयंकरः निर्घातनिःस्वनइवशुम्भस्यपातइवोत्पातः ॥ अतएवमसुरंजितवान्जिगाय ॥

शुंभोनजितवान् प्रकाशप्रकर्षमप्राप्यननाशेत्यर्थः ॥ महाध्वनिर्यावापृथिवीव्यापीनिर्घनगगनतः पततियउत्पातोनर्थकरः सनिर्घातः ॥ पृषोदरादित्वात्साधुः ॥ अथवायस्यप्रथमतः सिंहनादेनलोकत्रयंव्याप्तंसशुम्भः पश्चान्निर्घातस्यदानवनाशकारिणउत्पातरूपस्यैवनिर्गतोस्वनोयस्यसनिर्घातनिःस्वनः ॥ अधेनपापेनव्याप्तमुरःप्रधानमंगंतेनोपलक्षितः सन् अजितवान्नाभिभूतवान्देवीमितिशेषः ॥ यद्वा ॥ येनासिंहस्यदेवीवाहनस्यनादेनकंठगर्जनेनलोकत्रयंव्याप्तम् ॥ सएवजितवान्सन्लोकेषूत्कृष्टः सन् शुम्भस्यघोरःनिर्घातनिःस्वनः बभूव ॥ महोत्पातः पापात्मनामनभ्युदयकारीत्याहुः ॥२४॥ अथदेवीउग्रैःस्वशरैःआत्मबाणैःशतशःशतंशतंसहस्रशःसहस्रंसहस्रंशुम्भमुक्तान्शरांश्चिच्छेद ॥ शरान्स्वशरैरितिचोभयविशेषणंयथायोगंद्रष्टव्यम् ॥ अथशुम्भश्चउग्रैःस्वशरैःतत्प्रहितांस्तयादेव्याप्रहितान्प्रेरितानुग्रान्शतशःशतंशतंशरान्चिच्छेदचिच्छिदेचेतिसमत्वमनयोस्तावदित्यर्थः ॥ २५ ॥साचंडिकादेवीततःशुम्भेनसमरसाम्यतस्तदसहमानाअतएवक्रुद्धासतीतंशुम्भंदैत्यंशूलेनायुधेनाभिजघान॥शुम्भःतदातस्मिन्कालेनिहतः ॥ यद्वा तदानिहतः तयादेव्याआनिहतआसमंतान्नितरांहतःअतएवमूर्छितः सन्भूमौनिपपात ॥ मूर्च्छासंजातास्यमूर्छितः॥सवदाअनिहत इतितुच्छे

शुम्भमुक्ताञ्छरान्देवीशुम्भस्तत्प्रहिताञ्छरान् ॥ चिच्छेदस्वशरैरुग्रैः शतशोथसहस्रशः ॥ २५ ॥ ततःसाचंडिकाक्रुद्धाशूलेनाभिजघानतम् ॥ स तदाभिहतोभूमौमूर्छितोनिपपातह ॥ २६ ॥ ततोनिशुंभः संप्राप्यचेतनामात्तकार्मुकः ॥ आजघानशरैर्देवींकालींकेसरिणंतथा ॥ २७ ॥ पुनश्चकृत्वाबाहूनामयुतंदनुजेश्वरः ॥ चक्रायुतेनदितिजश्छादयामासचंडिकाम् ॥ २८ ॥ ततोभगवतीक्रुद्धादुर्गादुर्गार्तिनाशिनी ॥ चिच्छेदतानिचक्राणिस्वशरैः सायकांश्चतान् ॥ २९ ॥

दे देव्याशूलेननिहतःसशुम्भःअनिहतःननिहतःनमारितः नपरासूकृतः॥ किंतर्हि॥मूर्छितःसन्भूमौनिपपातेत्यर्थः ॥२६॥ततःपरशुहस्तमित्यत्रप्राक्निशुम्भंदेवीभूतलेऽपातयदित्युक्तम्॥ततः तस्यपुनरुज्जीवनपूर्वकंसंग्रामंप्रस्तोतुमाहर्षिः ततः भूतलेपतनादनंतरम् ॥ यद्वा ततःशुम्भेमूर्छितेसतिनिशुम्भः प्राङ्मूर्छितः पश्चाच्चेतनां संज्ञांप्राप्यआत्तकार्मुकोगृहीतशरासनः सन्शरैर्देवींचण्डिकां तथाकालींचामुण्डां तथाकेसारिणंसिंहंचआजघान ॥ आङोयमहनइत्यात्मनेपदविधावकर्मकाधिकारात्सकर्मकत्वेतुनात्मनेपदम् ॥ आजघ्नेविषमविलोचनस्यवक्षइत्यत्रतुस्वांगकर्मकाच्चेतिवक्तव्यादात्मनेपदंवक्षसेत्यध्याहृत्यविषमविलोचनस्यवक्षसासहसंगत्यार्जुनः स्ववक्षःजघ्नइत्यर्थः ॥ यद्वा विषमविलोचनस्यसमीपोभूत्वार्जुनः स्ववक्ष आजघ्नेआस्फोटितवानित्यर्थः ॥२७॥ दितेर्जातोदितिजः असुरः दनोर्जातादनुजाः तेषामीईश्वरः स निशुम्भोमायावीपुनश्चबाहूनामयुतंदशसहस्रींकृत्वाअयुतबाहुर्भूत्वाचक्राणामायुधानामयुतेनदशसहस्र्याचण्डिकांछादयामास । छदसंवरणे । ताडयामासेत्यर्थः ॥ रथांगायुधसैन्येषुचक्रंराष्ट्रसमूहयोः ॥ २८ ॥ ततोनंतरंदुर्गार्तिनाशिनीदुरुत्तरदुःखनाशिनी ॥ भगवतीदुर्गाचण्डिकादेवीक्रुद्धासतीस्वबाणैः तानिशुम्भेनप्रेरितानिचक्राणिचिच्छेद ॥ किंच निशुम्भप्रहि

तान्सायकानाशुगांश्चिच्छेद ॥ दुर्गागहनाकृतिरार्तिः पीडातांनाशयंती सुदुरोरधिकरणेचेतिगमेर्डः ॥ आर्तिः पीडाधनुष्कोटयोः ॥ शरेखड्गेचसायकः ॥ षोंतकर्माणि । स्यतिअंतंकरोतिसायकः ॥ २९ ॥ ततःचक्राशुगभंजनतः निशुम्भः वेगेनगदामादायगृहीत्वादैत्यानांसैन्यैःसमावृतः परिवृतःसंश्चण्डिकांहंतुंताडयितुमभ्यधावत् ॥ धावुगतिशुद्धयोःस्वरितेत्त्वाल्लङ्आत्मनेपदम् ॥ जवाहवयोर्वेगः ॥ ३० ॥ आपततआद्रवतएवआगच्छतएवआपतनसमसमयएवतस्यनिशुम्भस्यगदां चण्डिकादेवीशितधारेणतीक्ष्णधारेण खड्गेनमण्डलाग्रेणआशुशीघ्रंचिच्छेद ॥ ततश्चसशुम्भःभग्नगदायुधः शूलमायुधंसमाददेजग्राह ॥ शूलंगृहीत्वाचंडिकांहंतुमाढुढौकेइतिभावः ॥ शिते निशितेद्वेधारेयस्यमशितधारःममाददे ॥ आङोदोनास्यविहरणेआत्मनेपदम् ॥ यद्वा ञित्वादात्मनेपदम् ॥ ३१ ॥ चंडिकादेवीअमरार्दनम् ॥ अर्द हिंसा यांचुरादिः ॥ अर्द्यतेहिनस्तिअर्दनः नंद्यादित्वाल्ल्युः ॥ योरनोणिलोपश्च ॥ अमराणामर्दनःतंशूलहस्तंनिशुम्भम्आयांतमागच्छंतंवीक्ष्यवेगेनसंभ्रमेणरवेनयथास्यात्तथा

ततोनिशुंभोवेगेनगदामादायचंडिकाम्॥अभ्यधावतवैहंतुंदैत्यसेनासमावृतः॥३०॥तस्यापततएवाशुगदांचिच्छेदचंडिका॥खड्गेनशितधारेणसच शूलंसमाददे॥३१॥शूलहस्तंतमायांतंनिशुंभममरार्दनम्॥हृदिविव्याधशूलेनवेगाविद्धेनचंडिका॥३२॥ भिन्नस्यतस्यशूलेनहृदयान्निःसृतोपरः॥ महाबलोमहावीर्यस्तिष्ठेतिपुरुषोवदन्॥ ३३ ॥ तस्यनिष्क्रामतोदेवीप्रहस्यस्वनवत्ततः ॥ शिरश्चिच्छेदखड्गेनततोसावपतद्भुवि ॥ ३४ ॥

आविद्धेनउत्क्षिप्तेनागृहीतेनवाशूलेनायुधेनहृदिवक्षसिविव्याधताडयामास ॥ व्यधताडने ॥ लिट्यभ्यासस्योभयेषांसम्प्रसारणम् ॥ आविध्येत्युक्ते ग्रहिज्यादिनासंप्रसारणम्॥ हृदीतिप्रकरणान्निशुम्भस्येतिगम्यते ॥ क्रियावाचित्वमाख्यातुमेकोत्रार्थः प्रदर्शितः ॥ प्रयोगतोनुसर्तव्याअनेकार्थाहिधातवः ॥ तेनाविध्येतिविवक्षितार्थसिद्धिः ॥ ३२ ॥ देव्याशूलेनभिन्नस्यविद्धस्यतस्यनिशुम्भस्यहृदयाद्वक्षसः सकाशान्महाबलः महाप्राणसमर्थः महावीर्यः महत्तरवीरकर्मादेवींप्रतितिष्ठेतिवदन् अतः क्वयास्यासिमदग्रतोयेतिभाषमाण अपरः शूलिनो निशुम्भादन्यः पुरुषः पुमान्निःसृतः निरगात ॥ अपरइतिदेहभेदनंतुनिशुम्भरूपक्षेत्रज्ञत्वेन ॥ अतएवनपरः अपरइत्यर्थोनुसंधेयः ॥ क्षेत्रज्ञआत्मापुरुषः ॥ पुरुषावात्ममानवौ ॥ ३३ ॥ ततइतिच्छेदःखड्गेनततः असौआपतदितिच्छेदः ॥ ततोनंतरंदेवीस्वनवदुच्चैस्तरांसशब्दंयथास्यात्तथाप्रहस्यरेरेतिष्ठतिष्ठमायाशर्वाणीमन्मयीमायामुपेत्यमामेवहंतुंपुनरुदेष्यसिउदेहिपुनस्तर्हिप्रहास्ष्यामीतिहसित्वातस्यनिष्क्रामतः पुरुषस्यप्राक्तननिशुम्भशरीरान्निर्गच्छतः निशुम्भदैत्यावतारस्य

शिरः मस्तकंखड्गेनचिच्छेद ॥ ततोसौतुनिशुम्भोभुविरणक्षितावपतत् ॥ ३४ ॥ निशुम्भेमृतेतदन्यांस्तदीयानसुरान्किंचकारदेव्यतःपरमित्यतआहर्षिः ॥ ततोनिशुम्भ
पतनादनंतरम् ॥ यद्वा ततःनिशुम्भादपरान्कानप्यसुरान् सिंहःदेवीवाहनंपंचास्यःचखादभक्षयामास ॥ कथम्भूतानउग्रान्रौद्रान ॥ यद्वा उग्रदंष्ट्राभिःक्षुण्णाःसंपिष्टाः
शिरोधराग्रीवायेषांतेतान शिरोधरःशिरोधिः ॥ धरतीतिधरःपचाद्यच्शिरसोधरः ॥ शिरोधरतीतिविग्रहेकर्मण्यण् ॥ ततः सिंहभक्षितेभ्योपरांस्तानसुरान्कालीचामुण्डाच
खाद॥तथापिसिंहकालीखादितशेषाःयेपरेऽसुराःदैत्याःतान्शिवदूतीचखाद ॥ चंडिकाशरीरतोनिष्क्रांताशक्तिःशिवदूतीत्युच्यते ॥ उग्रमितिपाठे ॥ रौद्रंभयंकरंयथास्यात्तथा
दंष्ट्राक्षुण्णशिरोधरानसुरान्सिंहःकालीशिवदूतीचखादेत्यर्थः ॥ ३५ ॥ केचिन्महासुराःकौमार्याःशक्त्या आयुधेननिर्भिन्नाःताडिताःसंतःनेशुः॥ णशअदर्शने॥अत्यंतादर्श
नमत्रादर्शनंनपश्यंति स्मप्राणानित्याहुः ॥ अन्येमहासुराःब्रह्माण्याःशक्तेःमंत्रःगुप्तभाषणीयोवर्णोद्भवोनिगमागमाद्युपदेशगम्यःप्रणवादिः तेनपवित्रीकृतेनतोयेनवारिणानिरा

ततःसिंहश्चखादोग्रदंष्ट्राक्षुण्णशिरोधरान् ॥ असुरांस्तांस्तथाकालीशिवदूतीतथापरान् ॥ ३५ ॥ कौमारीशक्तिनिर्भिन्नाःकेचिन्नेशुर्महासुराः ॥ ब्रह्माणी
मंत्रपूतेनतोयेनान्येनिराकृताः ॥ ३६ ॥ माहेश्वरीत्रिशूलेनभिन्नाः पेतुस्तथापरे ॥ वाराहीतुंडघातेनकेचिच्चूर्णीकृताभुवि ॥ ३७ ॥ खंडंखंडंचचक्रे
णवैष्णव्यादानवाः कृताः ॥ वज्रेणचैंद्रीहस्ताग्रविमुक्तेनतथापरे ॥ ३८ ॥

कृताःअन्येप्रमथादयोनिरस्ताः ॥ २६ ॥ महेश्वरस्येयंमाहेश्वरीतस्याःशूलेनभिन्नाविदारिताःसंतःअपरेदैत्याःरणभूमौपेतुःपतंतिस्मवराहस्यभगवतोविष्णोःशक्तिर्वाराहीतस्याः
तुंडवक्त्रंतेनकृतोघातःताडनंप्रहारः ॥ तेनकेचिदसुराःचूर्णिताःभुविपेतुः॥ ३७॥ विष्णोरियंवैष्णवीशक्तिर्देवतातयाचक्रेणवैष्णवायुधेनकेचिद्दानवाःखंडखंडकृताःखंडत्वप्रकारं
प्रापिताःखंडीकृताः।शकलीकृताइतियावत्॥ प्रकारेगुणवचनस्येतिद्विर्वचनम् ॥ खंडखंडमितिपाठेकर्मधारयवदुत्तरेष्वितिकर्मधारयत्वातिदेशात्सुपोलुक् ॥ खंडसदृशाःकृताइ
त्यर्थः॥ प्रकारोभेदःसादृश्यंच ॥ तदिहसादृश्यंगृह्यते ॥ नन्वत्रदानवइत्येकवचनेनभवितव्यं कर्मधारयवदित्यतिदेशेपिखंडाःकृताइतिभवितव्यंपुंलिंगेनच॥अत्राहुः॥खंडशब्द
स्यगुणवचनत्वाद्गुणमुक्त्वागुणिनियोवर्ततेसगुणवचनइतिगुणवचनस्यलक्षणम् ॥ तस्माद्गुणवचनः विशेषणंचभवतिइतिक्रियाविशेषणानांकर्मत्वंनपुंसकैकत्वंभवतीतिवक्तव्यमि
तिनबहुवचनंनापिपुंल्लिंगमिति॥अन्येत्वाहुः-खंडंखंडमितिचयोगोयंचतुरक्षरइति॥इंद्रस्यइयंशक्तिरैंद्रीतस्याहस्ताग्रंतेनविमुक्तंप्रेरितंवज्रंतेनअपरेदानवाःविनेशुःविनष्टाः॥ ३८॥

केचिदसुराः महाहवंयुद्धंप्राप्यकर्मणिल्यब्लोपेपंचमी ॥ केचित्त्वसुराः महतः आहवात्सकाशान्नष्टाः पलाय्यगताः ॥ अपरेनिशुम्भसैन्येऽवशिष्टाअसुरास्तेंबिकाल्याचामुण्ड
याचण्डिकादेहनिष्क्रांताशिवदूतीतया मृगाधिपः देवीवाहनंसिंहः तेनच भक्षिताः खादिताः कर्मणिक्तः ॥ कालीचशिवदूतीमृगाधिपश्च चार्थेद्वंद्वः परवल्लिंगंद्वंद्वतत्पुरुषयोः॥ एवं
निशुम्भोनिशुम्भसैन्यंचदेव्यासंग्रामेन्यपाति॥ ३९ ॥ इति श्रीमार्कंडेयमहापुराण ० राजाधिराजतोमरान्वयश्रीमदुद्धरणात्मजशंतनुचक्रवर्त्तिविरचितायांदेवीमाहात्म्यटीकायांनि
शुम्भवधोनामषडशीतितमोऽध्यायः ॥ ८६ ॥ ॥ अथशुम्भोदैत्येश्वरः प्राणसंमितंप्राणतुल्यंभ्रातरंनिशुम्भंदृष्ट्वादेव्यानिहतंबलंचसैन्यंहन्यमानम् ॥ वर्त्तमानसामीप्येवर्त्तमानव
द्वेतिकर्मणिलटः शानच् ॥ हतंदृष्ट्वाक्रुद्धः सन्देवींवचनमब्रवीत्॥ ब्रुविर्द्विकर्मकः ॥ देव्यानिशुम्भोनिपातितइतिव्यपदेशमात्रमेतत् । सखलुमेप्राणभूतः सचनिहतोहंतमेप्राणाएव
हताः किमतः परमवशिष्टमिष्टमितिसूचयितुंप्राणसंमितमित्युक्तम् ॥ १ ॥ शुम्भोदेवीमाह॥ हेदुर्गेदुष्टेसर्वदानवनाशिनि ॥ सात्वंगर्वमहंकारंमावहमाआश्रय ॥ कस्माद्गर्वंमा
आवह ॥ बलावलेपात ॥ अवलेपोवलेपनंलेपः सम्बंधः अवकृष्टआश्रितः सम्बंधः अवलेपः बलस्यसामर्थ्यस्यावलेपात्॥ अवलेपस्तुगर्वेस्याल्लेपनेभूषणेपिच॥ अत्रसम्बंधार्थः ॥

केचिद्विनेशुरसुराःकेचिन्नष्टामहाहवात् ॥ भक्षिताश्चापरेकालीशिवदूतीमृगाधिपैः ॥ ३९ ॥ इति श्रीमार्कण्डेयमहापुराणे देवीमाहात्म्येनिशुंभवधोनामषडशीतितमोऽध्यायः ॥ ८६ ॥ ॥ ऋषिरुवाच ॥ ॥ निशुम्भंनिहतंदृष्ट्वाभ्रातरंप्राणसंमितम् ॥ हन्यमानंबलंचैवशुम्भःक्रुद्धोब्रवीद्वचः ॥ १ ॥ बलावलेपाद्दुष्टेत्वंमादुर्गेगर्वमावह ॥ अन्यासांबलमाश्रित्ययुध्यसेयातिमानिनी ॥ २ ॥

गर्वार्थेगृह्यमाणेबलावलेपाद्बलगर्वाद्गर्वंमाआवहेत्यनेनान्वयेनवियागर्वाद्गर्वंकरोतीतिवेदाधिक्यंदोषः स्यात् ॥ बलाद्गर्वंमावहेत्येतावतैवनिराकांक्षत्वस्यसिद्धत्वादवलेपादित्यस्या
धिकत्वेनवैय्यर्थ्यंस्यात् ॥ सात्वमित्युक्तंसाकेत्याह ॥ यात्वमन्यासांब्रह्माण्यादीनांबलमाश्रित्यातिमानिनीसतीनितरामहंकारवतीसतीयुध्यसे ॥ तदित्थंकथमसित्वमतिमानि
नीयदन्यबलेनयुध्यसेनतुस्वबलेनेतिशुम्भाभिप्रायः ॥ युध्यसेचेतिपाठेचशब्दः स्वव्याघातकतांसमुच्चिनोतिदेव्याः ॥ तथाहि॥ त्वंबलस्यदर्पादौद्धत्याद्गर्वंमाआवह ॥ अथचते
बलमेवनास्ति ॥ कुतस्तेबलावलेपः संगतः । बलंतुतदन्यदीयंमैषातेव्याहतिः अन्यासांबलमाश्रित्ययुध्यसेचअतिमानिनीचेति ॥ यद्यन्यबलेनयुध्यसेकुतस्तेतर्ह्यतिमानिनीत्वम्॥ यद्य
पिमानिनीत्वंकुतस्तेतर्हियोद्धुमन्यबलाश्रयणंयुज्यतेकर्तुम्॥ तस्मादस्माद्व्याघाताच्चतत्समुच्चयप्रसङ्गोमाभूदितिशुंभाभिप्रायांतरम् । अतिमानिनिइतिसंबुद्ध्यंतत्वपाठेतुसोल्लुंठनमे
तत्॥ त्वंखल्वखिलैरपिशूरमानिभिर्मुग्ध्याक्रियसे ॥ अथतर्हिकथंत्वमन्यासांबलमाश्रित्ययुध्यसे॥ अतस्तेकुतोमानः॥ कुतस्तरांत्वंमानिनीकुतस्तमांचत्वमतिमानिनीत्याहूयसे॥
ततस्तरांततस्तमांचमागर्वमावहेतिशुम्भाभिप्रायांतरमेतत् ॥ अथवात्वमसन्यसंधाप्यासियतस्ततोदुष्टासि ॥ हेदुष्टेयदुक्तंत्वयायोमांजयतिसंग्रामेयोमेइतित्वयासंग्रामेकिंकृतं

किंचत्वमन्यासांबलमासाद्ययुध्यसे ॥ काल्याचण्डमुण्डौनिहतौ । तद्बलंत्वर्त्सिहेनसंहतम् । रक्तबीजरक्तपानंकालीकिलकलयामास॥निशुंभोपिब्रह्माण्यादीनांबलमाश्रित्य
निपातितः ॥ अस्मद्बलान्यपिताभिरेवनिहतानीतितस्मात्संग्रामप्रतिज्ञापिकदर्थितात्वयेतिसाधूक्तम् ॥ हेदुष्टेइतिशुम्भाभिप्रायांतरम् ॥ देवीपार्षदाभिप्रायस्त्वन्यः—बलाव
लेपाद्दुष्टेइत्येकंपदंसंबुद्ध्यंतंचैतत् ॥ हेबलावलेपाद्दुष्टेहेदुर्गे मात्वंगर्वंदर्पमावहआश्रय ॥ अवलेपोहंकारः ॥ अतसातत्यगमने ॥ आङ्पूर्वःक्विप् ॥ आसमंतादततिआ
त ॥ बलेसैन्येसामर्थ्येचविषयेअवलेपोगर्वःतेनआतसततमुपद्रोतुमागतामुपद्रोताय:सबलावलेपःदैत्यः उपद्रवकारीतस्मिन्विषयेदुष्टाहिंस्रा ॥ तस्याः संबोधनम् ॥ किंभूता
त्वंमालक्ष्मीर्लोकमाता ॥ किंविशिष्टंगर्वम् । अन्यासांद्वितीयांतमेतदाकारांतम् ॥ प्राणिहितमुत्पाद्यहिंसकम् । श्वसप्राणने अनचेत्यनइत्ययंधातुः ॥ अनिति अनःपचाद्यच्
अनायप्राणिनेहितः अन्यः ॥ षोअंतकर्मणि ॥ आदंतत्वाच्छांदसोविच्प्रयुगतोभाषायांचस्यात् ॥ तमन्यंप्राणिहितंमुन्यादिनस्यतिनअंतंनयतिअसाः अन्यस्य
असाः अन्यासाः तमन्यासाम् ॥ आकारांतपुँल्लिंगद्वितीयैकवचनांतपदं सोमपामितिवत् ॥ प्राणिहितंमुनिजनरक्षणमित्यर्थः ॥ येनगर्वेणसात्त्विकरक्षणंभवतितं
गर्वंकुर्वित्यर्थः ॥ यात्वंबलमाश्रित्ययुध्यसे ॥ किंविशिष्टात्वमतिमानिनी ॥ मानपूजायांमाननंमानः भावेघञ् ॥ सोम्त्यस्या मानिनी ॥ अतितरांमानिनीअतिमानिनी ॥

श्रीदेव्युवाच ॥ एकैवाहंजगत्यत्रद्वितीयाकाममापरा ॥ पश्यैतादुष्टमय्येवविशंत्योमद्विभूतयः ॥ ३ ॥

अत्यर्थपूजायुक्तेत्यर्थः ॥ इत्थमयंदेवीष्टाभिप्रायोदेवीपार्षदैरूहितोवधारणीयः ॥ बलावलेपाद्दुष्टेत्वमितिपाठे बलेविषयेअवलेपेनगर्वेण आसमंतातदुष्टाविकृताविरुद्धा
इतिशुंभानुकूलोप्यर्थः ॥ देव्यनुकूलोर्थस्त्वेषः—बलावलेपेनअदुष्टाअकृतेत्युभयत्राप्यर्थभेदोऽवगंतव्यः ॥ २ ॥ हेदुष्टहेअसूयकहेशुम्भ ॥ अत्रास्मिञ्जग
तिभुवनत्रयेपिअहमेकैव ॥ एकमेवाद्वितीयमितिश्रुतेः ॥ परमात्मरूपाहमेकैवास्मि ॥ यद्वा अहमहंकाररूपामायाकृतिःचण्डिकाख्ययाएकाहमस्मि ॥ ममदेव्याःद्वि
तीयापरानास्ति ॥ अस्तिचेत्कथंचनसामदन्यानैव ॥ हेशुम्भ इतःपश्य ॥ एताःब्रह्माण्याद्याः मद्विभूतयः मय्येवदेव्यामेवविशंत्यः संति ॥ ममदेव्याः विभूतयःकायव्यूहसृ
ष्टिसम्पदःपश्य ॥ मृगोधावतीतिवद्वाक्यार्थरूपंकर्मेहद्रष्टव्यम् ॥ एताः शक्तयः मत्कामव्यूहसिद्धिसंसिद्धसृष्टिसम्पदः मद्विभूतयः मदवताराः मय्येवविशंत्यः इतियन्तत्प
श्येत्यर्थः ॥ यद्वा जगदेवजगतीएकैवाहंजगती एकैवजगतीअहम् ॥ अत्रऐक्येमतिअत्रत्यायामेकस्यांमयिजगत्याऐक्येनस्थितायांसत्यांमत्तोजगतीतः सकाशाज्जगतीतोम
त्तःसकाशाच्चापराद्वितीयाव्यक्तिःका मम स्यात् ॥ नकापि॥ तस्मान्मज्जगत्यैक्यात् हेदुष्टहेअसूयकइतःपश्यजगतोनाहमन्यास्यांस्यान्मदन्यज्जगच्चन॥जगतोममचाप्यै

क्याद्वयक्तिरन्याततंास्तुका ॥ अहंचजगतीचैकाजगतीमन्मयीयतः ॥ दुग्धवद्दधिचाप्येकंदधिदुग्धमयंयतः ॥दुष्टेति॥ परस्त्रीलोलुपत्वेनस्वस्त्रीत्यक्ताधवैर्यतः ॥ हंतिवैवस्वतोरा
जानृणामायुःशतंचतत् ॥ मद्वाक्यंहिशिवेनोक्तंत्वयात्यक्तंदुरात्मना॥अतस्त्वांशुम्भहन्म्याजौहतदैवंहतप्रभम् ॥ इत्यभिप्रायतोदेव्याहेदुष्टेत्यभ्यभाषितः ॥ अर्थवैतन्नबोध्यं
चेतफलव्यक्तिर्भविष्यति ॥ ३ ॥ हेसुरथततःमध्येवविशंत्यःसंतिशक्तयःइत्युक्तेरनंतरंताःसमस्ताःअष्टौब्रह्माणीप्रमुखाःशक्तयःदेव्यःदेवताःतस्याआद्यायाःदेव्याःचण्डिकाया
एवतनौशरीरेलयमैक्यंजग्मुः तदाअम्बिकादेवीएकैवासीतअद्वितीयांबिकैवातिष्ठत ॥ एकैवजाता ॥ ४ ॥ हेशुम्भइहरणक्षितौअहंचण्डिकादेवीबहुभिरनेकैः यैः
कृत्वाविभूत्याविभवेनविभुत्वेनव्यापकत्वेनैश्वर्येणवायद्बहुत्वमास्थिताअंगीकृतवत्यस्मितद्बहुत्वं मया संहृतम् ॥ तस्मादहमेकैवतिष्ठामि त्वमाजौ युद्धे स्थिरोभव
यत्तदितिबहुत्वमामान्यमपेक्ष्यैकवचनम् ॥ आस्थितेतिगन्यर्थाकर्मकमूत्रेण तिष्ठतेःकर्त्तरि क्तः ॥ आजाविंतिपदं काकाक्षिगोलकन्यायेनोभयत्रापिसम्बध्यते ॥

॥ ऋषिरुवाच ॥ ततः समस्तास्तादेव्योब्रह्माणीप्रमुखालयम् ॥ तस्यादेव्यास्तनौजग्मुरेकैवासीत्तदांबिका ॥ ४ ॥ ॥ श्रीदेव्युवाच ॥ ॥ अहंवि
भूत्याबहुभिरिहरूपैर्यदास्थिता ॥ तत्संहृतंमयैकैवतिष्ठाम्याजौस्थिरोभव ॥ ५ ॥ ऋषिरुवाच ॥ ॥ ततःप्रववृतेयुद्धंदेव्याः शुम्भस्यचोभयोः ॥
पश्यतांसर्वदेवानामसुराणांचदारुणम् ॥६॥ शरवर्षैःशितैःशस्त्रैस्तथाचास्त्रैःसुदारुणैः ॥ तयोर्युद्धमभूद्भूयःसर्वलोकभयंकरम् ॥ ७ ॥ दिव्यान्यस्त्रा
णिशतशोमुमुचेयान्यथांबिका ॥ बभंजतानिदैत्येंद्रस्तत्प्रतीघातकर्तृभिः ॥ ८ ॥

अहमेकैवतिष्ठाम्याजौआजौत्वंस्थिरोभवेति ॥ ५ ॥ ततोनंतरंदेव्याशुम्भस्यचउभयोः युद्धंप्रववृतेप्रावर्तिष्ट ॥ कीदृशम् । सर्वेषांदेवानामसुराणांचपश्यतामालो
कयतामुभयेषांदारुणंभयंकरम् ॥ यदिशुम्भोजेष्यतितदादेवानांशुम्भंवोभयंस्यात् ॥ यदिच देवीजेष्यतितदासुराणांदेवीतो भयंस्यात् ॥ तस्मादुभयेषांदारुणम् ॥
यद्वा पश्यतामित्युक्तत्वाद्द्रष्टॄणांभयहेतुस्तद्युद्धमित्यर्थः ॥ उभयशब्दःसंख्यावाचित्वात्सर्वतोमत्वावाच्यलिंगतावगंतव्या ॥ ६ ॥ भूयःबहुतरमित्यर्थः ॥ भूपेतिपाठे
सुरथस्यसम्बोधनम् ॥ हेभूपसुदारुणैःबाणवृष्टिभिःतयोर्देव्याःशुम्भस्यचयुद्धमभूत्॥ततश्चउभयोःदेव्याःशुम्भस्यचयल्लिंगंतदिहस्यादितीहोभशब्दस्यस्त्रीपुँल्लिंगत्वम्॥तथात
द्वत्शितैःतेजितैःतीक्ष्णैःशस्त्रैःसुदारुणैःसुष्ठुभयंकरैःखड्गादिभिःहस्ताग्रग्राह्यैरायुधैःसर्वलोकभयंकरंयुद्धमभूत ॥ तथाशितैःसुदारुणैःघोरतरैःअस्त्रैश्चमंत्रवद्भिःसायकैःक्षेप्तव्यैः ॥
आयुधभेदादेर्युद्धभेदः ॥ आयुधसाम्याद्युद्धसाम्यम् ॥ तथास्त्रैश्चैवेतिपाठेसएवार्थः ॥ तुल्यजातीयैरायुधैःतौयुयुधातेइत्यर्थः॥७॥अथअंबिकादेवीदैत्येंद्रविषयेयानिशतंशतंश

तशः दिव्यानिदिविभवानिदिव्यानिसमंत्राणिसदैवतानिअस्त्राणि मुमुचे प्रयुक्तवती तानिदैत्येंद्रः शुम्भः तत्प्रतीघातकर्तृभिः तत्तदस्त्रविध्वंसिभिरस्त्रैःबभंज ॥ भंजोआ
मर्द्दने ॥ येगेनखंडयामास।आग्नेयास्त्राणिवारुणास्त्रैर्विघ्नितानिवारुणास्त्राणिवायव्यास्त्रैर्विघ्नितानिवायव्यास्त्राणिपवनाशनपन्नगास्त्रैर्विघ्नितानिपन्नगास्त्राणिगारुडास्त्रैः।इत्थमन्या
न्यपिप्रत्यस्त्राण्यस्त्रशास्त्रसिद्धान्यवगंतव्यानि ॥ द्युप्रागपागुदक्प्रतीचोयत् शैषिकः ॥ मुमुचे मुच्लृमोक्षणे ॥ तेषामंबिकाप्रयुक्तानांप्रतीघातःविघातः ॥ उपसर्गस्यघञ्यमनुष्ये
बहुलंदीर्घः ॥ तस्यकर्तृणिप्रत्यस्त्राणि तैः॥जनिकर्तुःप्रकृतिरितिलिंगात्समासः॥८॥ परमेश्वरीचण्डिकातेनमुक्तानिप्रेरितानिदिव्यानिदिविभवानिउग्रहुंकारोच्चारणादिभिर्लील
यैवाप्रयत्नेनैवबभंजभनक्तिस्म ॥ आदिशब्दादस्त्रैश्च ॥ उग्रःरौद्रः सएवहुमितिरोषेणोच्चारणंशब्दः तदादिभिरस्त्रैः परमाईश्वरीपरमेश्वरी ॥ ९ ॥ ततःदिव्यास्त्रभंजनानंत
रंसःअसुरःशुम्भःदेवींचण्डिकांशराणांशतैरसंख्यातैःशरसहस्त्रैश्चाच्छादंयत ॥ छदसंवरणेचुरादिःआङ्पूर्वः लङ् । णिचश्चेत्यात्मनेपदम् ॥ साचदेव्यपितत्कुपितातदि
तिहेतौपृथक्पदम् ॥ तस्माच्छरशतैराच्छादनाद्धेतोःकुपितासती इषुभिर्बाणैःधनुश्चापंशुम्भस्यशरासनंचिच्छेद ॥ इषुभिरितिबहुवचनं पुनःपुनर्धनुच्छेदंपुनःपुनर्द्धनुर्ग्रहणं

मुक्तानितेनचास्त्राणिदिव्यानिपरमेश्वरी ॥ बभंजलीलयैवोग्रहुंकारोच्चारणादिभिः ॥ ९ ॥ ततःशरशतैर्देवीमाच्छादयतसोऽसुरः ॥ साचतत्कुपिता देवीधनुश्चिच्छेदचेषुभिः ॥ १० ॥ छिन्नेधनुषिदैत्येंद्रस्तथाशक्तिमथाददे ॥ चिच्छेददेवीचक्रेणतामप्यस्यकरेस्थिताम् ॥ ११ ॥ ततःखड्गमुपादाय शतचन्द्रंचभानुमत् ॥ अभ्यधावततांहंतुंदैत्यानामधिपेश्वरः ॥ १२ ॥ तस्यापततएवाशुखड्गंचिच्छेदचंडिका ॥ धनुर्मुक्तैःशितैर्बाणैश्चर्मचार्ककरामलम् ॥ १३ ॥

चसूचयितुमाश्रितम् । अन्यथैकस्यधनुषश्छेदेकर्त्तव्येधनुश्छेदंचेषुणेत्येवब्रूयादनंतामोघशक्तित्वाद्देवीषोः ॥ १० ॥ अथदैत्येंद्रःशुम्भःधनुषिशरासनेदेव्याछिन्नेसतितथातेनप्रका
रेण शक्तिमायुधमाददेजग्राह ॥ अथदेवी अस्यशुम्भस्यकरेस्थितांप्रेषयितुंगृहीतांतांशक्तिमपिचक्रेणायुधेनाचिच्छेद ॥ करोत्थितामितिपाठे करादुत्थितामुदयंयां
तीम् ॥ अपिशब्दउक्तसमुच्चये ॥ प्राक्धनुः चिच्छेदतदनुशक्तिमपि । समाददेइत्यपिपाठेसएवार्थः ॥ ११ ॥ ततःशक्तिच्छेदनानंतरंदैत्यानामधिपाःधूम्रलोचनादयःतेषामी
श्वरःशुम्भःखड्गं चंद्रहासमुपादायभानुमत्किरणयुक्तंशतचंद्रंशतंलिखिताःचंद्राःयस्मिन्फलकेतत्फलकंचगृहीत्वा तांदेवींहंतुमभ्यधावत् ॥ १२ ॥ चंडिकादेवीतस्य
आपततएष्यत एवशुम्भस्यआशुतत्क्षणएवधनुर्मुक्तैःचापात्सकाशान्निर्गमितैःशितैःतीक्ष्णैःबाणैःअर्ककरामलमर्ककरैः संगतैर्गलितत्वात्प्रतिफलितार्ककिरणत्वादमलंखड्गंचि
च्छेद ॥ अथचबाणैरर्ककरामलंप्रतिफलितैरर्कस्यकरैःसहसंपर्कलाभादमलंफलकंचाचिच्छेद ॥ बाणैरितिबहुवचनात् खड्गंचूर्णयांचकरेतिमूच्यते ॥ १३ ॥

नकेवलंखड्गंचर्मचचिच्छेद॥अपितुअश्वांश्चच्छित्त्वाशरैःपातयामास॥सारथिनासहरथंचपातयामासव्यत्यस्तावयवंचकार॥ तदासदैत्यःघोरंभयङ्करंमुद्गरंघनंजग्राह॥कीदृशः।
हताश्वःनिहतरथवाहनःछिन्नधन्वा छिन्नंधनुर्यस्य बहुव्रीहौ धनुषश्चेत्यनङ्समासांतः ॥ विसारथिःसारथिरहितः ॥ अंबिकायानिधनेउद्यतःकृतोद्यमः ॥ १४ ॥ सादेवी
निशितैःतीक्ष्णैःशरैःआपततःप्रहर्तुमिच्छतःशुम्भस्यमुद्गरमायुधविशेषंचिच्छेद॥तथापिछिन्नमुद्गरोपिवेगवान्वेगधारीमुष्टिमुद्यम्यऊर्ध्वीकृत्यतांदेवीमभ्यधावत्। सत्वेंस्त्वरितायां
गतौधावादेशः ॥ १५॥ सदैत्यपुंगवःशुम्भःदेव्यावक्षसिमुष्टिंरत्निबद्धांगुलिसन्निवेशंपातयामास प्रयुक्तवान् ॥ अक्लीबेमुष्टिरत्नीद्वौ ॥ पुमान्गौःपुंगवः । गोरतद्धितलुकीतिटच्
समासांतः । दैत्यःपुंगवइवबलवान् ॥ स्युरुत्तरपदेव्याघ्रपुंगवर्षभकुंजराः ॥ सिंहशार्दूलनागाद्याःपुंसिश्रेष्ठार्थगोचराः ॥ उपमितंव्याघ्रादिभिःसामान्याप्रयोगेसमस्यते ॥ सातदा
देवीतलेनकरतलेनतंशुम्भमपिउरसिवक्षस्यताडयत॥ अत्रीतलमधोदेशेस्वरूपेपृष्ठतम्तलम्॥ वितस्तौचचपेटेचनतोज्यारक्षणेतलम् ॥ १६ ॥ सदैत्यानांराजाशुम्भः।राजाहः

अश्वांश्चपातयामासरथंसारथिनासह ॥ हताश्वः सतदादैत्यश्छिन्नधन्वाविसारथिः ॥ जग्राहमुद्गरंघोरमंबिकानिधनोद्यतः ॥ १४ ॥ चिच्छेदा
पततस्तस्यमुद्गरंनिशितैः शरैः ॥ तथापिसोभ्यधावत्तांमुष्टिमुद्यम्यवेगवान् ॥ १५ ॥ समुष्टिंपातयामासहृदयेदैत्यपुंगवः ॥ देव्यास्तंचापिसा
देवीतलेनोरस्यताडयत् ॥ १६ ॥ तलप्रहाराभिहतोनिपपातमहीतले.॥ सदैत्यराजः सहसापुनरेवतथोत्थितः ॥ १७ ॥ उत्पत्यचप्रगृह्योच्चैर्देवींगग
नमास्थितः॥तत्रापिसानिराधारायुयुधेतेनचंडिका ॥१८॥ नियुद्धंखेतदादैत्यश्चण्डिकाचपरस्परम्॥चक्रतुःप्रथमंसिद्धमुनिविस्मयकारकम् ॥१९॥

सखिभ्यष्टच् ॥ देवीकृततलप्रहारेणचपेटघातेनअभिहतःवक्षसिताडितःमहीतलेनिपपात ॥ अथसदैत्यराजः सहसावेगेनअतर्क्येणबलेनचपुनःतथैवनिपतनात्प्रागिवउत्थितः
उदस्थादुच्चैःस्थितिमाप ॥ १७ ॥ महीतलादुत्पत्यउड्डीयदेवींप्रगृह्यगृहीत्वाउच्चैर्गगनमाकाशमास्थितःआरूढः ॥ आङ्पूर्वात्तिष्ठतेःसकर्मकाद्गत्यर्थाकर्मकसूत्रेणकर्त्तरिक्तः ॥
आस्थितवान् । आङःस्थःप्रतिज्ञानमर्थः।गगनंस्थानत्वेनप्रतिज्ञातवान् ॥ तत्रापिगगनेपिसाचंडिकानिराधारानिरधिकरणासत्येवतेनसहयुयुधे ॥ यद्वा निर्निश्चयनिषेधयोः ॥
निश्चयश्चाबाध्याध्यवसायः । निराधाराअहमेवसर्वशक्तिसमन्विताशत्रुमुपसंहरिष्यामीतिनिश्चयज्ञानाधारा॥यद्वा चंडिकाशब्दब्रह्मरूपतयाआकाशस्थितयासाधारत्वादनिरा
धारा ॥१८॥तदागगनारोहणकालेप्रथमंखेआकाशेदैत्यःशुम्भःचंडिकाचदुर्गापरस्परंनियुद्धंबाहुयुद्धंनामप्रधनंचक्रतुःचक्राते॥कीदृशंनियुद्धम्॥सिद्धाश्चमुनयश्चसिद्धमुनयः ॥
ननुचद्वंद्वेघि पूर्वंस्यात् ॥ नैवत्॥प्राप्तस्यचबाधास्थेयेति॥यद्वा ॥ सिद्धैःसहितामुनयःतेषांविश्वावसुप्रभृतीनांमुनीनांनारदादीनांपश्यतांविस्मयस्याश्चर्यस्यकारकंजनकम्॥ इहके

चित्सिद्धमपनीययुद्धंपेतुः ॥ नियुद्धंनामयुद्धं प्रथमंचक्रतुरित्यर्थः ॥ केचित्तुप्रथममपनीयप्रधनंपेतुः ॥ कर्मव्यतिहारेसर्वनाम्नोद्वेभवतः [illegible] बहुलमितिसु[illegible] परस्य
क्रियायांपरःकरोतिपरस्यापिपरःपरस्परम् ॥ १९ ॥ अंबिकादेवीतेनशुम्भेनसहसुचिरंचिरतकालंनियुद्धंकृत्वाततोनंतरंतंशुम्भमुत्पाट्यउत्क्षिप्यचरणमुद्धृत्यभ्रामयामास ।
ततोभ्रामयित्वातंशुम्भंवलयाकारेणोर्ध्वतःभ्रामयित्वाधरणीतलेचिक्षेपपातयामास ॥ इहभ्रमेर्णावमंतत्वान्मित्वान्मितांह्रस्वइतिह्रस्वत्वम् ॥ भ्रमयामासेतिमध्यःपाठः ॥ यद्वा
वेत्यनुवर्त्यमितांह्रस्वः । साचव्यवस्थितविभाषा ॥ तेनक्वचित्प्रयोगेपुगणादौसंक्रामयतीतिवद्भ्रामयामासेत्यपिसाध्यएव॥ इहउत्पाद्यउत्पात्यउत्क्षिप्येतिपाठत्रयम् ॥ भ्रमुअनव
स्थानेणेरयादेशः ॥ क्षिपप्रेरणेलिट् ॥ २० ॥ देव्याक्षिप्तःसदुरात्माशुम्भःधरणींप्राप्यवेगितःसंजातवेगःसन् ॥ वेगतइतिपाठे वेगात् ॥ वेगवानितिवापाठः॥चण्डिकानि
धनेच्छयामुष्टिमुद्यम्यउत्क्षिप्यउद्यतंकृत्वाभ्यधावत देवीमित्यर्थउच्यते ॥ चण्डिकायाःसकाशात्प्राप्तव्यंयत्निधनंमरणंतत्रेच्छयायतःअभ्यागच्छत् ॥ अथात्ययेपलाय्यचेद्ग
च्छेदसौनम्रियेतैवेति ॥ दुष्टआत्मास्वभावो यस्यसः। आत्मायत्नोधृतिर्बुद्धिःस्वभावोब्रह्मवर्ष्मच ॥ २१ ॥ सर्वेषांदैत्यानांजनेश्वरंराजानंशुम्भंततोदेवीवक्षसिउरसिशूलेनभित्त्वा

ततोनियुद्धंसुचिरंकृत्वातेनांबिकासह ॥ उत्पात्यभ्रामयामासचिक्षेपधरणीतले ॥ २० ॥ सक्षिप्तोधरणींप्राप्यमुष्टिमुद्यम्यवेगितः ॥ अभ्य
धावतदुष्टात्माचण्डिकानिधनेच्छया ॥ २१ ॥ तमायांततोदेवीसर्वदैत्यजनेश्वरम् ॥ जगत्यांपातयामासभित्त्वाशूलेनवक्षसि ॥ २२ ॥ सगता
सुःपपातोर्व्यांदेवीशूलाग्रविक्षतः ॥ चालयन्सकलांपृथ्वींसाब्धिद्वीपांसपर्वताम् ॥ २३ ॥

विदार्यजगत्यांभूमौपातयामास । जगतीजगतीच्छन्दोविशेषेपिक्षितावपि ॥ २२ ॥ देव्याःशूलमायुधंतस्याग्रंतेनविक्षतःहतः ॥ क्षिणुक्षणुहिंसायांद्वावपिणांतौतनादी ॥
तेनक्षितःक्षतइतिपाठद्वयम् ॥ कर्मणिक्तः ॥ अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपोझलिक्ङिति ॥ सशुम्भो गतासुः निर्गतप्राणः सन् उर्व्यांभूमौप
पात ॥ किंकुर्वन् ॥ सकलांपृथ्वींचालयन् ॥ कथंभूतांपृथ्वीम् । अब्धयश्चद्वीपाश्चतैः सहवर्त्तमानाम्.॥ पुनः कीदृशीम् । सपर्वतांपर्वतैः सहवर्त्तमानाम् ॥ चालय
न्निति-चलकम्पनेणिचिकम्पनेचलिर्मित् ॥ वायुश्चलयतिवल्लीमीषत्कम्पयति ॥ अन्यत्रनमित्वायुश्चालयतिवनश्रेणींदेशांतरंप्रापयतीत्यर्थः ॥ अत्रतुस्थानांतरप्रा
पणंधात्वर्थः॥ तेनात्रमित्त्वाभावात्ह्रस्वत्वाभावः ॥ कश्चिदाह-चलनंचालःतंकरोतिणिच्लटःशतृप्रत्ययः।प्रयोजकव्यापाराभावाण्णिचोत्रासंभवादिति॥तन्न ॥मृतस्यापिउप
चारात्स्वाभाव्याद्वाप्रयोजकव्यापारसंभवात् ॥ मृतःपुत्रोमातरंरोदयतिधनमानंदयतीतिवन्मृताचेतनयोरप्यस्त्येवप्रयोजकव्यापारइतिप्रागुक्तएवमित्त्वभावाभावोपायआश्रयि

तव्यः॥२३॥देव्यातस्मिन्दुरात्मनिशुम्भेहतेसतिततोहेतुतः अखिलंविश्वंप्रसन्नमभवत् ॥तथाहि॥ जगल्लोकःस्वास्थ्यमनाकुलत्वमतीवअतितरामाप॥ नभःआकाशंचनिर्मलंनिष्पांसुअभवत्॥ विश्वमशेषंकृत्स्नंसमस्तनिखिलाखिलानिनिःशेषम्।विष्टपंभुवनंजगत् ॥२४॥ प्राक्शुंभमरणात्पूर्वंसोल्काःउल्कासहिताःयेउत्पातमेघाःदेवलोकशुभाय्यचागताःशांतिमगमन्निितिभावः ॥ उल्काज्वाला ॥ यदाहुः-लंकाशेफालिकाटीकाधातकीपचकाढकी ॥ सिध्रकामारिकाहिक्काप्राचिकोल्कापिपीलिका ॥ देव्याशुंभेनिपातितेसतितथाअनाकुलाः सरितः नद्यः मार्गवाहिन्यःमार्गादद्दूरगाआसन् ॥ पूर्वमाकुलत्वादुत्पथगामिन्यःअधुनातुतद्वैपरीत्यमितास्ताइतिभावः ॥ २५ ॥ देव्यातस्मिन्शुम्भेनिहतेसतिततोहेतुतः सर्वदेवगणाः इंद्रादयःहर्षनिर्भरमानसाःनिःशेषेणभरःपोषःपूर्णतायत्रतानिनिर्भराणिहर्षेणनिर्भराणिमानसानियेषांते बभूवुः ॥ अथचगंधर्वाःहाहाहूहूप्रभृतयःललितंमनोहरंयथास्यात्तथादेव्याः पराक्रमंजगुः गायंतिस्म ॥ २६ ॥ गीतमुक्तावाद्यंनृत्यंचाह ॥ देवगणविशेषाः अवादयन्तथान्यएवाप्सरोगणाः ननृतुःनृत्यंतिस्म ॥

ततःप्रसन्नमखिलंहतेतस्मिन्दुरात्मनि ॥ जगत्स्वास्थ्यमतीवापनिर्मलंचाभवन्नभः ॥ २४ ॥ उत्पातमेघाः सोल्कायेप्रागासंस्तेशमंययुः ॥ सरितो मार्गवाहिन्यस्तथाशुंभेनिपातिते ॥ २५ ॥ ततोदेवगणाः सर्वेहर्षनिर्भरमानसाः ॥ बभूवुर्निहतेतस्मिन्गंधर्वाललितंजगुः ॥ २६ ॥ अवादयंस्तथैवान्येननृतुश्चाप्सरोगणाः॥ववुःपुण्यास्तथावाताःसुप्रभोभूद्दिवाकरः ॥२७॥ जज्वलुश्चाग्नयः शांताः शांतदिग्जनितस्वनाः ॥२८॥ इति श्रीमा०देवीमाहात्म्येशुम्भवधोनाम सप्ताशीतितमोऽध्यायः ॥ ८७ ॥ ऋषिरुवाच ॥ देव्याहतेतत्रमहासुरेंद्रेसेंद्राःसुरावह्निपुरोगमास्ताम् ॥ कात्यायनीं तुष्टुवुरिष्टलाभाद्विकाशिवक्त्राब्जविकाशिताशाः ॥ १ ॥

वाताः पुण्याःशैत्यमांद्यसौरभ्ययुक्ताःववुःवांतिस्मपुण्याः रजःशून्याश्च ॥ तथादिवाकरः सूर्यः सुप्रभःसुतेजस्कः अभूत् ॥ २७ ॥ अग्नयःआहवनीयादयःशांताःनिर्मलाःसंतःजज्वलुःज्वलंतिस्म॥ ज्वलदीप्तौ ॥ लिट्उस्॥ शुंभेनिहतेयज्ञाः प्रवृत्ताइत्यर्थः॥दिग्जनितस्वनाउत्पातशब्दाः शांताःउपशांतिमगुः ॥ यद्वा दैत्यार्दितदेवादिहाहाकारस्वनाःशांताइत्यर्थः ॥ २८ ॥ इति श्रीमार्कंडेयमहापुरा०राजाधिराजतोमरान्वयश्रीशतंनुविरचितायांदेवीमाहात्म्यटीकायांशुम्भवधोनामसप्ताशीतितमोऽध्यायः ॥ ८७ ॥ देव्याचण्डिकयातत्रसंग्रामेमहासुरेंद्रेशुम्भेहतेसतिसेंद्राइन्द्रसहिताःवह्निपुरोगमाःअग्न्यादयःसुरादेवाइष्टलाभात्शुम्भनिहतलक्षणात्संतुष्टाःअतएवविकाशिवक्त्राः दीप्तवदनाःप्रसन्नमुखाः सुष्ठुविकाशिताआशादिशोयेषांतेतांशुम्भमर्दिनींकात्यायनींचंडिकांतुष्टुवुः ॥ ष्टुञ्स्तुतौ ॥ विकाशिवक्त्राब्जविकाशिताशाइतिपाठे-काशृदीप्तौ तालव्यांतः ॥

कशनंकाशःकाशोयेषांतानिकाशीनिविकाशीनिवक्राण्येवअब्जानिकमलानियासांताःविकाशिवक्राब्जाः काशःसंजातोयासांताः काशिताःविशेषेणकाशिताश्चताआशाश्चवि काशिताशाः ॥ काशितांसाइतिपाठेसुराइष्टलाभाद्विकाशिवक्राब्जाः विकाशितांसाश्चभवंति॥अंसोभुजशिरः॥ततःकर्मधारयःमहांतोऽसुराःतेषांमिंद्रेश्रेष्ठे ॥ कतोमहर्षिःतस्या पत्यंस्त्री गर्गादिपाठात्कात्यशब्दाद्गर्गादियञंतात्सर्वत्रलोहितादिकतंतेभ्यइतिष्फः षित्वात्ङीष् ॥ फस्यायनादेशःकात्यायनी ॥ १ ॥ देवाऊचुःदेवींस्तोतुंस्तवोपयोगीनिवा क्यानिउक्तवंतः ॥ प्रपन्नाअनन्यशरणाः शरणार्थिनः भक्तिनम्राःतेषामार्त्तिंपीडांहरतीतिप्रपन्नार्त्तिहरा ॥ हरतेरनुद्यमनेचूश्रियांटाप् ॥ हेप्रपन्नार्तिहरेदेवित्वंप्रसीदप्रसन्नाभव ॥ पाघ्रादिनासदेः सीदभावः ॥ हे अखिलस्यजगतः मातः जननि त्वंप्रसीद॥हेविश्वस्यईश्वरिव्यापिकेत्वंप्रसीद॥हेदेवित्वंविश्वंपाहिलक्ष्मीरूपेणसर्वजगद्रक्ष ॥हेदेवित्वंचरा चरस्यजगतः ईश्वरीविष्णुमायात्मतयाव्यापिकासि ॥ चराश्चाचराश्चचराचरम् ॥ सर्वोद्वंद्वोविभाषयैकवद्भवति ॥ अन्यथाचरगतौपचाद्यच् ॥ चारिचलिपतिवदीनांवाद्वित्व मच्याक्चाभ्यासस्येत्यनेनचराचरंजंगमात्मकमेवस्यान्नाजंगममपि ॥ यदाहुः-चरिष्णुजंगमचरंत्रसमिंगंचराचरम् ॥ २ ॥ हेदेवित्वंयतः हेतोः पृथिवीस्वरूपेणस्थिता

॥देवाऊचुः ॥ ॥ देविप्रपन्नार्तिहरेप्रसीदप्रसीदमातर्जगतोखिलस्य॥ प्रसीदविश्वेश्वरिपाहिविश्वंत्वमीश्वरीदेविचराचरस्य ॥२ ॥ आधारभूताजगत स्त्वमेकामहीस्वरूपेणयतः स्थितासि ॥ अपांस्वरूपस्थितयात्वयैतदाप्याय्यतेकृत्स्नमलंघ्यवीर्ये ॥ ३ ॥ त्वंवैष्णवीशक्तिरनंतवीर्याविश्वस्यबीजं परमासिमाया ॥ संमोहितंदेविसमस्तमेतत्त्वंवैप्रसन्नाभुविमुक्तिहेतुः ॥ ४ ॥

सि ॥ अतः जगतः विश्वस्याधारभूतात्वम् एकैवनान्या ॥ हेअलंघ्यवीर्येलंघितुमशक्यबले ॥ अपांस्वरूपस्थितयात्वयैवैकयाएतत्कृत्स्नंजगदाप्याय्यतेसर्वमाप्याय्यते ॥ प्यायीवृद्धौणिचूकर्मणिलट् ॥ अपांजलानांस्वरूपेणस्थितयात्वया ॥ ३ ॥ हेदेवित्वम् अनंतवीर्याअक्षयबला ॥ वैष्णवीविष्णुसंबंधिनीशक्तिरसियया शक्त्याविष्णुर्भगवा नशेषलोकान्पालयतिसाविष्णुसामर्थ्यलक्षणात्वमेवेतिभावः ॥ विश्वस्यबीजंकारणंयल्लोकवेदप्रसिद्धंमायापरमाव्यापिनीमहामायात्वमेवासि ॥ परमाउत्कृष्टादुस्तराशक्तिर्नत्वद न्यासेतिभावः ॥ हेदेवित्वयामाययैतत्समस्तंविश्वंसंजातमोहंकृतंमोहितंममतायत्नंकृतम् ॥ देवित्वंवैप्रसिद्धाज्ञानवैराग्यरूपाउपनिषत्परमात्मतत्त्वावगमस्वभावाप्रसन्नासती भवनंभूःपुनःपुनरुद्भवः।भुविरुत्पत्तिर्भूतप्रादुर्भावइतियावत्॥भूसत्तायांस्त्रियामिकृकृष्यादिभ्यइतिइक्प्रत्ययः॥उवङादेशः॥भुवेरुत्पत्तितोमोचनंमुक्तिःमुक्तेःहेतुःकारणमसीत्यर्थः । भुविभूमौत्युकेर्थपुष्पभावस्तिष्ठतु।ब्रह्मलोकादौमुक्तिहेतुत्वानस्यादित्यव्याप्तिपरिजिहीर्षार्थांपलक्षणताश्रयेणजनितप्रतिपत्तिगौरवदौर्गुण्यात्भुविमुक्तिहेतुरित्येकंपदम् ॥ ४ ॥

हेदेविसमस्ताः श्रुत्यादयोविद्याः तवैवभेदास्त्वत्प्रकाराएवत्वदंशाएव ॥ तस्मात्तवविद्यानांपरस्परंपार्थक्याभावात्कोस्तुतिः प्रवर्ततामू नकापि ॥ कीदृशीस्तुतिः ॥
स्तवमर्हतिस्तव्यम् ॥ दंडादिभ्योयः ॥ अन्यथाअचोयतंबाधित्वाएतिस्त्विविसूत्रेणक्यपिसतिस्तुत्यमित्येवस्यात् ॥ स्तव्येस्तोत्रार्हेवस्तुनिविषयेपराचापराचेतिपृथग्भूतोक्ति
र्यस्यांसास्तव्यपरापरोक्तिः ॥ स्तुतिस्तुत्ययोः पृथक्त्वेखलुस्तुतिः प्रवर्तते एकत्वेकातेस्तुतिरस्त्वितिभावः ॥ त हित्वंब्राह्मीत्वंलक्ष्मीरित्याद्यास्तुतिरपिदेव्याएकत्वेननघटतइ
त्याह ॥ समस्ताःसकलाःकलासहिताःचतुष्षष्टिकलोपेताःपातिव्रत्यादिधर्मोपेताःसृष्ट्यादिप्रतिनियतनैपुण्योपेताश्चब्रह्माण्याद्याःस्त्रियश्चतवैवांशाइतिकातेस्तुतिरेकस्वरूपत्वात् ॥
हेदेवित्वयाएकयैवांबयामात्राएतज्जगत्पूरितंपूर्णम्आप्यायितम् ॥ त्वमेवजगत्जगदेवत्वमितिकातेस्तुतिर्नकापि ॥ अन्यदीयगुणानामन्यत्रारोपणवर्णनंस्तुतिः॥अत्रतुसैवविद्ये
तिमैवब्राह्म्यादिस्त्रीतिभेदाभावात्स्तव्यपरापरोक्तिःपरमोक्तिरित्यर्थः ॥ देवीन्यूनानभवतीतिस्वभावतःश्रेष्ठोक्तिरित्येवतस्यामितिकातेस्तुतिरित्युक्तम् ॥ न्यूनमाधिकीकृत्योक्तिः
स्तुतिरित्यपिलक्षणम् ॥ न्यूनाभवतियतस्ततोधिका नैवेत्युक्तंकातेस्तुतिरिति ॥५॥पुनरपिदेव्याःस्तुतिर्नघटतइत्याह ॥ परमोक्तिःस्तुतिरितिस्तुतिलक्षणम् ॥ तत्रदेवीसर्वभू

विद्याःसमस्तास्तवदेविभेदाःस्त्रियः समस्ताः सकलं जगच्च ॥ त्वयैकयापूरितमंबयैतत्कातेस्तुतिःस्तव्यपरापरोक्तिः॥५॥सर्वभूतायदादेवीभुक्तिमु
क्तिप्रदायिनी ॥ त्वंस्तुतास्तुतयेकावाभवंतिपरमोक्तयः ॥ ६॥ सर्वस्यबुद्धिरूपेणजनस्यहृदिसंस्थिते॥स्वर्गापवर्गदेदेविनारायणिनमोस्तुते ॥७॥

ताइतीदंस्तुतिपदम् ॥ एवंचसतिब्रूमः हेदेविभुक्तिमुक्तिप्रदायिनीत्वंयदासर्वभूतासिसर्वात्मासिविश्वरूपासीतिस्तुताभूः तदास्तुतयेस्तुत्यै स्तुत्यर्थाः कावानामपरमाः श्रेष्ठा
उक्तयःवर्णनास्तुतयोभवंतिनकापि।परमाश्रेष्ठाउक्तिःवर्णनेस्तुतिरितिलक्षणम्। ततश्चयत्किंचित्पदार्थरूपंभावाभावात्मकंसंभवेत्तन्नामसर्वमित्युच्यते ॥ सर्वभूतादेवीतियदास्तुता
तदासर्वस्यचदेव्याश्चैक्यात्किंस्तुत्यंकावास्तुतिःस्यादितिभवत्यर्थादाह ॥ कावाभवंतिपरमोक्तयइति ॥ काः परमोक्तयःयाभिस्तूयतेदेवी नकापि ॥ युक्तेस्यादावृतेभूतंप्रा
ण्यतीतेसमेत्रिषु ॥ सर्वभूतासर्वेणविश्वेनसमेत्यर्थः ॥ कीदृशीदेवी ॥ अयदाशुभावहविधिदा ॥ भुज्यतेभोगःस्वर्गादिःमुक्तिर्मोक्षःतौप्रददातिभुक्तिमुक्तिप्रदा ॥ यद्वा भुक्ते
र्मुक्तिर्वैराग्यंतांप्रददाति । प्रेदाज्ञःकः । अयतेगच्छतिव्याप्नोतीत्ययनी ॥ कृत्यल्युटोबहुलमितिकर्त्तरिल्युट् ॥ यद्वा दयदानेभुक्तिमुक्तीप्रदयतेभुक्तिमुक्तिप्रदायिनी॥णिनिः ॥
यद्वा प्रापूरणेभुक्तिमुक्तीप्रातिपूरयतिभुक्तिमुक्तिप्राः ॥ आतोनुपसर्गेकः ॥ दायिष्यतेरक्षिष्यतिदायिनी । भविष्यदाधमर्ण्ययोर्णिनिः ॥ भुक्तिमुक्तिप्राचासौदायिनीरक्षि
त्रीचेतिकर्मधारयःपुंवद्भावः ॥ भुक्तिमुक्तिप्रदायिनी ॥ ६ ॥ हेदेविसर्वस्यजनस्यजंतोःहृदिचेतसि बुद्धिरूपेणसंस्थिते हेस्वर्गापवर्गदेदेविनारायणिनमोस्तुते ॥ हेदेविसं

स्थितेसम्यगवस्थिते ॥ संस्थाधारेस्थितौमृतौ ॥ स्वर्गंचापवर्गंचददातिस्वर्गापवर्गदा ॥आतोनुपसर्गेकः॥नरःकश्चिदृषिःनरस्यापत्यंनारायणः॥ नडादिभ्यःफक्फस्यायनः ॥ नारायणस्यस्त्रीमायोपचारात् ॥ नारायणीविष्णुमायेत्यर्थः ॥ यद्वा आपोनाराइतिप्रोक्ताः ॥ नारमम्भयमयनमस्यनारायणः ॥ संज्ञायांणत्वम् ॥ यद्वा नराणांस मूहोनारमयनमस्यनारायणःतस्यस्त्रीनारायणीलक्ष्मीः ॥ हेनारायणि कात्यायनींतुष्टुवुरितिकात्यायनीस्तुतौप्रकृतायांनारायणीनमस्कृतिःस्त्रियःसमस्तास्तदंशाएवेतिप्रागुक्तेः कार्यभेदमात्रत्वेपिवस्तुतस्तयोरैक्यादविरुद्धा॥ ७ ॥ अष्टादशनिमेषास्तुकाष्ठात्रिंशत्तुताःकलाइत्यभिधानात् काष्ठाकलातोन्यूनेतिकाष्ठाकलादिरूपेणेतिपाठःसभ्यः॥विश्वस्य खलुकाष्ठाकलान्यूनेतिकाष्ठाकला॥क्षणमुहूर्ताहोरात्रपक्षमासर्त्वयनसंवत्सरादिकालरूपेणपरिणामप्रदायिनी॥ बाल्यादिदिवसोवस्थाविशेषेणवातथाविश्वस्योपरतावबसानेविषये याशक्तिःतत्संबुद्धौहेशक्तेरुद्ररूपत्वात्हेसमर्थे॥नारायणीति-अयगतौ-इण्गतौ-इगतौ-अय्यतेइयतेवाअयनःपरमात्माकर्मणिल्युट्पुंलिंगतानुप्रयोगतः। लिंगमशिष्यंलोकाश्रयत्वा ल्लिंगस्येतिवचनात्॥नाराणामयनःनारायणः॥पूर्वपदात्संज्ञायामगःइतिणत्वम्॥नारायणस्यपरमात्मनइयंमायानारायणी॥ अन्यथानारायणस्येयंनारायणीयेतिवृद्धाच्छःस्यात

कलाकाष्ठादिरूपेणपरिणामप्रदायिनि ॥ विश्वस्योपरतौशक्तेनारायणिनमोस्तुते ॥ ८ ॥ सर्वमंगलमंगल्येशिवेसर्वार्थसाधिके ॥ शरण्येत्र्यंबके गौरिनारायणिनमोस्तुते ॥ ९ ॥

तस्मात्संबंधेऽणेवं॥परिणामःप्राणिकायावयवोपचयलक्षणावृद्धिः तांप्रददातिपरिणामप्रदायिनि ॥ सुप्यजातौणिनिः॥आतोयुक्चिण्कृतोः। ज्ञापकसिद्धमनित्यमितिक्वचित्सो पसर्गादपिणिनिः॥दुग्धंदधिरूपेणपरिणमतइत्यादौतुपरिणामोरूपांतरावाप्तिर्दुग्धादिस्वरूपाद्विवर्त्तः। परिमाणप्रदायिनीतिपाठे—परितोमानमियत्तापरिच्छेदः॥प्राणिकायादेःका लकृताशरीरावस्थायौवनादिर्वयः।तस्यपरिच्छेदःपरिमाणम्एतावत्कालपरिमितमिदंबाल्यमिदंयौवनमित्यादितत्प्रददातिहेपरिमाणप्रदायिनि॥८॥ सर्वाणिमंगलानियतःस्युःस सर्वमंगलामंगलेभ्योहितामंगल्या॥उगवादिभ्योयत्॥सर्वमंगलाचासौमंगल्याच॥सर्वमंगलमंगल्येति ॥वृद्धिपाठपक्षेतु-मगिगतौ।मंग्यंतेमंगलानि । मंगलेभ्योहितामंगल्यामंगल्यै वमांगल्या ॥ अन्येषामपिदृश्यतइतिदीर्घःपूरुषवत् ॥ कश्चित्त्वाह—गुणवचनब्राह्मणादिभ्यः कर्मणिचेतिकर्मणिष्यञिति ॥ तत्र तस्यार्थसंगत्यभावस्तावदास्ताम् । स्त्रियांटापंबाधित्वाषित्वात्ङीषिमांगलीत्येवस्यान्नतुमांगल्येतिरूपासिद्धिरितितदुपेक्षणीयंप्रेक्षावद्भिः ॥ शिवाभवानीरुद्राणी ॥ हेशिवे ॥ यद्वा शिवामंगलोपेतेतिरमापि शिवाभवति ॥ हेशिवेहेरमेसर्वेषामर्थानांसाधयित्रीउमारमाच ॥ हेसर्वार्थसाधिके ॥ अर्थोभिधेयरैवस्तुप्रयोजननिवृत्तिषु ॥ शरणंगृहरक्षित्रोः ॥ शरणेषुसाधुः शरण्या

तत्रसाधुरितियत् ॥ हेशरण्ये ॥ सोमसूर्याग्निरूपाणि त्रीण्यंबकानिनेत्राण्यस्याः त्र्यंबका ॥ यद्वा त्रयोंबकाः उमारमाच ।। हेत्र्यंबके ॥ त्रयाणांलोकानामंबकः पितेत्या गमः ॥ गौरीउमा॥यद्वा—गुङ्अव्यक्तेशब्दे॥गूयतेअव्यक्तंगुप्तंशब्दायतेमनसागृह्यतेधार्यतेगौरीउमारमांच॥ऋज्रेंद्राग्रवज्रादिसूत्रेण ( उ—२—३० ) रनिप्रत्ययेगुङोवृद्धिर्निपा त्यते ॥ गौरोरुणेसितेपीते ॥ गौरादित्वान्ङीष् ।। अयःशुभावहोविधिर्यत्रपरमात्मनिसःअयनः । पामादित्वान्मत्वर्थीयोनः॥ नृनये नयोनीतिः ॥ भावेऋदोरप्॥नरणंनरः नरेणनयेनअयनः नारायणः परमात्मा तस्येयंमायानारायणी ॥ हेनारायणिनमस्तेस्तु । नमःस्वस्तीतिचतुर्थी ॥ ९ ॥ जगतांसृष्टेःसर्गस्यस्थितेर्वर्त्तनस्यनाशनस्यप्रल यस्य । हेशक्तिभूते शक्तिरित्येवंभूताजाता ॥ हेशक्तिरूपे ॥ यद्वा ब्राह्मीशक्तिः सृष्टौ ॥ वैष्णवीशक्तिः स्थितौ ॥ रौद्रीशक्तिर्विनाशे ॥ तद्भूता त्रिशक्तिभूतायाशक्तिः तत्सामान्येनशक्तिभूता हेशक्तिभूते ॥ यद्वा शक्तीनांभुवापरमात्मनाउतासंगता ॥ वेञ्तंतुसंताने ॥ यद्वा शक्तीनांभूतिःअवताररूपा शक्तिभूतिः हेशक्तिभूते ॥ ॥ यद्वा शक्तीनांभुवः भूमयः ब्रह्मादयःतेषामूतिःसंघटना ॥ तंतुनेवगुंफनंसंतननंशक्तिभूतिः ॥ वेञः स्त्रियांक्तिन् ॥ हेसनातनि ॥ सायंचिरमित्यादिसूत्रेणल्युस्तुट्च

सृष्टिस्थितिविनाशानांशक्तिभूतेसनातनि ॥ गुणाश्रयेगुणमयेनारायणिनमोस्तुते ॥ १० ॥ शरणागतदीनार्त्तपरित्राणपरायणे ॥ सर्वस्यार्तिहरेदेविनारायणिनमोस्तुते ॥ ११ ॥

स्त्रियांटित्वान्ङीप् ॥ हेशाश्वति ॥ हेगुणाश्रये ॥ गुणाःसत्त्वादयःआश्रयोयस्याः सा ॥ यद्वा गुणानामाश्रयोयत्रसागुणाश्रया ॥ यद्वा सत्त्वादिगुणयुक्तागुणाः यथायोगंब्रह्मादयः तेआश्रयायस्याः सा ॥ हेगुणमये ॥मयगतौ॥मयतेगच्छतिलोकान्मया ॥ पचाद्यचिस्त्रियांटाप् ॥ गुणैर्मयागुणमया ॥ गुणैर्गतिमतीत्यर्थः ॥ यद्वा हेऽगुणमये ॥ अगुणंब्रह्ममयते ॥अगुणेनब्रह्मणामयागमनपराअगुणमया ॥ ब्रह्मतत्त्वेनमयप्राप्तेत्यर्थः ॥ गुणमयीतिपाठे—गुणानांविकारःगुणमयी ॥ यद्वाऽगुणमयी ॥ मयड्वैतयोर्भाषायामित्यादिनामयट् ॥ ङीप् ॥ यद्वा ॥ गुणेभ्योहेतुभ्यआगतागुणमयी ॥ हेतुमनुष्येभ्यइत्यधिकृत्यमयड्वेति ॥ यद्वा गुणाःप्राकृताउच्यंतेस्यांगुणमयी ॥ तत्प्रकृतवचनेमयट् ॥ अय्यतेईयतेगम्यतेअयनामुक्तिः ॥ऋशब्दःअदितिवाची ॥ उरपत्यानिआराः देवाः ॥ नशब्दोनञ्समानार्थोननुबंधकः॥ नसंत्ययाप्यारादेवाःसा धकत्वेनयत्रसानारा नाराचासौअयनीचेतिनारायणीमुक्तिर्देवैरयापिदुष्प्राप्येत्यर्थः ॥ तत्संबुद्धौ हेनारायणि ॥ १० ॥ शरणंरक्षितारम्।आगताःरक्षरक्षेतिप्रपन्नाःशरणाग ताःतएवदीनाआर्त्ताश्चदुःखितालोकास्तेषामापद्भ्योदुःखेभ्य.परित्राणंतदेवपरंमुख्यमुद्देश्यमयनंवर्त्मयस्याःसातत्संबुद्धिः ॥ सर्वलोकस्यार्त्तिहरे ॥ हरतेरनुद्यमनेच्॥हेदुःखना

शनि ॥ हेदेविभगवति न आरायणिनमः अः म्तुतेइतिच्छेदः ॥ पूर्वमग्रेअः ॥ एङःपदांतादतीत्यकारलोपः ॥ प्रथमैकवचनस्यरोःरेफस्यश्रवणमेवतथाचसातिमोः इतिभवति ॥ अग्रेचस्तुते ॥ ऋइतिदेवमाता ॥ मःशिवः । अःविष्णुः । द्वौप्रतिषेधौप्रकृतमप्रतिषिद्धमर्थंगमयतः ॥ उर्देवमातुरपत्यानिआराःऋभवःदेवाः ॥ अय्यतेईयतेवा अयनी आराणांअयनीआरायणी ध्यातव्यादेवता आरायणी ॥ पूर्वपदात्संज्ञायामगइतिणत्वं हेआरायणि त्वां मःशिवः अश्चविष्णुःननस्तुतेअपितुस्तुतेनौत्येव ॥ ष्टुञ्स्तुतौलडात्मनेपदम् ॥ ११ ॥ हंसैर्युक्तंविमानंतत्रतिष्ठतिहेहंसयुक्तविमानस्थे ॥ यद्वा हंसैः यतिविशेषैः सूर्यैःरूपैश्वयुक्तमाश्रितंविमानंविगताहंकारंपरब्रह्मतत्रतिष्ठति ॥ हंसःश्वेतगरुत्सूर्ययतिप्राणात्मसुस्मृतः ॥ हेब्रह्माणीरूपधारिणि । कुशोदभस्तस्येदंकौशं कौशंचतदम्भश्चकौशांभः ॥ क्षरसंचलने ॥ क्षरणंक्षरः ॥ घञिसंज्ञापूर्वको विधिरनित्यइत्यतउपधावृद्ध्यभावः घञर्थेकविधानंवा ॥ कौशांभसःक्षरःसेचनंतंकरोतीति णिचिण्वुल् ॥वोरकः । स्त्रियांटाप् । प्रत्ययस्थात्कात्पूर्वस्यातइदाप्यसुपइतीत्त्वम् ॥ हेकौशांभःक्षरिके ॥ शत्रुषु कुशोदकक्षेपणं कुर्वित्यर्थः यदुक्तं कुमंडलुजलाक्षेपइत्यादि ॥ यद्वा क्षरंकरोतिक्षरयतिक्षारिका आसेक्त्री कौशांभसःक्षारिका ॥ अजंतस्येति भावः ॥ क्षरतेस्तु ण्वुलि क्षारिका ॥ यद्वा कौशांभःक्षरी ॥. कर्मण्यण् ॥ ङीप् ॥ स्वार्थे कः ॥ केण इति ह्रस्वः ॥ यद्वा कुशसंबं

हंसयुक्तविमानस्थेब्रह्माणीरूपधारिणि ॥ कौशांभःक्षरिकेदेविनारायणिनमोस्तुते ॥ १२ ॥ त्रिशूलचन्द्राहिधरेमहावृषभवाहिनि ॥ माहेश्वरीस्वरूपेणनारायणिनमोस्तुते ॥ १३ ॥

ध्यंभसःक्षरःआयुधत्वेनयस्याःसाकौशांभःक्षरका ॥ शेषाद्विभाषाकप् अत्रपक्षेआप्सुपःपरइत्वंनभवति ॥ न अ आ ऋआ अयनि न मा उः स्तुत इतिच्छेदः ॥ नापुरुषः ॥ अकारोवासुदेवः स्यादाकारस्तुपितामहः ॥ ऋइतिदेवमाता ॥ ऋभुशब्दप्रयोगदर्शनात् ॥ आइतिआङुपसर्गः ॥ आयनीतिसंबुद्ध्यंतम् ॥ न मा इतिद्वौ प्रतिषेधौ ॥ उकारस्तुमहेश्वरः ॥ स्तुतेइतिष्टुञ्स्तुतावात्मनेपदम् ॥ अयगतौ ॥ कृत्यल्युटोबहुलमितिकर्मणिल्युट् ॥ आसमंतादय्यतेईयतेवाआयनीउपासनी इष्टदेवता ॥ उःदेवमातुः आयनी ॥ इकोयणचि ॥ रायनी ॥ पूर्वपदात्संज्ञायामगइतिणत्वं हेरायणि ॥ हेदेवमातुरदितेरभीष्टदेवते त्वम् ॥ आश्चब्रह्माअःविष्णुःउःरुद्रःइतित्रिमूर्तिलक्षणः नापुरुषः ॥ मा ना स्तुते न स्तुते इति मा अपितुस्तौत्येव ॥ १२ ॥ धृञ्धारणेभ्वादिः ॥ धरतीतिधरापचाद्यच् ॥ त्रिशूलचंद्राहीनांधरा ॥अन्यथाकर्मण्यण्यात्स्यात्॥ त्रिशूलादिधरतीतिविग्रहश्रवणात्॥ त्रिशूलमायुधं चंद्रोत्रैककलात्मकः । किरीटभूषणौचित्यात् ॥ अहयःफणिनः ॥ द्वंद्वेघि॥बहुष्वनियमः॥ हेत्रिशूलचंद्राहिधरे ॥ महान्वृषभः तेनवाहिनीवाहनवती ॥ ऋन्नेभ्योङीप् ॥ यद्वा महावृषभेणवाहयतीस्वंमहावृषभवाहिनी ॥ बहुव्रीहौमहावृषभवाहनेतिस्यात् ॥ हेमहावृषभवाहिनि ॥ महेश्वरस्येयंस

क्रिर्माहेश्वरी ॥ तस्याःस्वरूपमाकारस्तेनध्येयतयासंभाविते ॥ अनधातुःप्राणनार्थः । अननमअनिः इक्कृष्यादिभ्यः स्त्रियाम् ।। कृदिकारादक्तिनइतिङीष् ॥ अनीःइः कामः एःकामस्यतद्दैवतबीजस्यवाअनीप्राणरूपा यनी ॥ अंविष्णुंरातिरक्षकत्वेनगृह्णातिअरा त्रिलोकी । अराया यनी अरायणी हेअरायणि । त्वामूउःशिवःनापुरुषः न मा स्तुते अपितुस्तौति ॥ १३ ॥ हेअनघेकौमारीरूपसंस्थाने ॥ अतएवहेमहाशक्तिधरे ॥ अतएवमयूरकुक्कुटवृतेनमोस्तुते ॥ नारायणस्यभगवतोविश्वरूपस्येयमाकृतिः नारायणीमूर्तिः ॥ छांदसत्वाद्वृद्धाच्छमनाश्रित्यसामान्यतोऽणेव ॥ यद्वा-नराणामयनंनरायणंधर्मार्थकाममोक्षलक्षणंतस्येयंसा । द्विधा-तत्रजातातत्साधयितुंच ॥ शैषिको ण् नारायणी ॥ नविद्यतेअघंयतः हेअनघे ॥ यद्वा-नविद्यतेअः विष्णुः पूज्योयेषांतेअनादैत्याः तान्हंतीत्यनघा ॥ सप्तम्यांजनेर्डः ।। अन्येष्वपिदृश्यते इत्यत्रापिश ब्दःसर्वोपाधिव्यभिचारार्थस्तेनधात्वंतरादपिकारकांतरेपिडोभवति ।। डित्यभस्यापिटेर्लोपः ॥ पृषोदरादित्वात् हस्यघः ॥ संस्थितिः सम्यगवस्थानंसन्निवेशः संस्थान म् । कुमारस्य शक्तिधरस्येयं शक्तिर्देवताकौमारी । कौमार्याः सकाशाद्रूपसंस्थानं यस्याः सा ।। यद्वा-कौमारीषण्मुखीरूपसंस्थानशरीरावयवसन्निवेशविशेषो यस्याः सा तत्संबुद्धौ ।। महतीशक्तिरायुधंमहाशक्तिः तस्याःधरामहाशक्तिधरा अन्यथातुविग्रहेकर्मण्यण्स्यात् ।। यद्वा—महाशक्तिरतिसामर्थ्यम् ।। मीञ्हिंसायांक्र्यादिः

मयूरकुक्कुटवृतेमहाशक्तिधरेनघे ॥ कौमारीरूपसंस्थानेनारायणिनमोस्तुते ॥ १४ ॥

मीनात्यहीन्मयूरः । मीनातेरूरन् । कुक्कुटश्चरणायुधः । कुगुचारणेनकुटतिकुक्कुटः ।। कुट्कौटिल्ये ।। पचाद्यच् ॥ मयूरावाहनीभूताःक्रीडार्थाश्च ।। कुक्कुटाश्चयुद्धचा तुर्यदिदृक्षौचित्योपार्जितास्तैर्वृतावेष्टिता । यतइयंकौमारीतेनबाल्योचिताकुक्कुटक्रीडोक्ता ॥ यद्वा—मयूरैः कुक्कुटैश्चवृतिरावरणंयस्याः सा ।। यद्वा—क्रौंचवाराहचक्रादि व्यूहवत्मयूरकुक्कुटव्यूहौचसंग्रामोचितसैन्यसंनिवेशौज्ञेयौ ॥ यदाहुः—व्यूहस्तुबलविन्यासोभेदादंडादयोयुधि ।। दंडोभंगलभागौचाप्युत्सन्नश्चाबलोदढः ।। व्यूहस्तेषांविशे षाःस्युश्चक्रव्यूहादयोपिचेति ॥ ततश्च मयूरव्यूहकुक्कुटव्यूहाभ्यांवृता ।। यद्वा—वाहनीभूतत्वान्मयूरैः कौमारीवृता ।। अथचेयंकक्कुटाख्यालंकारोपेतत्वात्कक्कुटवृता ।। यदाहुः कुक्कुटस्ताम्रचूडेचभूषायामपिदृश्यते ।। यद्वा—मयूराः कुक्कुटाइवचित्रपुच्छवर्जितामयूरकुक्कुटास्तैर्वृते ।। यदभ्यधुः—आरक्तनेत्रपिच्छाग्रोमयूरः कुक्कुटः स्मृतः ॥ बर्हेणवर्जितोबर्ही यः समयूरकुक्कुटइतियादवप्रकाशः ।। कुमारोमयूरमारोहतिकौमारीतुमयूरीम् ।। यद्वा—मालक्ष्मीः आः पितामहः इःकामः उःशिवः उक्षा तारक्षकोविष्णुः रोऽग्निः तैर्वृतामयूरवृता ॥ अथचसाकुक्कुटवृता ।। कुकवृकआदाने ।। भ्वादिरात्मनेपदी ।। ततःकर्त्तरिक्विप् ।। कोकंतेकौमार्याः आज्ञामाददतेदैत्यैःसह

संग्रामयितुंकुंकि देवसैन्यानि तान्येवकुटुंबिदैत्यैः सहविरुद्धबुद्धीनिकुटानिचकुक्कुटानिदेवसैन्यानिचतैर्वृता ॥ १४ ॥ हेवैष्णवीरूपेहेशंखादिगृहीतपरमायुधे ॥ हेदेवि प्रसीद ॥
हेनारायणिनमस्तेस्तु ॥ शंखश्चचक्रंचगदाचशार्ङ्गंचसेनांगत्वादेकवद्भावः ॥ तानिगृहीतानि परमाण्यायुधानियया सा ॥ विष्णोरियंशक्तिर्वैष्णवीतस्याइवरूपंयस्याः तत्संबुद्धिः
॥ १५ ॥ गृहीतमुग्रंरौद्रंचमहच्चक्रंययातत्संबुद्धिः ॥ दंष्ट्रयाउद्धृतावसुंधराभूमिर्ययातत्संबुद्धिः ॥ वराहस्यभगवतोविष्णोःरूपंतद्वतीवराहरूपिणी ॥ वराहसदृशरूपमात्मानं
दर्शयंतीत्यर्थः ॥ यद्वा सत्यापपाशसूत्रेण रूपादर्शनेणिच् । वराहमेवात्मनोरूपंपश्यतिवराहरूपिणीतत्संबुद्धिः ॥ हेशिवेसर्वमंगलेनारायणि ॥ दशंतिययादंष्ट्रा ॥ दाम्नीशसेत्या
दिनादशतेःकरणेष्ट्रन् ॥ षिद्गौरादिभ्यश्च ङीष् अनित्यः ॥ ततःस्त्रियांटाप् ॥ १६ ॥ उग्रेणनृसिंहरूपेणदैत्यान्हंतुंहेकृतोद्यमे ॥ त्रैलोक्यस्यत्राणेनरक्षणेनमहितेपूजिते ॥ त्रैलोक्यत्रा
णसहितेइतिवापाठः ॥ अयगतौ ॥ अय्यतेइत्ययनंचतुर्भद्रंनराणामयनंप्राप्तव्यंनरायणंतस्यप्रापयित्रीनारायणी ॥ चतुर्णांभद्राणांसमाहारश्चतुर्भद्रम् ॥ आहुश्चत्वारिभद्राणिबलं

शंखचक्रगदाशार्ङ्गगृहीतपरमायुधे ॥ प्रसीदवैष्णवीरूपेनारायणिनमोस्तुते ॥१५॥ गृहीतोग्रमहाचक्रेदंष्ट्रोद्धृतवसुंधरे ॥ वराहरूपिणिशिवेनाराय
णिनमोस्तुते ॥१६॥ नृसिंहरूपेणोग्रेणहंतुंदैत्यान्कृतोद्यमे ॥ त्रैलोक्यत्राणसहितेनारायणिनमोस्तुते ॥१७॥ किरीटिनिमहावज्रेसहस्रनयनोज्ज्वले ॥
वृत्रप्राणहरेचैंद्रिनारायणिनमोतुस्ते ॥ १८ ॥ शिवदूतीस्वरूपेणहतदैत्येमहाबले ॥ घोररूपेमहारावेनारायणिनमोस्तुते ॥१९॥ दंष्ट्राकरालवदने
शिरोमालाविभूषणे ॥ चामुंडेमुंडमथनेनारायणिनमोस्तुते ॥ २० ॥

धर्मः सुखं धनम् ॥ १७ ॥ किरीटंमुकुटंतद्वतीहेकिरीटिनि महद्वज्रमायुधंयस्याः सा महावज्रा तत्संबुद्धिः ॥ सहस्रंनयनानिसमाहृतानिसहस्रनयनम् ॥
पात्रादित्वात्ङीप्नभवति ॥ तेनउज्ज्वलतिप्रकाशतेसहस्रनयनोज्ज्वला ॥ यद्वा—सहस्रनयनेज्वलेइतिपाठः ॥ सहस्रंनयनानियस्याः सासहस्रनयना ज्वलतीतिज्वला ॥
पचाद्यच् । हेज्वले ॥ अनुपसर्गादेवज्वलितिकसंतेभ्योणस्तुवा ॥ तेनमुक्तेसोपसर्गादनुपसर्गाच्चज्वलतेः पचाद्यच्भवत्येव ॥ वृत्रोनामदैत्यः कश्चित्तस्यप्राणान्हरति हेवृत्रप्राण
हरे ॥ चकारःउक्तमनुक्तंचसमुच्चिनोति ॥ इंद्रस्येयमैंद्रीहेऐंद्रि ॥१८॥ चंडिकाशरीरोत्थाशिवदूतीतस्याः स्वरूपेणहतादैत्याययाहेहतदैत्येमहद्बलंसामर्थ्यसैन्यंचयस्याः हे
महाबले ॥ यद्वा महान्बलिरुपहारःपूजोपकरणंयस्याःमहाबलिः हेमहाबले ॥ करोपकारयोःपुंसिबलिः प्राण्यंगजेस्त्रियाम् ॥ घोरंभयानकंरूपंयस्याः हेघोररूपे ॥ महाना
रावःशब्दोयस्याःसृगालपरिवारत्वातहेमहारावे ॥ १९ ॥ दंष्ट्राभिः करालंभयंकरंवदनंयस्याः हेदंष्ट्राकरालवदने ॥ करालोदंतुरेतुंगे ॥ शिरसांमालाविभूषणंयस्याः हे

शिरोमालाविभूषणे ॥ मुंडंदैत्यंमथ्नातिमुंडमथना । मथविलोडने नंद्यादित्वात्ल्युः ॥ यद्वा कर्त्तरिबहुलंल्युट् ॥ बाहुलकात्ङीषभावः हेमुंडमथने ॥ हेचामुंडेकालि
॥ २० ॥ हेलक्ष्मि हेलज्जे हेमहाविद्येमहतिविद्ये परमात्मगोचरज्ञानरूपे ॥ यद्वा महाविद्येहेमहत्यविद्येपरमात्मेतरप्रपंचगोचरनानाज्ञानरूपे ॥ हेश्रद्धेआस्तिक्यबुद्धिस्वभा
वे ॥ हेपुष्टेशरीरावयवोपचयरूपे ॥ हेस्वधेपितृतृप्तिस्वरूपे ॥ हेध्रुवेशाश्वतिब्रह्मरूपे ॥ हेमहारात्रेहिरण्यगर्भावसानकालरूपे ॥ यद्वा महारात्रे हे अनन्यतमोधिकरण
कालरूपे ॥ यद्वा महारात्रिःसर्वप्राणिमोहकरीदेव्येवोच्यते ॥ अतएवहेमहामायेसर्वजगत्कारणभूते ॥ यद्वा हेमहत्यमाये ॥ हेमहारात्रिइतिपाठेरात्रेश्चाजसावितिसंज्ञा
यांङीप् छन्दस्येव । तिमिरपटलैरवगुंठितारात्र्यइतितुजसंतःप्रयोगः—बह्वादौकृदिकारादक्तिनोवाङीष्वक्तव्यः ॥ उणादावदेस्त्रिन् ॥ अत्रिर्मुनिः बाहुलकात् रातेरपित्रि
न् ॥ रात्रिःरात्रीच ॥ रातिसुखंरात्रिः ॥ २१ ॥ हेनारायणि हेमेधेनमोस्तुते ॥ धीर्धारणावतीमेधा ॥ अण्यतेकथ्यतेअणिःमेधादिः इक्कृष्यादिभ्यः कृदिकारादक्तिनो
वाङीष् ॥ अणी मेधादिः ईइत्यस्याः लक्ष्म्याअणीमेधादिःयणी । नराणांसमूहोनारंनारेणासमंतात्श्रितायणीनारायणी ॥ हेवरेश्रेष्ठे हेभूतेअतीते ॥ यद्वा भूतिर्भस्मानिस

**लक्ष्मिलज्जेमहाविद्येश्रद्धेपुष्टेस्वधेध्रुवे ॥ महारात्रेमहामायेनारायाणिनमोस्तुते ॥२१॥ मेधेसरस्वतिवरेभूतिबाभ्रवितामसि ॥ नियतेत्वंप्रसीदेशेना
रायणिनमोस्तुते ॥ २२ ॥ सर्वतःपाणिपादांतेसर्वतोक्षिशिरोमुखे ॥ सर्वतःश्रवणघ्राणेनारायाणिनमोस्तुते ॥ २३ ॥ सर्वस्वरूपेसर्वेशेसर्वशक्तिसम
न्विते ॥ भयेभ्यस्त्राहिनोदेविदुर्गेदेविनमोस्तुते ॥ २४ ॥**

म्पदि ॥ भूतिर्जन्म च॥ हेसंपद्रूपे ॥ ऐश्वर्यादिरूपे ॥ हेबाभ्रवि बिभर्तिबभ्रुर्विष्णुः तस्येयंभगिनीवैष्णवी हेबाभ्रवि ॥ विपुलेनकुलेविष्णौबभ्रुनाकपिलेत्रिषु ॥ हेतामसित
मोगुणसम्बंधिनि जगत्संहारकर्त्रिनियतायत्हिनियते ॥ यद्वा दैवंदिष्टंभागधेयंभाग्यंस्त्रीनियतिर्विधिः ॥ हेईशेस्वामिनि ॥ ईष्टेईशा पचाद्यच् ॥ २२ ॥ अन्तोनाशेस्वरूपेचनि
श्चयेऽवयवेवधौ ॥ समीपेवसितेबंधेयमेमृत्यावनेहसि॥सर्वतःसर्वत्रपाणिपादम्अंतोवयवोयस्याःहेसर्वतःपाणिपादान्ते ॥ पाणयश्चपादाश्चपाणिपादम्॥प्राण्यंगत्वादेकवद्भावः॥
पादांत्रेइतिपाठेतुसर्वतःपाणयश्चपादाश्चअंत्राणिचपुरीतत्संज्ञानिप्राणमूत्राणियस्याः सातथोक्ताअयंतेयंतेयंतिवाअनयाज्ञानविशेषमितिअयनीपाणिपादाद्युपचितिः नराणामय
नीनरायणीनरायण्याइयमधिदेवतानारायणी ॥ सर्वतोक्षीणिचशिरांसिचमुखानिचयस्याःसा हेतथोक्ते ॥२३॥ सर्वजगत्रयंस्वरूपंयस्याः साहेसर्वस्वरूपे ॥ यद्वा सर्वस्वरू
पंयस्याः सा हेसर्वस्यईशेसर्वेशे ॥ सर्वाःशक्तयःसामर्थ्यलक्षणाब्रह्मादिलक्षणाश्चताभिःसमन्विताहेसर्वशक्तिसमन्विते ॥ हेदेवित्वंभयेभ्यःनःअस्मान्त्राहिछांदसम्परस्मैपदम् ॥
यद्वा त्रायतेत्राः क्विपिरूपम् ॥ ताइवाचरत्राहिरक्षिकेवाचर ॥ सर्वप्रातिपदिकेभ्यः क्विब्वाचारेवा ॥ त्राहीत्यव्ययंवा ॥ हेदुर्गेदेविनमस्तेतुभ्यमस्तु भिन्नवाक्यस्थ

त्वाद्देवीतिपदद्वयंपौनरुक्त्येननदुष्यति ॥ २४ ॥ हेदेविएतत्प्रत्यक्षसिद्धंतेतववदनंसौम्यंसुंदरंलोचनत्रयेणसोमसूर्याग्निमयेनालंकृतं नः अस्मान् सर्वभीतिभ्यः समस्तभये भ्यः ॥ यद्वा—सर्वाभियोयाभ्यःताःसर्वाभियश्चताइतयश्चताभ्यः पातु रक्षतु ॥ हेकात्यायनिनमस्तेतुभ्यमस्तु ॥ ईतितत्प्योषध्यभावादन्नाभावाद्यज्ञभागाभावाद्यज्ञ भागभुजांभयाभावःप्रार्थनीयः ॥ कतःकश्चिदृषिःतस्यापत्यंस्त्रीतिगर्गादियञंतात्यञश्चप्राचांष्फतद्धितइत्यधिकृतसर्वत्रलोहितादिकतंतेभ्यइतिस्त्रियांष्फःफस्यआयनादेशःषित्वा त्ङीषूकात्यायनी ॥ यद्वा—कश्चब्रह्माअश्चविष्णुः तौअततःसततंयथाक्रमंगच्छतः इतिकात्यौसरस्वतीचरमाच कर्मण्यण् ॥ अण्णंतात्ङीप् ॥ वाणीरमयोरासमंतादय नीपरमागतिःकात्यायनी ॥ सौम्यंस्यात्सुंदरेसोमदेवताकेबुधेग्रहे ॥ २५ ॥ भद्राचसाकालीचहेभद्रकालि ॥ ज्वालाभिःकरालंतुंगमत्युग्रमतिरौद्रमशेषाणामसुराणां सूदनंहिंसकं तेतवत्रिशूलंनोस्मान्भीतेर्भयात्पातुनमस्तेतुभ्यमस्तु ॥ षूदक्षरणेहिंसायाम् अनुदात्तेत् । सूदतेसूदनंनंद्यादित्वाल्ल्युः ॥ अन्यथाऽनुदात्तेतश्चहलादेरितिप्राप्तस्ययुचः

**एतत्तेवदनंसौम्यंलोचनत्रयभूषितम् ॥ पातुनःसर्वभीतिभ्यःकात्यायनिनमोस्तुते ॥ २५ ॥ ज्वालाकरालमत्युग्रमशेषासुरसूदनम् ॥ त्रिशूलंपातुनोभीतेर्भद्रकालिनमोस्तुते ॥ २६ ॥ हिनस्तिदैत्यतेजांसिस्वनेनापूर्ययाजगत् ॥ साघंटापातुनोदेविपापेभ्योनः सुतानिव ॥ २७ ॥ असुरासृग्वसापंकचर्चितस्तेकरोज्ज्वलः ॥ शुभायखड्गोभवतुचंडिकेत्वांनतावयम् ॥ २८ ॥ रोगानशेषानपहंसितुष्टादददासिकामान्सकलानभीष्टान् ॥ त्वामाश्रितानां नविपन्नराणांत्वामाश्रिताह्याश्रयतांप्रयांति ॥ २९ ॥**

सूददीपदीक्षश्चेतिप्रतिषेधात्सूदकमितिस्यात् ॥ २६ ॥ या तावकी घंटास्वनेननादेनजगदापूर्यपूरयित्वादैत्यतेजांसिहिनस्तिसानोस्मान्पापेभ्यो दैत्येभ्यश्चपातु ॥ कंकेभ्यःकमिव ॥ जगत्कर्तृलोकः अनोभ्यःसुतानिव ॥ अत्र छांदसत्वेनअनश्शब्दात्पंचम्याभ्यम् तस्यसुपांसुलुगित्यादिनालुक् ॥ यथालोकःशकटेभ्यःसुतान्पातितथा ॥ यद्वा जनन्यांशकटेप्यनः ॥ जनकेशकटेप्यनः ॥ यथाअनःमातापिताचपापेभ्येविघ्नेभ्यःपाति ॥ २७ ॥ हेचण्डिकेअसुराणाम् असृग्रुधिरंवसामेदःतद्रूपःपंकःतेनचर्चितःव्याप्तःतेतवकरेहस्तेउज्ज्वलः ॥ यद्वा करैःकिरणैरुज्ज्वलः खड्गःनोस्माकंजगतांवाशुभायभवतु ॥ हेदेवित्वांवयंनताःप्रणताःस्मः ॥ बलिहस्तांशवःकराः ॥ २८ ॥ नॄंनये ॥ नॄणंतिन्यायेन व्यवहरंतीति नराः ॥ हेदेवित्वदाराधनेनतुष्टासंतीत्वामाश्रितानांनराणामशेषान्रोगानपहंसितेषांचकाम्यकामान्कामानर्थान्ददासि ॥ रजकस्यवस्त्रंददातीतिवत्संप्रदानाभावात्षष्ठ्येव ॥ हेदेवित्वामाश्रितानांनराणांनविपत्आपन्नाविद्यते ॥ हिहेतावनवधारणे ॥ त्वामाश्रितानराःआश्रयताम्आश्रीयमाणतांप्रयांतिआश्रीयंते आश्रयाः

कर्मण्यच् ॥ अन्यैराश्रीयमाणत्वांसेव्यमाननांभजंतीत्यर्थः ॥ राजत्वंदेवत्वंवाप्राप्नुवंतीतिभावः ॥ २९ ॥ हेअंबिके देविअद्येदानींत्वयाआत्मतनुंनिजतनुंबहुधाबहुप्रकारैः अनेकैःब्रह्माण्यादिशक्तिरूपैःकृत्वाधर्मद्विषांयज्ञादिकर्मद्रोहिणांमहासुराणांशुंभादीनांयत्कदनंविशसनंकृतंतदेवत्वदन्याकी त्वत्तोपराकादेवताप्रकरोतिकाकर्तुंशक्तास्तिनकापि त्वमेकाकर्तुंशक्तोषि नान्येति भावः ॥ धर्मोत्र वैदिकः ॥ पारमर्षं सूत्रम्—अथातो धर्मजिज्ञासा ॥ चोदनालक्षणोर्थो धर्म इति ॥ ३० ॥ हे देवि विवेकाःयुक्तायुक्तविचाराः दीपाइवमहातमःपटलपाटनपटवःतेषु ॥ विद्यासु चतुर्दशसु दीपायमानासु आन्वीक्षिक्यादिषु ॥ यद्वा विद्यासु ज्ञानप्रदमंत्ररूपासु शास्त्रेषुमनुस्मृत्यादिषु तथाद्येषुवाक्येषुवैदिकेषुपुराणेषुविद्यमानेषु ॥ अनादरेसप्तमी ॥ तान्यनादृत्यतज्जन्यविवेकमपनीय ॥ अतिमहांधकारेममत्वगर्त्ते एतद्विश्वम्अतीव विभ्रामयसि ॥ सा त्वदन्याका ॥ त्वमेवविष्णुमायाविश्वंमोहयसिममत्वेयोजयसि नान्या ॥ विभ्रामयसीत्यनित्योमितांह्रस्वः ॥ यद्वा हे देवि आद्येषु

**एतत्कृतंयत्कदनंत्वयाद्यधर्मद्विषांदेविमहासुराणाम् ॥ रूपैरनेकैर्बहुधात्ममूर्तिंकृत्वांबिकेतत्प्रकरोतिकान्या ॥ ३० ॥ विद्यासुशास्त्रेषुविवेकदीपेष्वाद्येषुवाक्येषुचकात्वदन्या ॥ ममत्वगर्तेतिमहांधकारेविभ्रामयस्येतदतीवविश्वम् ॥ ३१ ॥ रक्षांसियत्रोग्रविषाश्चनागायत्रारयोदस्युबलानियत्र ॥ दावानलोयत्रतथाब्धिमध्येतत्रस्थितात्वंपरिपासिविश्वम् ॥ ३२ ॥ विश्वेश्वरीत्वंपरिपासिविश्वंविश्वात्मिकाधारयसीतिविश्वम् ॥ विश्वेशवंद्याभवतीभवंतिविश्वाश्रयायेत्वयिभक्तिनम्राः ॥ ३३ ॥**

वाक्येषु शास्त्रेषुशोभनेषुआर्षेषुशास्त्रेषु या वित्सर्वविद्विदुषीवा त्वद्देवीतः अन्याका नकापि ॥ त्वमेवविन्नान्येतिभावः ॥ अथचहेदेविएतद्विश्वंकर्मअतिमहांधकारे तमोगुणरूपे ॥ ममेत्यव्ययम् ॥ ममत्वंगर्त्तइव तस्मिन्ममत्वगर्त्तेमोहकूपेअतीवविभ्रामयसिव्यालोडयसि या सा त्वदन्या नास्ति ॥ विभ्रामयतीतिअन्यशब्दस्यशेषत्वात्प्रथमपुरुषः ॥ त्वदन्यःकोभुंक्तेमदन्यःकोभुंक्तेमदन्योन्योभुंक्तेत्वदन्योन्योभुंक्तेइतिवत् ॥ ३१ ॥ हेदेवि त्वंतत्रचतत्रस्थितासती विश्वं पारिपासि ॥ क्वचक्वचेति ॥ यत्रचरक्षांसिदैत्याःउग्रविषाःनागाःतक्षकादयः यत्रच अरयः शत्रवः यत्रचदस्युबलानि चोरसमूहाः यत्रचदावानलः तथायत्र चाब्धिमध्यं तत्रसर्वत्रउपद्रवप्रसंगेस्मृतासतीपतितान्रक्षसीत्यर्थः ॥ दवदावौवनारण्यवह्नी ॥ ३२ ॥ हेदेवित्वंविश्वेश्वरीइतियदतःत्वंविश्वंपरिपासि ॥ यद्वा विश्वेश्वरीविश्वव्यापिनीअसि अतःविश्वं परितोरक्षसि ॥ यद्वा हेविश्वेश्वरि इतिपाठः ॥ हेदेवि त्वंविश्वात्मिकासि इतिहेतोःविश्वंधारयसि ॥ भवती विश्वस्यईशः

स्रष्टारंक्षितासंहर्ताचब्रह्मादिःतस्यवंद्याअभिवादनीयास्तुत्याचवर्तते ॥ हेदेवित्वतत्वयित्वयिविषयेभक्तिनम्राःस्युःतेविश्वस्याश्रयाआधारभूताः जगतांधारयितारोभवंतीत्यर्थः ॥ ३३ ॥ हेदेवित्वंनोस्माकंप्रसीद ॥ यथैवाधुनाइदानींशुंभाद्यसुरवधाद्धेतोःपर्यपालयःतथैवाग्रेपिसंभावितायाअरिभीतेःनित्यंपरिपालय ॥ हेदेवित्वंसर्वजगतांपापानि प्रशमं क्षयम्आशुक्षिप्रंनय ॥ नयतिर्द्विकर्मकः ॥ अथचलोकानाम् ॥ अत्रह्यधर्मेउत्पातशब्देनविवक्षितः ॥ नाशहेतुत्वात्तस्यपाकः परिणामःतेनजनितानुपसर्गानुपसर्गानुपद्रवान्वध पातादीनाशुप्रशांतिंप्रापयेतिवयंदेवाःत्वदेकशरणाःप्रार्थयामहे ततःप्रसीदेत्यर्थः ॥ आशुउत्पातेत्यत्रसंधिरविवक्षितः ॥ आशुह्युत्पातेतिवापाठः ॥ ३४ ॥ विश्वस्यार्तिहरति हेविश्वार्त्तिहारिणित्वंप्रणतानांभक्तिनम्राणांप्रसीद ॥ त्रयोलोकास्त्रैलोक्यंचातुर्वर्ण्यादित्वात्स्वार्थेष्यञ् ॥ तत्रवसंतियेतेषांतैर्वा हेईड्यस्तुत्ये॥कृत्यानांकर्त्तरिवाषष्ठी ॥ लोकानां वरदाऽभीष्टदाभव ॥ ३५ ॥ हेसुरगणाः अहंयुष्माकंवरदास्मिप्रीतास्मियंवरंमनसाइच्छथ ॥ तंजगतामुपकारकंवरंवृणुध्वम्अहंप्रयच्छामि ॥ दाणोयच्छः ॥ वृञ्वरणे आ त्मनेपदंध्वम् ॥ सवाभ्यांवामौ ॥ स्वादिभ्यःश्नुः ॥ वृणीध्वमितिपाठेक्र्यादिः .लोटोध्वम् ॥ ईहल्यघोःश्नादीनांह्रस्वः॥यंतमितिपुंसि॥देवाहतेवरश्रेष्ठेत्रिषुक्लीबंमनाक्प्रिये ॥

देविप्रसीदपरिपालयनोरिभीतेर्नित्यंयथासुरवधादधुनैवसद्यः ॥ पापानिसर्वजगतांप्रशमंनयाशुउत्पातपाकजनितांश्चमहोपसर्गान् ॥ ३४ ॥ प्रण तानांप्रसीदत्वंदेविविश्वार्तिहारिणि।त्रैलोक्यवासिनामीड्यलोकानांवरदाभव ॥ ३५॥ ॥ श्रीदेव्युवाच ॥ ॥ वरदाहंसुरगणावरंयंमनसेच्छथ ॥ तंवृणुध्वं प्रयच्छामि जगतामुपकारकम् ॥ ३६ ॥ ॥ देवाऊचुः ॥ ॥ सर्वबाधाप्रशमनंत्रैलोक्यस्याखिलेश्वरि ॥ एवमेतत्त्वयाकार्यमस्मद्वैरिविना शनम् ॥ ३७॥ ॥ श्रीदेव्युवाच ॥ ॥ वैवस्वतेंतरेप्राप्तेअष्टाविंशतिमेयुगे ॥ शुंभोनिशुंभश्चैवान्यावुत्पत्स्येतेमहासुरौ ॥ ३८॥

वृणुध्वंप्रार्थयध्वमित्यर्थः ॥ ३६ ॥ हेअखिलस्यविश्वस्येश्वरिव्यापिकेहेत्रैलोक्यस्वामिनित्वयात्रैलोक्यस्यसर्वबाधाप्रशमनंसर्वदुःखोपशमः॥सर्वाबाधेतिपाठे—आङभिव्याप्तौ॥ आसमंताद्बाधाआबाधा ॥ अस्माकंवैरिणःदैत्याःतेषांविनाशनमेवंविधंजगदुपकारकंकार्यकर्तव्यमितिवरप्रार्थनम् ॥ यद्वा हेदेविअखिलेश्वरि त्वयात्रैलोक्यस्यउपकारकं कर्मएतत्कार्यकर्त्तव्यम् ॥ कीदृशंतत् ॥ सर्वबाधानांप्रशमनमस्मद्वैरिणांविनाशनम् ॥ ३७ ॥ हेदेवाःशृणुतपूर्वजगदुपकृत्यैएतत्पराक्रमामयाकृताः ॥ अतःपरम् एष्यतोपि मत्कर्तव्यान्जगदुपकारान्भवतामपितोषायकथयामि ॥वैवस्वतमन्वन्तरेभविष्यत्यष्टाविंशतिमेयुगेप्राप्तेसतिशुम्भोनिशुम्भश्चान्यावेवनत्विदानींनिहतौयौ ॥ ततोन्यावेवशुम्भनि शुम्भनामानौदैत्यौउत्पत्स्येतेउद्भविष्यतः॥अष्टभिरधिकाविंशतिःअष्टाविंशतिः ।द्व्यष्टनःसंख्यायामित्यात्वम्।अष्टाविंशतेर्युगानांकृतादीनांपूरणंयद्युगंविष्णोरष्टमावतारोपलक्षितं तदष्टाविंशतितमम्।तस्यपूरणेड्डिनिड्प्रत्ययस्यविंशत्यादिभ्यस्तमडन्यतरस्यामितितमडागमः॥तत्रपृषोदरादित्वात्तशब्दलोपः॥यत्तुकश्चिदाह-माह्मानेस्त्रियांभावेसम्पदादि

त्वांतत्क्विप् ॥ मानंमाअष्टाविंशतिर्मानंयस्ययुगस्येतिवाष्टाविंशतेरेवमानंयस्ययुगस्येतिवाविगृह्यबहुव्रीहौनपुंसकेह्रस्वत्वेअष्टाविंशतिमंयुगंततःसप्तम्येकवचनेअष्टाविंशतिमेइति ॥ तावन्मतेःक्विपिघुमास्थादिनाइत्त्वप्रसंगोदुर्निवारस्तिष्ठतु ॥ युगमन्यपदार्थःकथंस्यात् ॥ यावतायुगानामष्टाविंशतिःतत्परिमितापियुगरूपाअष्टाविंशतिसंख्याका एवान्यपदार्थाइतिअष्टाविंशतितममेवयुगंद्वापरंतद्रूपंकलियुगादिरूपंनसेत्स्यतीति—यथापंचसुपांडवेषुपंचमः सहदेवःतत्रमडागमःपंचमाः मानंयस्यसइत्युक्तेपंचानांपूरणः सहदेवोन्यपदार्थत्वेननगृह्यते । किंतुपंचापितेमिलिताःपञ्चत्वसंख्यापरिमिताःइतिपञ्चपरिमिताःपञ्चमाइतियुधिष्ठिरादयःपञ्चाप्यन्यपदार्थतयागृह्यंते नतुसहदेवएव ॥ तस्मात्प्रागुक्तएवअष्टाविंशतिमेवाव्युत्पत्तिः । पृषोदरादित्वेनसैवसाध्या । अष्टाविंशतिमेयुगेद्वापरांतेकलियुगादौप्राप्ते ॥ यानाद्यंगेयुगः पुंसियुगंयुग्मेकृतादिषु ॥ ३८ ॥ तदाहंनन्दगोपस्यकुलेगृहे कुलंवंशेगृहेपितत् ॥ जाताउत्पन्ना यशोदायानंदगोपस्त्रियाःगर्भात्संभवोजन्मयस्याःसा ॥ विन्ध्याचलनिवासिनीसतीशुंभनिशुंभाख्यावसुरौनाशयिष्यामि ॥ ३९ ॥ अहंपुनरपिवैवस्वतमन्वंतरएवाष्टाविंशतिमेयुगेद्वापरेतीतेकलौयुगेप्राप्तेविरुद्धाप्रजासुचिंत्तिर्ज्ञानंयस्यविप्रचित्तिर्नामकश्चिद्दानवः तस्यापत्यानिवैप्रचित्ताः तानतिरौद्रेणरूपेणपृथ्वीतलेअव

**नंदगोपकुलेजातायशोदागर्भसंभवा ॥ ततस्तौनाशयिष्यामिविंध्याचलनिवासिनी ॥ ३९ ॥ पुनरप्यतिरौद्रेणरूपेणपृथिवीतले ॥ अवतीर्यहनिष्यामिवैप्रचित्तांस्तुदानवान् ॥ ४० ॥ भक्षयंत्याश्चतानुग्रान्वैप्रचित्तान्सुदानवान् ॥ रक्तादंताभविष्यंतिदाडिमीकुसुमोपमाः ॥ ४१ ॥ ततोमांदेवताःस्वर्गेमर्त्यलोकेचमानवाः ॥ स्तुवंतोव्याहरिष्यंतिसततंरक्तदन्तिकाम् ॥ ४२ ॥ भूयश्चशतवार्षिक्यामनावृष्ट्यामनंभसि ॥ मुनिभिः संस्तुताभूमौसंभविष्याम्ययोनिजा ॥ ४३ ॥ ततःशतेननेत्राणांनिरीक्षिष्यामियन्मुनीन् ॥ कीर्त्तयिष्यंतिमनुजाः शताक्षीमितिमांततः ॥ ४४ ॥**

तीर्यप्रादुर्भावमुपेत्यहनिष्यामि ॥ तुस्याद्भेदेवधारणे ॥ ४० ॥ तान्वैप्रचित्तान्महासुरानुउग्रान् रौद्रान्भक्षयंत्याः ममदंताःरक्ताआरक्ताएवभविष्यन्ति ॥ अतएवदाडिमीपुष्पवद्रुणवर्णाः भविष्यंति ॥ ४१ ॥ ततोहेतोःमांस्तुवंत्यःदेवताःस्वर्गेसततंशश्वत्रक्तदंतिकासंज्ञयाव्याहरिष्यंतिकथयिष्यंतिदेवाएवदेवताः ॥ स्वार्थेतल् ॥ तथामानवाश्चमर्त्यलोकेभुविमांसततंस्तुवंतःरक्ताःदंतायस्याःसारक्तदन्तिकातांस्तोष्यंति ॥ ४२ ॥ भूयश्चपुनरपिशतंवर्षाणिपारिमाणंयस्याःशतवार्षिकी ॥ तदस्यपरिमाणमितिवुञ् ॥ तद्धितार्थेसमासः ॥ वर्षास्याभविष्यतीत्युत्तरपदवृद्धिः ॥ वर्षाल्लुक्चेतिपाक्षिकोलुक् ॥ स्त्रियां ङीप् ॥ तस्यामनावृष्टौसत्यामनंभसिनदीतडागादावपिजलशून्यायांभुमौमुनिभिःसंस्तुता अयोनिजासम्भविष्यामिस्वयमेवाविर्भविष्यामि ॥ नआसमन्ताद्वृष्टिरनावृष्टिः ॥ यद्वा—नास्त्येवासमंताद्वृष्टिर्यस्यामीतौसाऽनावृष्टिःतस्याम् ॥ संस्तुतासंस्मृतेतिपाठद्वयम् ॥ ४३ ॥ ततःप्रादुर्भावानंतरंनेत्राणांशतेनस्तोतॄन्मुनीन्निरीक्षिष्यामीतियततोहेतोर्मांमनुजाःशतमक्षीणियस्याःशताक्षीतामितीत्थमन्वर्थसंज्ञयाकीर्त्तयिष्यंति ॥ ईक्षदर्श

नेअनुदात्तेतवछादसंपरस्मैपदम् ॥ निरीक्षिष्येयतोमुनीनितिवापाठः ॥ ४४ ॥ हेसुराःततःशताक्षीतिसंकीर्त्तनादनंतरमहमात्मदेहसमुद्भवैर्ममशरीरादुत्पद्यमानैः शाकैः प्राणधारकैर्हरितकैःपत्राद्यैःसाधनैरावृष्टेःभविष्यंतींवृष्टिमवधिंकृत्वायावद्वृष्टिर्भवतितावंतंकालमखिलंसमस्तंलोकंभरिष्यामिपोषयिष्यामि । डुभृञ्धारणपोषणयोःक्रैंद्धनेःस्ये इतीडागमः॥अथोशाकंहारितकम्॥शाकाख्यंपत्रपुष्पादि॥यदाहुः पत्रमूलकरीराग्रफलकांडास्थिरूढकाः॥त्वक्पुष्पंकवकंचेतिशाकंदशविधंस्मृतम् ॥ ४५॥ तदाभुविशाकंभरीतिविख्यातिंसंज्ञांचयास्यामिप्राप्स्यामि ॥ तत्रैवतदैवचदुर्गमाख्यं महासुरं दुर्गमंनाममहांतमसुरंवधिष्यामि ॥ जनिवध्योश्चेतिनिर्देशाद्वधिः प्रकृत्यंतरमस्तीतिविज्ञेयम् ॥ वधहिंसायांभ्वादिःपरस्मैपदी॥हनिष्यामीतिवापाठः॥शाकमितिमांतमव्ययंचास्ति।बिभर्तिइतिभारिः। सर्वधातुभ्यइःकृदिकारादक्तिनोवाङीष्वक्तव्यःसुप्सुपेतिसमासः॥शाकंभारिः॥ यद्वा फलग्रहिरात्मंभरिश्चेतिचकारोनुक्तसमुच्चयार्थः ॥ तेनलोकभरणार्थंस्वशरीरोद्भवानिशाकानि बिभर्तिशाकंभारिः ॥ इप्रत्ययः उपपदस्यमुमागमश्च ॥ पाठाव्या

ततोहमखिलंलोकमात्मदेहसमुद्भवैः ॥ भरिष्यामिसुराः शाकैरावृष्टेः प्राणधारकैः॥४५॥ शाकंभरीतिविख्यातिंतदायास्याम्यहंभुवि॥तत्रैवचवधिष्यामिदुर्गमाख्यंमहासुरम् ॥दुर्गादेवीति विख्यातं तन्मे नाम भविष्यति ॥ ४६ ॥ पुनश्चाहंयदाभीमंरूपंकृत्वाहिमाचले ॥ रक्षांसिभक्षयिष्यामि मुनीनांत्राणकारणात् ॥४७॥तदामांमुनयःसर्वेस्तोष्यंत्यानम्रमूर्तयः॥भीमादेवीतिविख्यातंतन्मेनामभविष्यति ॥ ४८ ॥ यदारुणाख्यस्त्रैलोक्ये महाबाधांकरिष्यति ॥ तदाहंभ्रामरंरूपंकृत्वासंख्येयषट्पदम् ॥ ४९ ॥

ख्याश्चधातूनांदृश्यंतेरश्चरिणः क्वचित् ॥ तस्माद्दुर्गासुरवधाद्धेतोर्विख्यातंप्रसिद्धंमेदुर्गादेवीतिविख्यातंनामधेयंभविष्यति ॥ दुर्गासुरोहंतव्यत्वेनयस्याः सादुर्गा ॥ अर्शआदित्वान्मत्वर्थीयोऽच्स्त्रियांटाप् ॥ ४६ ॥ हेदेवाःपुनश्चयदाहिमाचलेभीमंघोरंरूपंकृत्वारक्षोभ्यस्त्रस्तानांमुनीनांत्राणकारणाद्धेतोः रक्षांसिराक्षसान्भक्षयिष्यामि ॥ क्षपयिष्यामीतिपाठेक्षयंप्रापयिष्यामीतिप्रातिपदिकाद्धात्वर्थेबहुलमिष्ठवच्चेतिणिच् । अथवाक्षयप्रेरणेचुरादिः । प्रेरयिष्यामीत्यर्थः ॥ ४७ ॥ तदामांदेवीमानम्रमूर्त्तयः भक्तिप्रह्वकायाःसन्तःसर्वेऽपिमुनयोवसिष्ठादयःस्तोष्यंति ॥ तत्ततोभीमरूपेणरक्षोभक्षणाद्धेतुतःविख्यातंप्रसिद्धंभीमादेवीतिविश्रुतंनामभविष्यति ॥ बिभ्यत्यस्मादितिभीमम् ॥ भीमादयोपादानेनिपातितः ॥ ४८ ॥ हेदेवायदात्रैलोक्येऽरुणोनाममहासुरोमहाबाधांमहतींपीडांकरिष्यति ॥ लोकान्वधिष्यतेअतितदांतदाहमसंख्येयषट्पदंभ्रामरंरूपंभ्रमरसम्बंधिनींमूर्त्तिंकृत्वात्रैलोक्यस्यहितायतंअरुणमहासुरं वधिष्यामि तदा लोकाः सर्वत्र मांभ्रामरीत्येवंस्तोष्यंतिभ्रमररूपेयमाकृत्याभ्रामरी

देवी ॥ असंख्येयाः संख्यातुमशक्याः षट्पदा भ्रमरमूर्तिर्भूत्वा अरुणासुरं हनिष्यति ॥ ततः सा भ्रामरीतिनाम्ना लोकैः संकीर्तिष्यते सर्वत्रेत्यर्थः अरुणस्यापत्यंपुमानारुण इतिच्छेदे अतइञ्‌बाधित्वाशिवादित्वादण्वा ॥ ४९ ॥ ५० ॥ इदानींदेव्यवताराणांतत्कार्याणांचानंत्यात्साकल्येनवक्तुमशक्यत्वात्संक्षिप्यतत्कथामुपसंहरति ॥ हेदेवाः इत्थमुक्तानुसारेणप्रकारेणयदायदादानवेभ्यउत्तिष्ठतिउत्थास्यतिवादानवोत्थादानवेभ्यः समुद्भवाबाधापीडालोकानांभविष्यतिउत्पत्स्यते तदातदाऽहंतत्तत्कार्यानुरूप मवतीर्यप्रादुर्भावमवाप्यअरिसंक्षयंशत्रुविनाशंकरिष्यामि ॥ दानवोत्थेतिसुपिस्थः कः कर्तरि ॥ ५१ ॥ इतिमा० रा० श्रीमदु० शन्तनु० देवीमा० टीकायांनारायणीस्तुतिर्नामाष्टाशीतितमोध्यायः ॥८८॥ श्रीदेव्युवाच ॥ यद्यपिप्रागपिदेवान्देव्येवोवाच ॥ तथाप्यध्यायादौदेवीवचनस्यप्राधान्यंध्वनयितुं देवीमहात्म्याध्ययनश्रवणादिफलप्राप्तिप्रामाण्यंचदर्शयितुंदेव्येवोचितांवाचं देवानुक्तवती ॥ यः पुरुषः समाहितः भक्तिश्रद्धान्वितोभूत्वाएभिः प्रागुक्तैः स्तवैः स्तोत्रैः पुनःपुनः नित्यमविकल्पितंयथाभवतितथाशब्दद्वा मां देवींस्तोष्यतेतस्यपुंसः सकलांबाधां शमयिष्यामि असंशयंसंशयाभावः । अर्थाभावेव्ययीभावः ॥ यद्वा असंशयंयथास्यात्तथास्तोष्यते क्रियाफलेकर्तृगते ञित्वादात्मनेपदम् ॥

त्रैलोक्यस्यहितार्थायवधिष्याामिमहासुरम् ॥ भ्रामरीतिचमांलोकास्तदास्तोष्यंतिसर्वतः ॥ ५० ॥ इत्थंयदायदाबाधादानवोत्थाभविष्यति ॥ तदा तदावतीर्याहंकरिष्याम्यरिसंक्षयम् ॥ ५१ ॥ ॥ इतिश्रीमार्कंडेयपु० दे० नारायणीस्तुतिर्नामाष्टाशीतितमोऽध्यायः ॥८८॥ श्रीदेव्युवाच ॥ एभिः स्तवैश्चमांनित्यंस्तोष्यतेयः समाहितः ॥ तस्याहंसकलांबाधांनाशयिष्याम्यसंशयम् ॥ १ ॥ मधुकैटभनाशंचमहिषासुरघातनम् ॥ कीर्त्तयिष्यंतियेतद्वद्वधंशुम्भनिशुंभयोः ॥ २ ॥

एभिरितिब्रह्मकृतैरिन्द्रादिदेवकृतैश्च ॥ हंसः सूर्यः परमात्मा । असावादित्योब्रह्मेतिश्रुतेः । हंसस्यकलाहंसकला ॥ बाध्यंते प्राणिनोनया बाधासंसृतिः ॥ अविद्यमानाहंसकलाब्रह्मविद्यायस्यांसाअहंसकलाबाधामेहरूपाममतासंसृतिः तांबाधामसंशयंशमयिष्यामीत्यपिमुक्तिकामैरवगंतव्यम् । रविश्वेतच्छदौहंसौ ॥ यद्वा एभिः स्तवैर्मायः स्तोष्यतेतस्याहंकारकृतांसकलांबाधांसंसृतिंशमयिष्यामि ॥ १ ॥ त्रयाणामन्वयैक्यम् ॥ येपुरुषाएकचेतसः संतः सावधानाः संतोष्टम्यांनवम्यांचतुर्दश्यांच पक्षद्वयेपिविशेषानुक्तितः यथाक्रममनपेक्ष्यमधुकैटभनाशंचमहिषासुरघातनंचतद्वच्छुंभनिशुम्भयोर्वधंचभक्त्याकीर्तयिष्यंतिपठिष्यंतितद्वदेवयेश्रोष्यंतिभक्त्याममममाहात्म्यमुत्तमं पुण्यदंसर्वकामदुघं तेषांदुष्कृतंदुरितंसर्वसंचितंनकिंचिदपिभविष्यतिदुष्कृतोत्थाआपदश्चनभविष्यंतिविनंक्ष्यंतीत्यर्थः ॥ न तेषांदारिद्र्यंभविष्यति आढ्यतैवभविष्यतीत्यर्थः नचतेषामिष्टैः सहचेतनैरचेतनैश्चपुत्रादिभिर्धनादिभिश्चवियोजनंवियोगोभविष्यति ॥ मधुकैटभयोर्नाशोयस्मिन्ग्रन्थेसतथोक्तः ॥ हननंघातः तस्यकरणंघातनं

ण्यंताल्ल्युट् ॥ महिषासुरस्यघातनम्॥सूदनमितिवापाठः॥षूदक्षरणेहिंसायांच ॥ वधोयस्मिन्ग्रंथेप्रतिपाद्यते सवधः ॥ अर्शआदित्वादच्तम्॥शुम्भनिशुम्भयोरितिद्विवचनेन वधद्वयंसूच्यते ॥ तेनवधानांवैषम्यादष्टम्यादिदिनत्रयेणयथाक्रमकीर्तनशंकापिदूरीकृता ॥ एकमनन्यवृत्तिचेतोयेषांते ॥ भजनंभक्तिरनन्यशरणतयाश्रयणम्॥महांतआत्मानः अवतारायस्याःसामहात्मादेवीतस्याभावःमाहात्म्यम् ॥ २ ॥ ३ ॥ ४ ॥ येममामाहात्म्यंकीर्तयिष्यंतिस्तोष्यंतिचतेषांकदाचिदपिशत्रुतोभयंनसंभविष्यति॥दस्युतःतस्कर तोपिवान॥राजतोपिनृपान्न नशस्त्रतःआयुधतःनअनलतोग्नितःनतोयौघात्जलप्रवाहात्।नसम्भविष्यतीत्यनेनसर्वत्रसम्बध्नाति ॥५॥ तस्माद्वांछितार्थसाधनत्वाद्धेतोःसमाहितैः सावधानैःकृतप्रयत्नैःपुंभिःपरंप्रकृष्टंमहत्पूजनीयं स्वस्त्ययनंक्षेमकरमयंनंवर्त्ममदेव्याएतन्माहात्म्यंग्रन्थसंदर्भरूपंभक्त्यापठितव्यंश्रोतव्यंच ॥ एतन्माहात्म्य मितिबहुव्रीहिः ॥ ग्रन्थसंदर्भरूपोऽन्यपदार्थः ॥ शब्दस्यैवपठनश्रवणयोग्यत्वेनविषयभावात् ॥ एतदितितुपृथक्पदत्वेमाहात्म्यंप्रतिपाद्यंतद्यत्रास्तिग्रन्थबंधेसोप्युपचारा

अष्टम्यांचचतुर्दश्यांनवम्यांचैकचेतसः ॥ स्तोष्यंतिचैवयेभंक्त्याममममाहात्म्यमुत्तमम् ॥३॥ नतेषांदुष्कृतंकिंचिद्दुष्कृतोत्थानचापदः ॥ नभविष्य तिदारिद्र्यंनचैवेष्टवियोजनम् ॥ ४ ॥ शत्रुतोनभयंतेषांदस्युतोवानराजतः ॥ नशस्त्रानलतोयौघात्कदाचित्संभविष्यति ॥ ५ ॥ तस्मान्ममैतन्मा हात्म्यंपठितव्यंसमाहितैः ॥ श्रोतव्यंचसदाभक्त्यापरंस्वस्त्ययनंमहत् ॥ ६ ॥ उपसर्गानशेषांस्तुमहामारीसमुद्भवान् ॥ तथात्रिविधमुत्पातंमाहा त्म्यं शमयेन्मम ॥ ७ ॥ यत्रैतत्पठ्यतेसम्यक्नित्यमायतनेमम ॥ सदानतद्विमोक्ष्यामिसांनिध्यंतत्रमेस्थितम् ॥ ८ ॥

न्मत्वर्थीयेनअर्शआद्यचावामाहात्म्यशब्देनोच्यतइतिपठनश्रवणयोग्यंद्रष्टव्यम् ॥ स्वस्त्याशीःक्षेमपुण्येषुमंगलेचाव्ययंस्मृतम् ॥ ६ ॥ ममदेव्याःमाहात्म्यं कर्तृ भक्तितः पठतांभक्तितःशृण्वतांचपुंसांमहामारीसमुद्भवान्सर्वानुपसर्गानुपद्रवान् शमयेद्दूरीकुर्यात् ॥ तथातेषांपुंसांत्रिविधमुत्पातमाध्यात्मिकमाधिदैविकमाधिभौतिकम् ॥ आध्यात्मिकं शरीरोत्पन्नंरागद्वेषादिकंव्याध्यादिकंच ॥आधिभौतिकंभूतप्रेतादिकजनितंभयभ्रमादिकम् ॥आधिदैविकंदैवकृतवज्रपातादिकंदारिद्र्यादिकंच ॥ यद्वा भूर्भुवःस्वःसम्भवमुत्पा तत्रयंशमयेत् ॥ भौमंभूकंपादिकमांतारिक्षमनभ्रगर्जनादि स्वर्लोकजनितमसकृदनेकोडुपतनम् ॥ महामारीति ॥ मृङ्प्राणत्यागेणिजंतात्कृष्यादिभ्यःछांदसोगुणः ॥ यद्वा औणादिकःसर्वधातुभ्यइन् ॥ स्त्रियांकृदिकारादक्तिनोवाङीप् ॥ महतीमारीमहामारी ॥ अन्येषामपिदृश्यतइतिपूर्वपददीर्घः ॥ महामार्याःसमुद्भवाः ॥ यद्वा मरणंमरः ऋदो रप् ॥ मरस्येयं प्रवृत्तिर्मारी ॥ यद्वामारयतिमारःकालःमारस्यभावःमार्यभावेष्यञ् ॥ मार्यमेवमारीस्त्रियांषित्वान्ङीप् ॥ ७ ॥ यत्रममायतनेगृहेप्रतिमादिमंदिरेएतत्मागु

कंचरितत्रयोपेतंमाहात्म्यंनित्यंप्रतिदिनंसम्यगर्थतःपदतश्चशुद्धंपठचतेभक्तितःपुंभिःतदायतनंसदानविमोक्ष्यामिनत्यक्ष्यामि।।तत्रगृहेखलुमेदेव्याःसान्निध्यंसन्निधानंसमवस्थानं स्थितंस्थितिमदभूत् ॥ ८॥ तस्मात्बलिप्रदानेपूजायामग्निकार्येमहोत्सवेचसर्वमेतन्ममचारितमुच्चार्यमवश्यंपठनीयम् ॥ कहलोर्ण्यत्।श्राव्यमवश्यंश्रोतव्यंच।ओरावश्यकेण्यत् ॥ यद्वाण्यंतादचोयत्॥श्राव्यंश्रावयितव्यंसर्वजपनीयम्॥एकदेशजपेतुछिद्रतास्यात्॥ महानवम्यादौछागमेषमहापशुभिर्बलिदानंदेवतोद्देशेनपशुसमर्पणम्॥ददातेल्युँट्॥पूजापुष्पोपहारदीपादिसमर्पणम्॥यद्वा अलंकारवस्त्रस्रक्चन्दनवाहनच्छत्रचामरादिभिः कुमारीसुवासिनीसमर्चनंपूजा ॥ अग्निकार्यंफाल्गुनेमासिअग्निज्वालार्चनंदेवीमाहात्म्यरूपमालामन्त्रपुरश्चरणांतेविहितहोमोऽग्निकार्यम् ॥ एतत्त्रयलक्षणोमहोत्सवः ॥ यद्वा चैत्रेवसंतोत्सवः ॥ वैशाखेवारणपुष्पप्रचायिकोत्सवः ॥ ज्येष्ठेजलक्रीडोत्सवः ॥ आषाढेइन्द्रध्वजोत्थानोत्सवः ॥ श्रावणेदोलोत्सवः ॥ भाद्रपदेइन्द्रपाणिधनुरर्चनोत्सवः ॥ आश्वयुजिशारदोत्सवः ॥ कार्त्तिकेदीपोत्सवः । मार्गशीर्षे मनूदयोत्सवः।पौषेनिधिपूजोत्सवः ॥ माघेमेरूत्सवः ॥ फाल्गुनेगन्धर्वोत्सवः ॥ एतेषुसंपूर्णदेवीचारितंपठनीयमितिभावः ॥ यद्वा—महोत्सवः सर्वश्रुतिपारायणम्॥यद्वा—वदतेः कर्त्तरिक्विप्। वदतीष्टदेवतामितिउत्

बलिप्रदानेपूजायामग्निकार्येमहोत्सवे ॥ सर्वंममैतच्चरितमुच्चार्यंश्राव्यमेवच ॥ ९ ॥ जानताजानतावापिबलिपूजांतथाकृताम् ॥ प्रतीच्छिष्याम्यहंप्रीत्यावह्निहोमंतथाकृतम् ॥ १० ॥

देवीप्रणवः ॥ महान्उत्मन्त्रोयत्रसमहोत्सचासौसवश्चेतिमहोत्सवः।मन्त्रदीक्षाभ्यंयज्ञःतस्मिन्॥यद्वा-उन्दीक्लेदने।उन्दनम्उत्।स्त्रियांभावेसम्पदादिभ्यःक्विब्वावक्तव्यः ॥उदःसवोदीक्षायज्ञः उत्सवःसुधोत्सवः सुधोत्सवोयत्रमन्त्रग्रहेसमहोत्सवःतस्मिन्॥९॥तथातेनप्रकारेणइतिकर्त्तव्यतांगुरूपदिष्टेष्टदेवताराधनसामग्रीभावनीयोपक्रमोपसंहृतिक्रियाक्रमंजानताअजानतावापिभक्तिमतापुंसाकृतंबालिंबलिप्रदानंतथातेनकृतांपूजांच ॥ तथातेनकृतंवह्नौहोमतिलमध्वादिहोमद्रव्यप्रक्षेपंचप्रीत्याहंप्रतीच्छिष्यामिस्वीकरिष्यामि ॥ पतच्छ्रितंप्रतीच्छंस्यात् ॥ पतच्छ्रयणंप्रतीच्छा ॥ प्रतीच्छास्त्यस्यप्रतीच्छः कश्चित् ॥ अर्शआदित्वादच् ॥ ततःतद्वदाचरतीत्याचारेक्विप् ॥ सनाद्यंतत्वाद्धातुत्वात्प्रतीच्छधातोर्भविष्यतिकालेलृट्स्यप्रत्ययः।मि इडागमः । अतोलोपः । इण्कोः । आदेशप्रत्यययोः षत्वम् ॥ प्रतीक्षिष्यामीतिपाठेईक्षदर्शनेअनुदात्तेत्त्वनिबंधनमात्मनेपदविधानमनित्यमितिचक्षिङोङित्करणंज्ञापकमित्युक्त्वात्परस्मैपदम् ॥ बलिपूजामित्येकपदत्वेतु बलिनापशुविशसनेनसहकृतापूजाबलिपूजा ॥ बलिरूपावापूजासत्कारःताम् ॥ १० ॥

युग्मम् ॥ याचप्रसिद्धावार्षिकीमहापूजाशरत्कालेक्रियतेतस्यांविषयेममएतन्माहात्म्यंचारित्रत्रयलक्षणभाक्समन्वितः मनुष्यः पठित्वाश्रुत्वाचयथायोगंमत्प्रसादेनसर्वबाधावि
निर्मुक्तःधनधान्यसमन्वितःभविष्यातिसंशयोनात्रकर्तव्यः ॥ वर्षेणनिर्वृत्तावार्षिकीसांवत्सारिकी । तेननिर्वृत्तमितिठक् ॥ षियांङीप् ॥ सर्वाबाधेतिपाठेआसमंताद्वाआबाधा॥
॥११ ॥१२॥एतच्चारित्रत्रयलक्षणंममामाहात्म्यंभक्तितः श्रुत्वागुरुतोगृहीत्वार्थावबोधपर्यंतमधीत्यचपुमान्युद्धेनिर्भयोजायते ॥तथाममशुभाः जगदभ्युदयकरीःपृथगुत्पत्तीः
ब्रह्माण्यादिमहाशक्तिरूपप्रादुर्भूतीः श्रुत्वाहयाकलय्ययुद्धेनिभयोजायते । तथाममपराक्रमांश्चवीरकर्माणिचश्रुत्वा ॥ यद्वा-युद्धेषुममपराक्रमांश्चश्रुत्वानिर्भयोजायतेपुमान् ॥
तथाचोत्पत्तयः शुभाइतिपाठेव्यत्ययोबहुलमितिशसः प्रसंगेजसः प्रयोगः छांदसः ॥ युद्धेष्वितिबहुवचनमन्येष्वपिभयकारणेषुनिर्भयत्वार्थम् ॥ युमिश्रणेअदादिः।सम्पदादि
त्वाद्भावेस्त्रियांक्विप् ॥ यवनंयुतमिश्रणंपापसम्पर्कः तस्यांयुति ॥ यद्वा-युत्प्रबन्धनेक्र्यादिः ॥ यवनंयुद्बंधनंतस्यांयुति ॥ ओहाङ् गतौ सम्पदादित्वात्क्विप् ॥हानंहाःनिरया

शरत्कालेमहापूजाक्रियतेयाचवार्षिकी ॥ तस्यांममैतन्माहात्म्यंश्रुत्वाभक्तिसमन्वितः ॥ ११ ॥ सर्वबाधाविनिर्मुक्तोधनधान्यसमन्वितः ॥ मनु-
ष्योमत्प्रसादेनभविष्यतिनसंशयः ॥ १२ ॥ श्रुत्वाममैतन्माहात्म्यंतथोत्पत्तीःपृथक्शुभाः॥पराक्रमांश्चयुद्धेषुजायतेनिर्भयः पुमान् ॥१३॥ रिपवः
संक्षयंयांतिकल्याणंचोपपद्यते ॥ नन्दतेचकुलंपुंसांमाहात्म्यंममशृण्वताम् ॥ १४ ॥ शांतिकर्मणिसर्वत्रतथादुःस्वप्नदर्शने ॥ ग्रहपीडासुचोग्रासु
माहात्म्यंशृणुयान्मम ॥ १५ ॥ उपसर्गाः शमंयांतिग्रहपीडाश्चदारुणाः ॥ दुःस्वप्नंचनृभिर्दृष्टंसुस्वप्नमुपजायते ॥ १६ ॥

दिगतिः तस्याम् ॥ इःकामःतत्रविषये ॥ युचहाश्चइश्चयुद्धयः।तेषुयुद्धेषु ॥ १३॥ भक्तितःममाहात्म्यंशृण्वतांपुंसांरिपवःशत्रवःसंक्षयंयांति ।कल्याणंचमंगलमुपपद्यते ॥
पद्गतौदिवादिः ॥ उपसमीपंगच्छति । उपजायतेइतिवापाठः । कुलंगोत्रंचनंदते । टुनदिसमृद्धौपरस्मैपदी । कर्त्तरिकर्मव्यतिहारेइत्यात्मनेपदम् ॥ यद्वा—ण्यंतात्कर्मकर्त्तरि
यगात्मनेपदंच । संततिर्गोत्रजननकुलान्यभिजनान्वयौ ॥ कुलंगृहेचतालांकेभूमिग्राहिणितुत्रिषु ॥ १४ ॥ उत्पातादिसूचितोपद्रवाणांसर्वत्रसर्वस्मिञ्शांतिकर्मणितथादुःस्व
प्नदर्शनेदुष्टफलस्वप्नदर्शने । उग्रासुअत्यनिष्टफलासुग्रहकृतासुपीडासुममामाहात्म्यंशृणुयात्पुरुषः । ततःसर्वबाधोपशांतिर्भवतिसर्वेष्टार्थसिद्धिश्चेतिभावः ॥१५॥पूर्वोक्तंपुनर्व्यन
क्ति ॥ ममाहात्म्यश्रवणादुपसर्गाःबाधाःअतिवृष्ट्यादयःशमंयांति ॥ यद्वा उपसर्गाउत्पाताःप्रकृतिविरुद्धेतयः ॥ अजन्यंक्लीबउत्पातउपसर्गःसमंत्रयम् ॥ तथाततएवदारु
णाःभयानकाःग्रहपीडाःशन्यादिकृताबाधाःशमंशांतिंयांति ॥ नृभिर्दृष्टंदुःस्वप्नंसुस्वप्नमुपजायते ॥ दुःस्वप्नसूचितंयद्दुष्टफलंतत्सुस्वप्नसूचितमिवफलंसंपद्यतइतिभावः ॥

अतर्कितप्राप्यफलोहिमणिमंत्रौषधदेवताप्रभावः । दुःस्वप्नसुस्वप्नयोर्नियतेपुंल्लिंगत्वेपिबहुव्रीहौफलेन्यपदार्थेविवक्षितेनपुंसकतोपपत्तिः ॥ अर्धर्चादौस्वप्नशब्दोनास्त्येव॥अन्यथास्यपुंनपुंसकतोपपद्येत ॥ दुःस्वप्नश्चेतिपाठोवा ॥ १६ ॥ बालानांशिशूनांग्रहाःपीडकाःपूतनादयःश्मशानादिवासिनोहृष्टिबंधिगलबंध्यंत्रबंधिनाभिबंधिशुक्रबंध्युपस्थबंधिरुधिरशोषिपिशितशोषिमूत्रशोषिलालाशोषिप्रभृतयश्चतैरभिभूतानामाक्रांतानांशांतिकारकमुपशमनकारणंममाहात्म्यश्रवणाद्युत्तममाश्रयणीयम् ॥ किंच नृणामेककार्यकारिणांकथंचित्परकृतोच्चाटनप्रयोगतःसंघातभेदेप्रसक्तेसतिमन्माहात्म्यश्रवणमेवोत्तमंमैत्रीकरणंमित्रत्वकरणसाधनम् ॥ १७॥ दुष्टंवृत्तंचरितंयेषांतेदुर्वृत्ताःतेषामशेषाणांपरंश्रेष्ठंबलहानिकरंबलनाशहेतुः मन्माहात्म्यम् ॥ कृत्योहेतौटः ॥ किंचरक्षसांमायोपजीविनांभूतानांबालग्रहादीनांपिशाचानांपिशिताशनानांतामसानांचपीडकानामदृश्यरूपाणांममम माहात्म्यस्यपठनादेवनाशनंदूरीकरणंभवति॥ १८॥ममसांनिध्यकारकंनैकट्यकारकम् ॥ संनिधिकारकमितिपाठेपिसंनिधिःसंनिधानमितिव्याख्याश्रयणात्सएवार्थः॥यद्वा॥ संनिधिःमहानिधिःमहापद्मादिःतस्यकारकंप्रापकंपठ्यमानंसदितिभावः ॥ १९ ॥ युग्मम् ॥ पुंभिरेभिःप्रकारैर्वत्सरेणयाक्रियतेमेमह्यंप्रीतिःसास्मिन्मन्माहात्म्येसकृदेकवारमे

बालग्रहाभिभूतानांबालानांशांतिकारकम् ॥ संघातभेदेचनृणांमैत्रीकरणमुत्तमम् ॥ १७ ॥ दुर्वृत्तानामशेषाणांबलहानिकरंपरम् ॥ रक्षोभूतपिशाचानांपठनादेवनाशनम् ॥१८ ॥ सर्वंममैतन्माहात्म्यंममसंनिधिकारकम् ॥ १९ ॥ पशुपुष्पार्घ्यधूपैश्चगन्धदीपैस्तथोत्तमैः ॥ विप्राणांभोजनैर्होमैः प्रोक्षणीयैरहर्निशम् ॥ २० ॥

वउच्चारितेपठितेश्रुतेवाभक्तिमद्भिःसर्वकामदुघोपार्जितेवस्यात् ॥ पशुभिःचतुष्पद्भिःछागमेषमहिषमातंगादिभिःद्विपाद्भिर्महापशुभिश्चनरैःपुष्पैःसुरभिसंभृतैःअर्घ्यैः पूजांगैर्मधुघृतादिभिःधूपैःकर्पूरागरुमृगमदादिगर्भितैर्बहुरूपादिभिर्नानाकृतिगन्धादिभिः।चशब्दात् श्रीवासादिर्धूपागृह्यते ॥ तैर्गंधैःगन्धसारघनसाररक्तचन्दनमृगमदकंकोलकालागरुकुंकुमादिभिः दीपैःकर्पूरघृतादिप्रवर्तितैर्माणिक्यमहोभिरुपकल्पितैःसूर्यमहोभिश्चन्द्रमहोभिरुडुमहोभिःपरमात्मपरज्योतिर्भिश्चोपकल्पितैः । अतएवैवंविधैरुत्तमैःश्रेष्ठतमैः । तथा उत्तमैर्विविधैर्विप्राणांकर्तव्यैर्भोजनैःषड्रसोपेतैर्भोज्यैरन्नादिभिरुचितैः ॥ तथाविविधैर्होमैः । तथाऽहर्निशंदिवानिशंविविधैःप्रेक्षणीयैर्दर्शनीयैर्नृत्यगीतवाद्यैः ॥ तथान्यैश्चविविधैर्भोगैः । तथादानैर्मत्प्रीत्यर्थैर्विविधैः चशब्दाद्वस्त्रालंकारपूजादिभिःसाधनैर्वत्सरेणयामेप्रीतिःसकलकामदुघाभक्तैः क्रियते सास्मिन्प्राकृप्रपंचितेममामाहात्म्येसकृदेकवारं भक्त्याउच्चारितेपठितेश्रुतेवासाधयितुंसुगमेत्यर्थः ॥ यद्वा सकृत्सहाद्वित्रैःपुंभिःपंचषैःसप्ताष्टभिरेकद्वित्रिचतुरैरेकत्वयोच्चारितेश्रुतेवेत्यर्थः ॥ सहार्थेचैवकारेचसदार्थेवाव्ययंस

कृत् ॥ सकृत्सुचरितेश्रुतइतिपाठेश्रुतशब्दतःश्रवणप्राधान्यम्।सुचरितेशोभनेचरिते । प्रोक्षणीयैरहर्निशमितिपाठेतुकश्चिदाह—मन्त्रपूतजलोक्षणसंस्कृतहृतच्छागादिपशुबलिरि ति॥ तन्न ॥ पशुपुष्पार्घ्यधूपैरितिपशुग्रहणेनपौनरुक्त्यप्रसंगात् ॥ ततइत्थंत्वर्थोत्रवक्तव्यः । उक्षसिंचने । प्रत्यहंपंचामृताभिषेकैरविच्छिन्नपीयूषधाराभिषेकैर्वेति ॥२०॥ ॥ २१ ॥ ममदेव्यामाहात्म्यस्यश्रुतंश्रवणं कर्तृपापानिहरति अपनयति । नपुंसकेभावेक्तः ॥ तद्योगेषष्ठ्येव ॥ यद्वा—मममाहात्म्यंश्रुतंसत्पापानिहरति ॥ तथामज्ज तामारोग्यंप्रयच्छतिदानप्रतिग्रहाभावात्षष्ठ्येव ॥ ममजन्मनामुत्पत्तीनांब्रह्माण्यादिरूपतयाप्रादुर्भावानांकीर्तनंकथनंभूतेभ्यःहिंस्रेभ्यःभूतप्रेतपिशाचसिंहव्याघ्रग्रहादिभ्यः भक्तानांरक्षांकरोति ॥ २२ ॥ युद्धेषुयद्दुष्टदैत्यनिबर्हणंमेदेव्याःचरितंशस्त्रप्रयोगलक्षणंसंग्रामकौशलमभूत्तस्मिञ्छ्रुतेसतिश्रुतववांपुंसांयुद्धेषुततोन्यत्रचवैरिकृतंभयंनजायते। निबर्हयतिनिबर्हणम् । नन्द्यादित्वाल्ल्युः । दुष्टानां दैत्यानांनिबर्हणं चारित्रम् ॥ २३ ॥ सुमेधसामार्कंडेयेनचततःपूर्वैश्चब्रह्मर्षिभिःयाःस्तुतयःकृताःतथापिममतावर्तेमोहगर्ते निपातिताःमहामायाप्रभावेणेत्यादयःताश्चशुभांगतिंप्रयच्छन्ति । पठ्यमानाःपठद्भ्यःपुंभ्यःयाश्चब्रह्मणामधुकैटभभीतेनकृताःस्तुतयःविश्वेश्वरींजगद्धात्रीमित्यादयः । अथ

अन्यैश्चविविधैर्भोगैः प्रदानैर्वत्सरेणया ॥ प्रीतिर्मेक्रियतेसास्मिन्सकृदुच्चरितश्रुते ॥ २१ ॥ श्रुतंहरतिपापानितथारोग्यंप्रयच्छति ॥ रक्षांकरो तिभूतेभ्योजन्मनांकीर्त्तनंमम ॥ २२ ॥ युद्धेषुचरितंयन्मेदुष्टदैत्यनिबर्हणम् ॥ तस्मिञ्छ्रुतेवैरिकृतंभयंपुंसांनजायते ॥ २३ ॥ युष्माभिः स्तुतयोयाश्चयाश्चब्रह्मर्षिभिःकृताः ॥ ब्रह्मणाचकृतायास्ताः प्रयच्छंतिशुभांगतिम् ॥ २४ ॥ अरण्येप्रांतरेवापिदावाग्निपरिवारितः ॥ दस्युभिर्वावृतः शून्येगृहीतोवापिशत्रुभिः ॥ २५ ॥

चयुष्माभिरेवकृताःस्तुतयःदेव्याययाततमिदंजगदात्मशक्त्येत्यादयः—नमोदेव्यैइत्यादयश्च—देविप्रपन्नार्त्तिहरेप्रसीदेत्यादयश्च—तास्त्रिविधाःस्तुतयः ॥ २४ ॥ एकान्वय मिदंश्लोकंचतुष्टयम् ॥ अरण्येविपिनेप्रावर्त्तमानःममदेव्याएतच्चरितंस्मरन्नरःसंकटाद्दुःखघटनान्मुच्येतस्वयमेव । संकटंनातुसंबाधः । कर्मकर्त्तरिमुचेर्लिङ् ॥ तथाप्रां तरेवापिदूरेजनशून्यमार्गे ॥ प्रांतरंदूरशून्योध्वा ॥ तथादावाग्निपरिवारितःसन्नपिवा ॥ तथादस्युभिस्तस्करैर्वृतोवेष्टितोवा ॥ तथाशून्येनिर्जनप्रदेशेशत्रुभिर्गृहीतोवा ॥ तथा सिंहेनव्याघ्रेणवानुयातोनुद्रुतः ॥ तथावनहस्तिभिर्वृतोवाहंतुमनुयातः ॥ तथाक्रुद्धेनराज्ञावध्योयंवधार्होयमित्याज्ञप्तः हंतुमाज्ञापितोवा ॥ तथाबन्धगतोपिवा ॥ तथावातेन घूर्णितोव्याकुलितःवाचितोपास्तोवा ॥ महार्णवेसमुद्रेपोतेनौकाविशेषे । सांयात्रिकाःपोतवणिजःकथ्यंते । तत्रस्थितोवा।पानपात्रेशिशौपोतः ॥ तथाभृशदारुणेत्यर्थंभीषणेसं ग्रामेशस्त्रेष्वायुधेषुपतत्सु । सर्वाबाधासु सर्वाआसमंताद्बाधाःमहाबाधास्तासु ॥ सर्वबाधास्वितिपाठेसएवार्थोभवत्यदूरविकर्षात् ॥ घोरासुव्रणपीडासुवर्त्तमानोवा ॥

